मितज्ञैः मितशक्तिभिरपि दुस्साधेसस्मिन् महत्तरे उपनिषद्भाष्य-प्रकाशनकृत्ये समुद्रतरणे इव यैः कर्णधारायितं तान् प्रधानसम्पादकान् कुलपतीन् श्री. एम्. ए. लक्ष्मीताताचार्यान् प्रति हार्दं धन्यवादशतं आविष्कुर्मः। कुर्मश्च अंजलिबन्धं सादरं श्रीमद्भ्यः एम्. ए. श्रीरङ्गराजन् महोदयेभ्यः संसदध्यक्षेभ्यः सिद्धान्तरक्षणप्रणयिभ्यः ॥

वेदार्थसङ्ग्रहसुधां अथ सूत्रभाष्यम्
निर्माय तत्त्वमखिलोपनिषत्प्रमेयम्।
येन स्फुटीकृतमभूत् भुवि लक्ष्मणार्यः
सम्पत्कुमारजनकः स शुभं क्रियान्नः ॥

इति विद्वद्वशंवदः,
श्री. न. च. रघुनाथाचार्यः

# मन्त्रार्थसक्षेपरूपा विषयसूचनी

1. **ईशावास्यमिदम्** - प्रथममन्त्रे ब्रह्मोपासनांगभूतस्य कर्मानुष्ठानस्य अपेक्षिता त्रिविधत्यागबुद्धिः प्रतिपादिता ।
2. **कुर्वन्नेवेह** - द्वितीयमन्त्रे - मुमुक्षोः भक्तियोगांगतया अनुष्ठेयानां नित्यनैमित्तिक-कर्मणां यावज्जीवमनुष्ठेयत्वं निरूपितम् ।
3. **असुर्या नाम** - तृतीयमन्त्रे - उक्तकर्मानुष्ठानस्य आत्मज्ञानगर्भितत्वात्, तद्विरहेण कर्मानुतिष्ठतां अनर्थप्राप्तिः आविष्कृता ।
4. **अनेजदेकम्** - चतुर्थमन्त्रे - भगवतः सर्वाधारतया प्रतिपादितस्य उपास्यत्वसिद्धये विचित्रशक्तियोगमहिमविशेषः विवृतः ।
5. **तदेजति तन्नैजति** - पंचममन्त्रे - तस्यैव सर्वव्याप्तिरूपमहिमोक्तिः ।
6. **यस्तु सर्वाणि** - षष्ठमन्त्रे - जगतो ब्रह्मात्मकत्वभावनया सम्भावितं सर्वत्र अविजुगुप्सारूपं फलमुच्यते ।
7. **यस्मिन् सर्वाणि भूतानि** - सप्तमे - एवं जगद्ब्रह्मणोः अभेदं भावयतः शोकमोह-निवृत्तिकथनम् ।
8. **स पर्यगात् शुक्रम्**- अष्टमे - ब्रह्मणः स्वरूपविशेषः, मुमुक्षोः ज्ञानिनः आवश्यका धर्मविशेषाश्च निरूपिताः ।
9. **अन्धं तमः प्रविशन्ति** - नवमे - केवलकर्मणः केवलस्योपासनस्य वा ( अंगागि-भावविरहेण) पुरुषार्थसाधनत्वभ्रमः निराकृतः ।
10. **अन्यदेवाहुः विद्यया** - दशमे - केवलकर्मणः केवलाच्चोपासनात् अन्यदेव मोक्ष-साधनमित्युक्तम् ।
11. **विद्यां चाविद्यां च** - एकादशे - अंगागिभावेन कर्मसमुच्चितमेव उपासनं मोक्ष-साधनमिति निर्णीतम् ।

12. **अन्धं तमः** - द्वादशे - प्रकृतिबन्धविमोकब्रह्मानन्दानुभवरूपयोः सम्भूत्य-सम्भूत्योः अन्यतरस्यैव पुरुषार्थत्वभावनानिरासः ।

13. **अन्यदेवाहुः सम्भवात्** - त्रयोदशे - तथा अन्यतरापेक्षया उपासनस्य असमग्र-फलत्वनिरूपणम् ।

14. **सम्भूतिं च विनाशं च** - चतुर्दशे - उक्तोभयविधफलसमुच्चयापेक्षयैव उपासनात् समग्रपुरुषार्थलाभोक्तिः ।

15. **हिरण्मयेन** - पंचदशे - उपासकेन अनुसन्धेयः प्रार्थनाप्रकारः विव्रियते ।

16. **पूषन्नेकर्षे** - षोडशे - मुमुक्षोः आदित्यमण्डलान्तर्वर्तिभगवद्दिव्यविग्रहदर्शनप्रार्थना स्वस्य तदात्मकत्वोक्तिश्च ।

17. **वायुरनिलम्** - सप्तदशे - विरोधिस्वरूपनिरूपणेन, प्रणवानुसन्धानपूर्वकं शरणागत्या स्वीकरणप्रार्थनम् ।

18. **अग्ने नय** - अष्टादशे - अन्ते मुमुक्षुणा अनिष्टपरिहार-इष्टप्राप्तिरूपफलप्रार्थनं भगवत्सन्निधौ ।

* * *

# विषयानुक्रमणिका

**आनन्दभाष्यम्**



**सुबोधिनी**



**सप्तदशो मन्त्रः**

**प्रतिपदार्थदीपिका**

** ** ** ** **

॥ श्रीः ॥

ऋषि-च्छन्दो-देवता-विनियोग-स्वर-पद-पाठान्तरसहिता

# ईशावास्योपनिषत्

श्रीशुक्लयजुर्वेदे प्रथमशाखायां - काण्वसंहितायां - चत्वारिंशोध्यायः अस्य वेदस्य विवस्वान् ऋषिः ; अस्य अध्यायस्य दध्यङ्ङाथर्वण ऋषिः अनुष्टुप् छन्दः - आत्मा देवता - विद्यायां विनियोगः एकोनुवाकः - मन्त्रा अष्टादश - पदानि न्यूनं त्रिशतम्

## गुरुवन्दनम्

ओं अस्मद्गुरुभ्यो नमः । ओं अस्मत्परमगुरुभ्यो नमः । ओं अस्मत्सर्वगुरुभ्यो नमः । ओं विद्यादेहाय नित्यप्रबुद्धाय परमात्मने नमः । ओं नमः स्वस्ति श्रीसूर्यनारायणपरब्रह्म - दध्यङ्ङाथर्वण - याज्ञवल्क्य - श्रीकण्वादिभ्यो मुनिभ्यो महद्भ्यो गुरुभ्यः ।

## पूर्वशान्तिः

पूर्णमित्यादिशान्तिमन्त्रस्य श्रीरामचन्द्रो भगवान् ऋषिः ,- पंचपात् याजुषी निवृदन्ता शुद्धा अनुष्टुप् छन्दः एकोनचत्वारिंशदक्षराणि - ओंकारवाच्यः पूर्णः परमात्मादेवता - अध्ययनादौ शान्त्यर्थे विनियोगः ॥

॥ हरिः ओम् ३ ॥

पूर्णमदः पूर्णमिदम्पूर्णात्पूर्णमुदच्यते ।

पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ओं ३ शान्तिः शान्तिः शान्तिः ॥

पूर्णम् । अदः । पूर्णम् । इदं । पूर्णात् । पूर्णम् । उदच्यत इत्युत् अच्यते ।

पूर्णस्य । पूर्णम् । आदायेत्या दाय । पूर्णं । एव । अव । शिष्यते ॥

ओं३ । शान्तिः । शान्तिः । शान्तिः ॥

पदानि अष्टादश ।

1

ईशेत्यादि मन्त्रस्य - दध्यङ्गाथर्वण ऋषिः - चतुष्पात् याजुषी शुद्धा अनुष्टुप् छन्दः - द्वात्रिंशदक्षराणि - आत्मा देवता - विद्यायां विनियोगः ।

ईशावास्यमिदं सर्वंयत्किंच जगत्यांजगत् ।
तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद्धनम् ॥

ईशा । वास्यम् । इदम् । सर्वम् । यत् । किम् । च । जगत्याम् । जगत् ।
तेन । त्यक्तेन । भुञ्जीथाः । मा । गृधः । कस्य । स्वित् । धनम् ॥

पदानि सप्तदश ।

2

कुर्वन्नित्यादि मन्त्रस्य - दध्यङ्गाथर्वण ऋषिः - चतुष्पात् याजुषी भुरिक् अनुष्टुप् छन्दः - त्रयस्त्रिंशदक्षराणि - आत्मा देवता - विद्यायां विनियोगः ।

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतगं समाः ।
एवन्त्वयि नान्यथेऽतोऽस्ति न कर्म लिप्यते नरे ॥

कुर्वन् । एव । इह । कर्माणि । जिजीविषेत् । शतम् । समाः ।
एवम् । त्वयि । न । अन्यथा । इतः । अस्ति । न । कर्म । लिप्यते । नरे ॥

पदानि सप्तदश ।

3

असुर्या इत्यादि मन्त्रस्य - दध्यङ्गाथर्वण ऋषिः - चतुष्पात् याजुषी शुद्धा अनुष्टुप् छन्दः - द्वात्रिंशदक्षराणि - आत्मा देवता - विद्यायां विनियोगः ।

असुर्या नाम ते लोका अन्धेन तमसावृताः ।
ताग्ँस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥

असुर्याः । नाम । ते । लोकाः । अन्धेन । तमसा । आवृताः इत्याऽवृताः ।
तान् । ते । प्रेत्येति प्रऽइत्य । अभि । गच्छन्ति । ये । के । च । आत्महन् इत्यात्मऽहनः । जनाः ॥

पदानि सप्तदश ।

4

अनेजदित्यादि मन्त्रस्य - दध्यङ्ङाथर्वण ऋषिः - चतुष्पात् याजुषी निवृत् त्रिष्टुप् छन्दः- त्रिचत्वारिंशदक्षराणि - आत्मा देवता - विद्यायां विनियोगः ।

अनेजदेकम्मनसो जवीयो नैनद्देवाः आप्नुवन्पूर्वमर्षत् ।
तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥

अनेजत् । एकम् । मनसः । जवीयः । न । एनत् । देवाः। आप्नुवन् । पूर्वम् । अर्षत् ।
तत् । धावतः। अन्यान् । अति । एति । तिष्ठत् । तस्मिन् । अपः। मातरिश्वा । दधाति ॥

पदानि विंशतिः ।

5

तदित्यादि मन्त्रस्य - दध्यङ्ङाथर्वण ऋषिः - चतुष्पात् याजुषी निवृदर्धा भुरिक् अनुष्टुप् छन्दः- द्वात्रिंशदक्षराणि - आत्मा देवता - विद्यायां विनियोगः ।

तदेजति तन्नैजति तद्दूरे तद्वन्तिके ।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः॥

तत् । एजति । न । एजति । दूरे । ॐ २ इत्यूँ २ । अन्तिके ।
अन्तः । अस्य । सर्वस्य । ॐ २ इत्यूँ २ । सर्वस्य । अस्य । बाह्यतः॥

पदानि चतुर्दश ; पुनरुक्तानि पंच ; एकोनविंशतिराहत्य ।

6

य इत्यादि मन्त्रस्य - दध्यङ्ङाथर्वण ऋषिः - चतुष्पात् निवृदर्धा भुरिक् अनुष्टुप् छन्दः- एकस्त्रिंशदक्षराणि - आत्मा देवता - विद्यायां विनियोगः ।

यस्तु सर्वाणि भूतान्यात्मन्नेवानुपश्यति ।
सर्वभूतेषु चात्मानन्ततो न विजुगुप्सते ॥

यः । तु । सर्वाणि । भूतानि । आत्मन् । एव । अनुपश्यतीत्यनुऽपश्यति ।
सर्वभूतेष्विति सर्वऽभूतेषु । च । आत्मानम् । ततः । न । वि । जुगुप्सते ॥

पदानि चतुर्दश ।

7

यस्मिन्नित्यादि मन्त्रस्य - दध्यङ्ङाथर्वण ऋषिः - चतुष्पात् याजुषी निवृदर्षा भुरिक् अनुष्टुप् छन्दः- एकत्रिंशदक्षराणि - आत्मा देवता - विद्यायां विनियोगः ।

यस्मिन्त्सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोक एकत्वमनुपश्यतः ।।

यस्मिन् । सर्वाणि । भूतानि । आत्मा । एव । अभूत् । विजानत इति विऽजानतः ।
तत्र । कः । मोहः । कः । शोकः । एकत्वमित्येकऽत्वम् । अनुपश्यत इत्यनुऽपश्यतः ।।

पदानि चतुर्दश ।

8

स इत्यादि मन्त्रस्य - दध्यङ्ङाथर्वण ऋषिः - पंचपात्मिश्रा - पुरस्ताज्ज्योतिः जगती छन्दः- पंचाशदक्षराणि - आत्मा देवता - विद्यायां विनियोगः । प्रथमपादे याजुषी शुद्धा जगतीछन्दः द्वादशाक्षराणि ; द्वितीयपादे साम्नी निवृत् गायत्री छन्दः - एकादशाक्षराणि ; तृतीयपादे साम्नी निवृत् गायत्री छन्दः - एकादशाक्षराणि ; चतुर्थपादे प्राजापत्या भुरिक् गायत्री छन्दः - नवाक्षराणि ; पंचमपादे याजुषी भुरिक् गायत्री छन्दः - सप्ताक्षराणि ।

स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् ।
कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यः समाभ्यः ।।

सः । परि । अगात् । शुक्रम् । अकायम् । अव्रणम् । अस्नाविरं । शुद्धम् । अपापविद्धमित्यपापऽविद्धम् ।

कविः । मनीषी । परिभूरिति परि भूः । स्वयंभूरिति स्वयम्ऽभूः । याथातथ्यत इति याथाऽतथ्यतः । अर्थान् । वि । अदधात् । शाश्वतीभ्यः । समाभ्यः ।।

पदानि एकोनविंशतिः ।

9

अन्धमित्यादि पूर्वमन्त्रस्य - दध्यङ्ङाथर्वण ऋषिः - चतुष्पात् याजुषी निवृत् अनुष्टुप् छन्दः- एकत्रिंशदक्षराणि - आत्मा देवता - विद्यायां विनियोगः ।

अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्यायाग्ं रताः ।।

अन्धम् । तमः । प्र । विशन्ति । ये । अविद्याम् । उपासत इत्युपऽआसते ।
ततः । भूय इवेति भूयःऽइव । ते । तमः ये । उँ २ इत्यूँ २ । विद्यायाम् । रताः ।।

पदानि पंचदश ।

10

अन्यदित्यादि पूर्वमन्त्रस्य - दध्यङ्गाथर्वण ऋषिः - चतुष्पात् याजुषी निवृत् अनुष्टुप् छन्दः - एकत्रिंशदक्षराणि - आत्मा देवता - विद्याया विनियोगः ।

अन्यदेवाहुर्विद्ययान्यदाहुरविद्यया ।
इति शुश्रुम धीराणांये नस्तद्विचचक्षिरे ।।

अन्यत् । एव । आहुः । विद्यया । अन्यत् । आहुः । अविद्यया ।
इति । शुश्रुम । धीराणाम् । ये । नः । तत् विचचक्षिर इति वि ऽचचक्षिरे ।।

पदानि चतुर्दश ।

11

विद्यामित्यादि मन्त्रस्य - दध्यङ्गाथर्वण ऋषिः - चतुष्पात् याजुषी विराट् अनुष्टुप् छन्दः - त्रिंशदक्षराणि - आत्मा देवता - विद्याया विनियोगः ।

विद्यांचाविद्यांच यस्तद्वेदोभयग्ं सह ।
अविद्यया मृत्युन्तीर्त्वा विद्ययामृतमश्नुते ।।

विद्याम् । च । अविद्याम् । च । यः । तत् । वेद । उभयम् । सह ।
अविद्यया । मृत्युम् । तीर्त्वा । विद्यया । अमृतम् । अश्नुते ।।

पदानि पंचदश ।

12

अन्धमित्याद्युत्तरमन्त्रस्य - दध्यङ्गाथर्वण ऋषिः - चतुष्पात् याजुषी शुद्धा अनुष्टुप् छन्दः - द्वात्रिंशदक्षराणि - आत्मा देवता - विद्याया विनियोगः ।

अन्धन्तमः प्रविशन्ति येऽसम्भूतिमुपासते ।
ततो भूय इव ते तमो य उ सम्भूत्याग्ँ रताः ।।

अन्धम् । तमः । प्रविशन्ति । ये । असम्भूतिमित्यसम्ऽभूतिम् । उपासत इत्युपऽआसते ।
ततः । भूय इवेति भूयःऽइव । ते । तमः । ये । उँ २ इत्यूँ २ । सम्भूत्यामिति
सम्ऽभूत्याम् । रता ः।।

पदानि पंचदश।

13

अन्यदित्याद्युत्तर मन्त्रस्य - दध्यङ्ङाथर्वण ऋषिः - चतुष्पात् याजुषी शुद्धा अनुष्टुप्
छन्दः - द्वात्रिंशदक्षराणि - आत्मा देवता - विद्यायां विनियोगः ।

अन्यदेवाहुस्संम्भवादन्यदाहुरसम्भवात् ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ।।

अन्यत् । एव । आहुः । सम्भवादिति संऽभवात् । अन्यत् । आहुः ।
असम्भवादित्यसंऽम्भवात् ।
इति । शुश्रुम । धीराणां । ये । नः । तत् । विचचक्षिर इति विऽचचक्षिरे ।

पदानि चतुर्दश ।

14

सम्भूतिमित्यादि मन्त्रस्य - दध्यङ्ङाथर्वण ऋषिः - चतुष्पात् याजुषी शुद्धा अनुष्टुप्
छन्दः - द्वात्रिंशदक्षराणि - आत्मा देवता - विद्यायां विनियोगः ।

सम्भूतिंच विनाशंच यस्तद्वेदोभयग्ं सह ।
विनाशेन मृत्युन्तीर्त्वा सम्भूत्यामृतमश्नुते ।।

सम्भूतिमिति सम्ऽभूतिम् । च । विनाशमिति विऽनाशम् । च । यः । तत् । वेद ।
उभयं । सह ।
विनाशेनेति विऽनाशेन । मृत्युम् । तीर्त्वा । सम्भूत्येति संऽभूत्या । अमृतम् । अश्नुते ।

पदानि पंचदश ।

15

हिरण्मयेनेत्यादि मन्त्रस्य - दध्यङ्गाथर्वण ऋषिः - चतुष्पात् याजुषी शुद्धा अनुष्टुप् छन्दः- द्वात्रिंशदक्षराणि - पूषा देवता - विद्यायां विनियोगः ।

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ।।

हिरण्मयेन । पात्रेण । सत्यस्य । अपिहितमित्यपिऽहितम् । मुखम् ।
तत् । त्वम् । पूषन् । अप । आ । वृणु । सत्यधर्मायेति सत्यऽधर्माय । दृष्टये ।

पदानि त्रयोदश ।

16

पूषन्नित्यादि मन्त्रस्य - दध्यङ्गाथर्वण ऋषिः - त्रिपात्साम्नी आसुरी वा यजुरन्ता मिश्रा उष्णिक् छन्दः- अन्त्यो द्वादशकः - एकोनपंचाशदक्षराणि - सूर्यो देवता -विद्यायां विनियोगः ।

पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह तेजो
यत्ते रूपं कल्याणऽतमन्तत्ते पश्यामि ।
यो असावसौ पुरुषस्सोऽहमस्मि ।।

पूषन् । एकऋषे इत्येकऽऋषे । यम । सूर्य । प्राजापत्येति प्राजाऽपत्य । वि । ऊह ।
रश्मीन् । सम् । ऊह । तेजः ।
यत् । ते । रूपम् । कल्याणतममिति कल्याणऽतमम् । तत् । ते । पश्यामि । यः ।
असौ । असौ । पुरुषः । सः । अहम् । अस्मि ।।

पदानि पंचविंशतिः ।

17

वायुरित्यादि मन्त्रस्य - दध्यङ्गाथर्वण ऋषिः - यजुषी वाक्यद्वयं - मध्ये प्रणवः - चतुस्त्रिंशदक्षराणि - लिंगोक्ता देवताः - विद्यांगभूते आत्मार्पणे विनियोगः ।

प्रथमस्य वायुर्देवता - सप्तदशाक्षराणि । क्रतुर्देवता - षोडशाक्षराणि । प्रणवस्य ऋषिः ब्रह्म - देवी गायत्रीछन्दः - परमात्मा श्रीमन्नारायणो देवता - एकं अक्षरम् ।

वायुरनिलममृतमथेदं भस्मान्तगँ शरीरम् ।
ओं ३ क्रतो स्मर कृतगँ स्मर क्रतो स्मर कृतगँ स्मर ।।

वायुः । अनिलम् । अमृतम् । अथ । इदम् । भस्मान्तमिति भस्मऽअन्तम् । शरीरम् ।
ओं । क्रतो इति क्रतो । स्मर । कृतम् । स्मर । क्रतो इति क्रतो । स्मर । कृतम् । स्मर ।।

पदानि षोडश ।

18

अग्न इत्यादि मन्त्रस्य - अगस्त्य ऋषिः - याजुषी निवृत् त्रिष्टुप् छन्दः - त्रिचत्वारिंशदक्षराणि - अग्निर्देवता - विद्यांगे नमः कर्मणि देवतोपस्थाने विनियोगः ।

अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम उक्तिंविधेम ।।

अग्ने । नय । सुपथेतिसुऽपथा । राये । अस्मान् । विश्वानि । देव । वयुनानि । विद्वान् । युयोधि । अस्मत् । जुहुराणम् । एनः । भूयिष्ठाम् । ते । नम उक्तिमिति नमःऽउक्तिम् । विधेम ।।

पदानि सप्तदश ।

पूर्वोक्तानि पदानि सप्तदश । एवं पदकण्डिकाश्च सप्तदश । अनया सहाष्टादश । काण्डिकेयानि पदानि चतुस्सप्ततिश्च । एतदीयैस्सह नवोनं त्रिशतं । ओमिति मान्त्रिकानि पदानि न्यूनं त्रिशतं । शान्तिगन्त्रैत्यष्टादश । पुनः पूर्ण पूर्णम् ।

इति श्रीशुक्लयजुर्वेदीयायाः काण्वसंहितायाः कण्वोपज्ञः पदपाठः समाप्तः ।

अस्यमन्त्रस्य ऋष्यादिकं पूर्वमेवोक्तम् अध्ययनान्ते शान्त्यर्थे विनियोगः ।

## उत्तरशान्तिः

पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ।।
ओं ३ शान्तिः शान्तिः शान्तिः ।।

हरिः ओम् ३

ओनमः । स्वस्तिश्रीसूर्यनारायणपरब्रह्म - दध्यङ्ङाथर्वण - याज्ञवल्क्य-श्रीकण्वादिभ्यो मुनिभ्यो महद्भ्यो गुरुभ्यः ।

ओ विद्यादेहाय नित्यप्रबुद्धाय परमात्मने नमः । ओ अस्मद्गुरुभ्यो नमः, ओ अस्मत्परमगुरुभ्यो नमः, ओ अस्मत्सर्वगुरुभ्यो नमः ।

श्रीकृष्णार्पणमस्तु ।

* * *

॥ ओं ॥

श्रीमद्वाजसनेयि माध्यन्दिन शुक्लयजुर्वेदसंहिता चत्वारिंशोऽध्यायः

ईशावास्यमिदगुँ सर्वं यत्किं च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनं ॥ 1 ॥

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतगुँ समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ 2 ॥

असुर्या नाम ते लोका अन्धेन तमसावृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ 3 ॥

अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्शत् ।
तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥ 4 ॥

तदेजति तन्नैजति तद्दूरे तद्वन्तिके ।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥ 5 ॥

यस्तु सर्वाणि भूतान्यात्मन्नेवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विचिकित्सति ।। 6 ।।

यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।
तत्र को मोहः कश्शोकः एकत्वमनुपश्यतः ।। 7 ।।

स पर्यगाच्छुक्रमकायमव्रणमस्नाविरग्ं शुद्धमपापविद्धम् ।
कविर्मनीषी परिभूस्स्वयम्भूर्याथातथ्यतोऽर्थान्व्यदधाच्छाश्वतीभ्यस्समाभ्यः ।। 8 ।।

अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते ।
ततो भूय इव ते तमो य उ सम्भूत्याग्ँ रताः ।। 9 ।।

अन्यदेवाहुस्सम्भवादन्यदाहुरसम्भवात् ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ।। 10 ।।

सम्भूतिं च विनाशं च यस्तद्वेदोभयग्ं सह ।
विनाशेन मृत्युं तीर्त्वा सम्भूत्यामृतमश्नुते ।। 11 ।।

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्यायाग्ँ रताः ।। 12 ।।

अन्यदेवाहुर्विद्यया अन्यदाहुरविद्यया ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ।। 13 ।।

विद्यां चाविद्यां च यस्तद्वेदोभयग्ं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ।। 14 ।।

वायुरनिलममृतमथेदं भस्मान्तँ शरीरम् ।
ओ३म् क्रतो स्मर क्लिबे स्मर कृतँ स्मर ।। 15 ।।

अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ।। 16 ।।

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
योऽसावादित्ये पुरुषः सोऽसावहम् ।। 17 ।।
।। ओ३म् खं ब्रह्म ।।

इति माध्यन्दिनीयायां वाजसनेयसंहितायां चत्वारिंशोऽध्यायः ।।



श्रीः

श्रीमते रामानुजाय नमः

# ईशावास्योपनिषत्

## शान्तिपाठः

## ओम्

**पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।**
**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ।।**

**ओं शान्तिः शान्तिः शान्तिः ।।**

---

शुक्लयजुर्वेदीयानां एष शान्तिपाठमन्त्रः । परब्रह्मणः समग्रस्वरूपस्वभावप्रतिपादक इति यथासिद्धान्तं विपुलविशदं विवरणं अर्हति । तथा हि - 'पूरी-आप्यायने' इत्यस्मात् चौरादिकत्वेन स्वार्थणिजन्तात् धातोः क्तप्रत्यये सति "वा दान्त-शान्त-पूर्ण-दस्त-स्पष्ट-छन्न-ज्ञप्ताः" इति (7-2-27) पाणिनिसूत्रेण पूर्णशब्दोऽयं निपात्यते । इडागमाभावः निपातस्य फलम् । णिलोपः, रात् परत्वात् प्रत्ययतकारस्य नत्वं, तस्य णत्वं चेति पूर्णशब्दसिद्धौ प्रक्रिया । क्तप्रत्ययश्च इह कर्तरि कर्मणि वेति उभयथापि भाव्यम् । तत्र कर्तरि - ब्रह्म स्वरूपेण पूरयति-व्याप्नोति इत्यर्थः। कर्मणि तु - ब्रह्म कल्याणगुणैः संभृतमित्यर्थः । असंकुचितवृत्तिनानेन पूर्णशब्देन सर्वत्र सर्वदा सर्वथा च पूर्णत्वं ब्रह्मणः प्रतिपाद्यते ।।

(1) तत् यथा - सर्वत्रेति सर्वदेशव्याप्तिविवक्षा । सर्वत्र पूर्णता नाम-सर्वव्याप्तस्य तत्तद्देशावच्छेदेनापि परिसमाप्यवृत्तित्वपर्यवसानम् । तद्वा कथम्? न हि एकत्र पूर्णतया स्थितस्य अन्यत्र वृत्तिसम्भवः । इति शंका निरस्यते सिद्धान्तिभिः विशिष्टाद्वैतिभिः व्यक्तिषु परिसमाप्तामपि व्यापिनीं तार्किकाणां जातिं निदर्शयद्भिरिति भाव्यम्।।

(2) सर्वदा - इति कालानवच्छेदेन व्याप्तिविवक्षा ।

(3) सर्वथा इति व्याप्तिप्रकारविवक्षा च । तत्र स्वरूपतः गुणतश्चेति व्याप्तिप्रकारद्वैविध्यम्। तेन दीपादुत्पन्नप्रदीपन्यायेन परस्वरूपवत् उत्तरेषां व्यूह-विभव-अन्तर्यामि-अर्चावताराणामपि गुणैः पूर्णतासिद्धिः । एतदभिप्रायेणैव मन्त्रपदानि व्याख्येयानि ।। - तथा हि - "पूर्णमदः पूर्णमिदं" इति "पूर्णमिदं पूर्णमदः" इति च पाठभेदो दृश्यते । तत्र विप्रकृष्टवाचिना अदः शब्देन नित्यविभूतिवर्तिपरस्वरूपग्रहणम्। सन्निहितवाचिना इदं शब्देन च हृदयगुहावर्ति-अन्तर्यामिरूपं विवक्षितम् । पूर्णशब्दः गुणपौष्कल्यवचनः । तथाच - परवासुदेवमूर्तिरिव अन्तर्यामिस्वरूपं च षाड्गुण्यपुष्कलमिति प्रथमवाक्यार्थः। अथ, पूर्णात् - पूर्वोक्तपरवासुदेवसकाशात् आविर्भूतं पूर्णं - व्यूहस्वरूपं उदच्यते - बहुप्रकारं भवति । संकर्षण-प्रद्युम्नानिरुद्धरूपेण द्वि-द्वि-गुणाविष्करणशालि सत्

# ई शा वा स्यो प नि ष त्

## प्रथमो मन्त्रः

**ईशावास्यमिदगुँ सर्वं यत्किंच जगत्यां जगत् ।**
**तेन त्यक्तेन भुंजीथा मा गृधः कस्यस्विद्धनम् ।। 1 ।।**

## प्रतिपदार्थदीपिका

(श्रीभारद्वाजरामानुजाचार्यविरचिता)

### मंगलाचरणम्

वेदानुद्धृत्य यः पूर्वं ब्रह्मणे प्रददौ हरिः ।
[1]मत्स्यमूर्तिमहं वन्दे सोमकासुरसूदनम् ।। 1 ।।

---

त्रिप्रकारं भवतीति भावः। तत्र व्यूहत्रये प्रतिव्यक्ति गुणद्वयमात्राविष्करणेऽपि स्वतो गुणषट्कपूर्णमेवेति न न्यूनता भाव्या। इदं चोक्तं पांचरात्रानुसारतः श्रीवत्सचिह्नगुरुभिः वरदराजस्तवे - "गुणैष्षड्भिस्त्वेतैः प्रथमतरमूर्तिस्तव बभौ। ततः तिस्रः तेषां त्रियुग! युगलैर्हि त्रिभिः अभुः" इत्यादिना ।।

**पूर्णस्य पूर्णं** - इह षष्ठयन्तपूर्णशब्दः सर्वावतारकन्दभूतं क्षीराब्धिशायि व्यूहरूपं वदति। तत्सम्बन्धि **पूर्णं** रामकृष्णादिविभवावतारजातम्। तत् (द्वितीयान्तम्) आदाय - स्वहेतुत्वेन स्वीकृत्य - **पूर्णं एव अवशिष्यते** - अर्चावताररूपमेव चरमतया वर्तते सर्वसमाश्रयणोपयोगि नित्यसन्निहितं कल्याणगुणपूर्णं च। इति मन्त्रस्य पदार्थविवरणम्। एतेन परब्रह्मणः सर्वव्याप्तिः सर्वत्र गुणपौष्कल्यं च प्रतिपादितं भवति। अध्ययनारम्भे एवंविधपरिपूर्णब्रह्मस्वरूपध्यानं शान्तिमन्त्रेणानेन विधित्सितमिति बोध्यम्। श्रीवचनभूषणस्य अरुम्बदाख्ये द्राविडभाषामयटिप्पणे समंजसमिदं विवरणं द्रष्टव्यम्।

यद्यपि श्रीरंगरामानुजमुनीन्द्रैः बृहदारण्यके (7-1) अयं मन्त्रः प्रकरणात् प्रणवस्तुतिपरतया व्याख्यातः। - तदेवम् -"पूर्णमदः पूर्णमिदं" इत्यनेन परोक्षप्रत्यक्षसर्वलोकानां वेदशब्दप्रभवत्वात् तद्व्याप्तत्वं प्रोच्य, (कारणेन कार्यस्य व्याप्तत्वात् - कारणीभूतवेदशब्दव्याप्तता लोकानां - इति) एवं **पूर्णात्** (व्याप्तात् लोकात्) **पूर्णं** पूरणकर्तृ व्याहृतिरूपभूर्भुवरादिशब्दजातम् **उदच्यते** - उत्कृष्टं भवतीति च व्याख्याय, **पूर्णस्य पूर्णं** - व्याप्तलोकस्य पूरकं व्याहृतिरूपशब्दजातम् आदाय - उपसंहृत्य, पूर्णं - तस्यापि व्यापकं ओंकाररूपं वस्तु अवशिष्यते - कार्यसर्वशब्दजाते नष्टेऽपि परिशिष्यते" इति, विवरणं कृतम्। अथ तैरेव अन्ते, "इदं च रुच्युत्पादनाय प्रणवस्तुतिमात्रम्। अन्यथा निमित्तकारणस्य व्याहृत्यादेः कार्यव्यापकत्वासंभवात्। उपादानभूतस्य भूतपंचकस्यैव व्यापकत्वसंभवात् असामंजस्यं स्यात्" इति समापितम्। तथापि एवं स्वेनैव रुच्युत्पादनाय प्रणवस्तुतिपरत्वोक्त्या अवास्तवमेवेदं प्रणवस्तुतिपरत्वमिति व्यंजनात्, युक्तं प्रणवप्रतिपाद्यस्य ब्रह्मण एव परत्वादि-पंचकपरतया व्याख्यानमिति प्रतीमः। वस्तुतः इदं श्रीरंगरामानुजीयं विवरणं वाक्यान्वयाधिकरणगत-श्रुतप्रकाशिकावचनविरुद्धमपि। तत्र हि व्यासार्यैः यादवप्रकाशपक्षनिराससन्दर्भे परमात्मपरतयैव मन्त्रोऽयं विवृतः। तत्रैव तदीयसूक्तिः - " परमात्मनः पूर्णत्वं च अणुमात्रेऽपि वस्तुनि स्थितस्य निरवधिकषाड्गुण्यविशिष्टतया प्रतिपत्तियोग्यत्वम्" इति ।।

इति शान्तिपाठविवरणम्।

---

1."तं मत्स्यरूपिणं" इति पाठः श्रेयान्; यच्छब्दसंयोगात्।

श्रीशं श्रियं [1]शठारातिं भाष्यकारादिदेशिकान् ।
पूर्वान् वन्दे गुरून् वात्स्यान् श्रीनिवासावधीनहम् ।। 2 ।।

प्रतिज्ञा

श्रीरंगनायकं स्तुत्वा दशसूपनिषत्स्विह ।
ईशोपनिषदो व्याख्यां करोमि बुधसम्मताम् ।। 3 ।।

ग्रन्थकर्तुः परिचयः

भारद्वाजकुलाब्धीन्दुजगन्नाथार्यधीमतः ।
[2]श्रीरामानुजदासेन पुत्रेण विदुषां मुदे ।। 4 ।।
श्रीभाष्यंतिरुवाय्मोळिप्पिल्लैनाम्ना मया कृताम् ।
ग्रन्थसंख्यां प्रवक्ष्यामि तन्नामानि च वच्म्यहम् ।। 5 ।।
[3]परमवैदिकसिद्धान्तः प्रथमः परिकीर्तितः ।
सर्ववेदान्तसारार्थो द्वितीयो ग्रन्थ उच्यते ।। 6 ।।
शिष्टाद्वैतिजनाचारस्तृतीयः परिपठ्यते ।
शिष्टश्रीवैष्णवाचारश्चतुर्थः परिकीर्तितः ।। 7 ।।
सीताकल्याणसर्गस्य व्याख्यानं पंचमं स्मृतम् ।
षष्ठी श्रीरामजननश्लोकव्याख्या प्रकीर्तिता ।। 8 ।।
श्रीकृष्णजननश्लोकव्याख्या सप्तम उच्यते ।
[4]वैष्णवादिमपद्यस्य व्याख्या तु अष्टम उच्यते ।। 9 ।।
भावार्थविधिनामा तु नवमो ज्यौतिषः स्मृतः ।
आन्ध्रदेशीयविप्राणां चारित्रं दशमं स्मृतम् ।। 10 ।।
अलंकारेतूपमाया वाद एकादशस्स्मृतः ।
दशोपनिषदां व्याख्या द्वादशी परिकीर्तिता ।। 11 ।।

---

1. संप्रदायसिद्धगुरुपरम्पराक्रमेण स्वाचार्यपर्यन्तं मुख्यानाचार्यान् नामतः निर्दिशन् वन्दते । तत्र श्रीशः प्रथमाचार्यः । शठारातिरिति द्रविडदिव्यप्रबन्धप्रवर्तकेषु 'आल्वार्' इतिव्यपदिष्टेषु अन्यतमः नम्माल्वार् इतिप्रसिद्धः पराङ्कुशमुनिः विवक्षितः। भाष्यकारः- भगवद्रामानुजार्यः। श्रीनिवास इति स्वाचार्यनामधेयम् ।
2. दासेति - स्वस्य श्रीवैष्णवसम्प्रदायानुबन्धित्वज्ञापकम् । ब्राह्मण्यस्फोरकं वैदिकाचारसिद्धं शर्मान्तत्वमिव परमवैदिकप्रपन्नाचारसिद्धं दासान्तत्वं नामधेयस्येति बोध्यम् ।।
3. परमेति - छन्दोनुगुण्याय परवैदिकेति युक्तम् । 'परमवैदिकसिद्धान्तरत्नाकर' इति एतद्ग्रन्थनाम ।।
4. वैष्णवादिमेति - विष्णुपुराणगताद्यपद्यस्य 'पराशरं मुनिवरं' इत्यादिकस्य ।।

पदार्थदीपिका नाम परतत्वप्रकाशिका ।
अवतारा इतीर्यन्ते मत्स्यादिक्रमशो बुधैः ।। 12 ।।
श्रीवत्सवंशतिलकश्लोकव्याख्या त्रयोदशी ।
आदर्शनाम्ना विख्याता [1]पंचमोपायबोधिका ।। 13 ।।

### अद्वैतमतानुवादः

अत्रेदं तत्वम् - "एकमेवाद्वितीयं" (छां.उ.6-2-1) इतिश्रुत्या [2]सजातीय-विजातीय स्वगतभेदशून्यं परं ब्रह्म इति, तत् ईक्षत्यादि-गुणरहितम् इति । [3]माया च अविद्या च स्वयमेव भवति इति, तदेव मायाऽविद्योपाधिकं सत् ईश्वरभावं जीवभावं च जगाम इति, "रज्जुरेषा न सर्पः" इतिवत् [4]अध्यारोपापवादरूपब्रह्मसत्यं जगन्मिथ्येति आप्तोक्तवाक्यजन्यज्ञानेन अनादिजीवेश्वरत्वादि रूप [5]ब्रह्मभ्रान्तिः निवर्तत इति, अविद्यानिवृत्तिरेव मोक्षः नान्य इति, अयमेव परमार्थ इति, अद्वैतिनां मतानुवादः ।

### विशिष्टाद्वैतसिद्धान्तसारसंग्रहः

[6]"यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्य-भिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति" । (तै.भृगु.34) इत्यादि सर्वोपनिषद् - ब्रह्मसूत्र - भगवद्गीता - श्रीविष्णुसहस्रनाम- प्रमाणप्रतिपाद्य- जगज्जन्मादिकारणं

---

1. पंचमोपाय इति - कर्मज्ञानभक्तिप्रपत्तिरूपोपायचतुष्टयातिरिक्तः आचार्याभिमानरूपः निरपायः उपायविशेषः । एतद्विशेषनिरूपणं श्रीवचनभूषणादौ ।।

2. सजातीयेत्यादि - यद्यपि, "स्वकार्यापतितं अन्यन्नास्तीति एकमेवेत्युच्यते ,..... मृदो यथा अन्यत् कुलालादिनिमित्तकारणं, ..... इह तथा वस्त्वन्तरं नास्य द्वितीयं विद्यते इत्यद्वितीयं" इत्येव भगवत्पादभाष्यम् । तथापि "एकं-एव-अद्वितीयं" इति पदत्रयसार्थक्याय सजातीय-विजातीय-स्वगत-भेदनिषेधपरतयापि शांकरैः व्याख्यातमिति । तदनुसारेणैवमुक्तम् ।।

3. "माया च अविद्या चेति" अनेनैव श्रुतिप्रमाणेन माया-अविद्ययोः भेदं अद्वैतिष्वेकदेशिनः इच्छन्ति, केचिदैक्यमपि । तत्र "कार्योपाधिरयं जीवः-कारणोपाधिरीश्वरः" इतिरीत्येश्वरोपाधिभूतमूलाज्ञानस्य मायेति, जीवोपाधिभूततूलाज्ञानाना अविद्येति च तन्मतप्रसिद्धिः ।।

4. अध्यारोपापवादेति - अतस्मिंस्तत्कल्पनं अध्यारोपः तन्निषेधश्चापवादः । निर्विशेषचिन्मात्रे ब्रह्मणि अविद्यया विविधप्रपंचभेदकल्पनं "नेति नेति" इत्यादि श्रुतिभिः तन्निषेधश्च क्रियते इति तन्मतप्रक्रिया। "अध्यारोपापवादाभ्यां-निष्प्रपंचं प्रपंच्यते" इत्यादितदुक्तिभिरेव ज्ञायते ।।

5. ब्रह्मभ्रान्तिरिति - भेदभ्रान्तिरिति पाठो युक्तः ।।

6. यतो वा इमानीत्यादि भृगुवल्लीवाक्यम् । तत्रायमर्थः । "इमानि भूतानी"ति कृत्स्नकार्यसमुदायात्मकजगद्विवक्षा। ईदृशभूतानि सर्वाणि यतः वै यस्मात् एव जायन्ते, जातानि च तानि येनैव जीवन्ति-रक्ष्यमाणानि ।

परम्ब्रह्म श्रियः पतिरिति, सः ईक्षत्यादिगुणविशिष्ट इति, [1]"नित्योनित्यानां.. (कठ.उ.5-13) इति, [2]"ज्ञोत एव" (ब्र.सू.2-3-19) [3]"न जायते म्रियते" (कठ.उ.2-18) इत्यादिप्रमाणप्रतिपाद्याः जीवाः इति तदुपासनया [4]"निरंजनः परमं साम्यमुपैति" (मुं.उ.3-1-3), [5]' मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ।" (भ.गी.14-2) 'जगद्व्यापारवर्जम्' (ब्र.सू.4-4-17) 'भोगमात्रसाम्यलिंगाच्च' (4-4-21) "अनावृत्तिश्शब्दादनावृत्तिश्शब्दात्" (ब्र.सू.4-4-22) "न च पुनरावर्तते न च पुनरावर्तते" (छां.8-15-1) इत्यादि श्रुतिसूत्रस्मृतिप्रमाणैः ते अणुत्वज्ञातृत्वनित्यत्वाजत्व-शेषत्वादिधर्माश्रयाः इति, ते पूर्वोक्तजगत्कारणत्वादिगुणाश्रयस्य श्रियःपत्युः उपासनया "तद्विष्णोः परमं पदं " (सु.उ.6) इत्युक्त-पुनरावृत्तिरहित-शाश्वत वैष्णवपरब्रह्मरूपं प्राप्नुवन्तीति, श्रीवैष्णवानां राद्धान्तानुवादः ।

### अत्रैव षड्विधतात्पर्यलिंगानुकूलता

अत्रेदं विचार्यते - [6]उपक्रमोपसंहारौ अभ्यासोऽपूर्वता फलम् । अर्थवादोपपत्ती च लिंगं तात्पर्यनिर्णये ।। इति उपक्रमोपसंहाराभ्यासाद्यनुगुणतया शिष्टाचारानुगुणतया च

---

प्रयन्तीति न तिङन्तम् । किन्तु शतृप्रत्ययान्तं प्रथमाबहुवचनं भूतानीत्यस्य विशेषणम् । तथा च म्रियमाणानि भूतानीति तदर्थः । तानि प्रलये यत् अभिसंविशन्ति-यस्मिन् लीयन्ते - इत्यर्थः । तदेव जगत्सृष्टिस्थितिसंहारकारणं ब्रह्मेति विजिज्ञासस्व-विचार्य अवधारयेति मन्त्रार्थः ।।

1. नित्यो नित्यानामिति - नित्यानां चेतनानां बहूनां य एकश्चेतनः ईश्वरः, स कामान् विदधातीति योजना श्रीभाष्यकाराभिमता । तेन ईश्वरनित्यत्ववत् जीवनित्यत्वं तद्भेदश्च सिद्धयतीति तदाशयः । तेन "अनित्याना"मिति शांकरयोजनाव्यावृत्तिः । मन्त्रोयं कठोपनिषदि श्वेताश्वतरे च पठितः ।।

2. "ज्ञोऽत एव" इदं ब्रह्मसूत्रम्। "नात्मा श्रुतेः" इत्यादिपूर्वसूत्रात् आत्मेति श्रुतेरिति च अनुवर्तते । तथा च अत एव श्रुतेः-पूर्वोक्त श्रुतिप्रमाणादेव-आत्मा-जीवः-ज्ञः-ज्ञातृत्वाश्रयः इति सूत्रार्थः । येन श्रुतिप्रमाणेन आत्मनो नित्यत्वं स्वीकृतं तेनैव "जानात्येवायं पुरुषः" "एष हि द्रष्टा" इत्यादिना श्रुतिप्रमाणेन तस्य ज्ञातृत्वमपि स्वाभाविकमिति फलितम् । तेन आत्मनः चैतन्यमात्रस्वरूपतायादिनः बौद्ध-सांख्यादयः, आगन्तुकचैतन्यगुणयोगात् जडस्वरूपतावादिनः कणादाद्याश्च- व्यावृत्ताः ।।

3. "न जायते म्रियते वा" इत्यादि ईषद्भेदेन मन्त्रोऽयं कठवल्ल्यां भगवद्गीतायामपि । जनन-मरणादिराहित्येन जीवनित्यत्वसाधनमिह बोध्यम् ।।

4. "निरंजनः" इति । निरंजनः- प्राकृतसंसर्गरहितो मुक्तः परब्रह्मणा परमं साम्यं उत्कृष्टं सादृश्यं प्राप्नोतीति तदर्थः। अपहतपाप्मत्वादिगुणाष्टकाविर्भावमुखेन निरतिशयानन्दानुभयमुखेन च परमसाम्यं विवक्षितम् । तेन मुक्तौ जीवस्य ब्रह्मैक्यवादः आनन्दतारतम्यवादश्च निरस्तो वेदितव्यः ।

5."मम साधर्म्यं इति अनेन गीतावचनेन मुक्तस्यापि परमात्मवत् कर्मनिबन्धनसृष्टिप्रलय-विषयत्वाभावनिरूपणात् एवरूपेणापि परमसाम्यं विवक्षितमिव ।।

6."उपक्रमोपसंहारौ" इत्यादि श्लोकार्थः यथा - उपक्रमः - आरम्भः । उपसंहारो - निगमनम् । तावुभौ

पक्षपातं विना परमार्थपरतत्वनिर्णयः प्रकृति-प्रत्ययविचारणापूर्वकशब्दार्थविद्भिः माध्यस्थैः विद्वद्भिः कर्तव्यः । तदा चेत् सर्वप्रमाणतमदशविधोपनिषदां एतदुपनिषदर्थसंशयविपर्ययनिवारणभूतब्रह्मसूत्राणांसर्वोपनिषत्सारभूतश्रीभगवद्गीता-श्रीविष्णुसहस्रनामादीनांच उपक्रमोपसंहारादि पर्यालोचनया, त्रिविधवैदिकशिष्टजना-चारानुकूलतया च, प्रकृतिप्रत्ययविशिष्टशब्दविचारपूर्वकं वाक्यार्थनिर्णये कृते जगज्जन्मादिकारणं परम्ब्रह्मेति, सः ईक्षत्यादिगुणविशिष्टः श्रियःपतिरिति, तदुपासनया सर्वेषां जीवानां जगद्व्यापाररहित - श्रीविष्णुपरमसाम्यापत्तिः, इत्याद्यर्थाः एव उपपादिताः । न तु ब्रह्मणो नैर्गुण्यम्, अज्ञत्वम्, अशक्तित्वम् ब्रह्मैव संसारदुःखित्वमाप्नोति इत्याद्यर्थाः प्रतिपादिताः माध्यस्थैः माध्वैः । तस्मात् श्रीवैष्णवानां सिद्धान्त एव राद्धान्तित इति विज्ञेयो विज्ञानिभिः। एतदर्थविचारस्तु अस्मत्कृत-सर्ववेदान्तसारार्थादि ग्रन्थेषु विस्तरशः प्रतिपादितः ।

### सर्वोपनिषत्सारार्थः

तथा च सर्वोपनिषदर्थसंशय विपर्ययनिवारणसमर्थकब्रह्मसूत्रेष्विव सर्ववेदान्त-र्गतासु सर्वासूपनिषत्सु आदौ परब्रह्मकर्तृक जगत्सृष्टिपूर्वकमुपक्रम्य, मध्ये जीवात्म-परमात्मस्वरूपं निरूप्य, अन्ते परमात्मोपासनया जीवानां पुनरावृत्तिरहित-परब्रह्मलोकस्थितिः उच्यते । न तु ब्रह्मणि जगद्भ्रान्तिरूपाध्यारोपापवाद उक्तः ।

### ईशावास्योपनिषत्तात्पर्यम्

[1]एवमस्यामप्युपनिषदि उपक्रमे "ईशावास्यम्" इत्यादिना सर्वं जगत् ईश्वरेण व्याप्तमिति, "कुर्वन्नेवेह" (ई.उ.2) इत्यादिना ईश्वराराधनरूपयज्ञादिकर्म यावज्जीवं ज्ञानिभिरपि अनुष्ठेयमिति, मध्ये तादृशज्ञानिनो वैभवं "कविर्मनीषी" (ई.उ.8) इत्यादिभिः अभिधाय, "विद्यां चाविद्यां च"(ई.उ.11) इत्यादिना विद्याऽ-विद्याफलमुक्त्वा, उपसंहारकाले "यत्ते रूपं कल्याणतमं तत्ते पश्यामि" (ई.उ.16) इत्यादिना भगवत्सारूप्यं ज्ञानिनामभिधाय, अन्ते "ओं क्रतो स्मर कृतुगँ स्मर"

मिलित्या एकं लिंगम् । अभ्यासः - पुनः पुनः परामर्शः । अपूर्वता - प्रमाणान्तरेणासिद्धता । फलम् - प्रयोजनम् । अर्थवादः -स्तुतिनिन्दान्यतरमुखेन प्रकृतार्थप्राशस्त्यबोधकं वाक्यजातम् । उपपत्तिः - प्रकृतार्थ समर्थक युक्तिः । षण्णामेषां यत्रार्थे पर्ययसानं तस्यैव प्रबन्धमुख्यतात्पर्यविषयत्वमिति निर्णयः । तत्रापि उपक्रमस्य प्राबल्यमित्यपि स्थितम् ।

1·'एवमस्यामपि' - इत्यादि - एतावता सर्वोपनिषत्स्वपि अध्यारोपापवादप्रक्रियया निर्विशेषचिन्मात्र-जगन्मिथ्यात्यादि प्रतिपादनं नास्तीति सामान्येन तात्पर्यलिंगाभावनिरूपणेन वियृत्य प्रकृतोपनिषद्यपि न तदस्तीति यिशदयति ।।

(ई.उ.17) इत्यादिना अयं ज्ञानी भगवता स्मरणीयो भवति इत्याद्यर्था एव उपपादिताः। नतु प्रथमं परब्रह्म मायाऽविद्यावृतं सत् जीवेश्वररूपेण भ्रान्तमिति, तदेव पुनः आप्तोपदेशज्ञानेन परब्रह्म भवतीति भ्रान्तिर्निवृत्तेति उक्ता। एवं सर्वासु उपनिषत्सु स्वस्वाभिनिवेशं विहाय, प्रकृतिप्रत्ययविशिष्ट शब्दार्थज्ञानविद्भिः विवेकिभिः अर्थो वर्णनीयः ।।

जगतः परमपुरुषाधीनत्वकथनम् - वैराग्योपदेशश्च

अन्यपरतन्त्रस्वतन्त्रभ्रान्त्या भ्रमतः तत्वजिज्ञासोः शिष्यस्य, चिदचिदात्मकं सर्वं जगत्, परमपुरुषायत्तस्थितिप्रवृत्तिकं इत्युपदिशति 'ईशावास्यमिति"। **ईशा** -ईष्टे इति ईट् तेन - सर्वनियन्त्रा भगवता विष्णुना, **जगत्याम्** - भूमौ विद्यमानं यत्किंचिदिदं जगत् वर्तते, तत्सर्वं **वास्यम्** - व्याप्यं धार्यं च इत्यर्थः। अल्पत्वास्थिरत्वहेतुना, **त्यक्तेन तेन**- जगता उपलक्षितस्सन्, **भुंजीथाः**-भगवदुपासनयोग्य-देहधारणानुकूलं यथा तथा, भोग्यवर्गं भुंजीथाः इत्यर्थः। **कस्यस्वित् धनम्** - प्रियाप्रियविषयकं धनम्, **मा गृधः** - माभिकांक्षीः "गृधु-अभिकांक्षायाम्" (पा.धा.1247) इति धातुः। "परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि" (ना.परि.उ.3-18) इत्युक्तम्। अतः मुमुक्षोः इतरविषयवैराग्यमावश्यकमिति यावत्।

## श्रीवेदान्ताचार्यभाष्यम्

### भूमिका

मंगलम्

[1]येनावास्यमिदं सर्वं चेतनाचेतनात्मकम्।
विशुद्धसद्गुणौघं तं वासुदेवमुपास्महे ।। 1 ।।

ईशावास्योपनिषत्सारः

[2]सर्वेशानः सहजमहिमा सर्वभूतान्तरात्मा
सर्वान्दोषान् स्वयमतिपतन् सर्वविद्यैकवेद्यः।

---

1. प्रथममन्त्रगतेन हि वास्यशब्देन व्याप्तत्व - धार्यत्वरूपार्थद्वयवाचिना वासुदेवशब्द-निरुक्तिः स्मार्यते। एवं व्यंजितं वासुदेवतत्वमेवात्रोपनिषदि उपास्यतया प्रतिपाद्यमिति द्योतयितुं मंगलश्लोके वासुदेवस्तुतिः।

2. "सर्वेशानः" इति। एतदुपनिषत्प्रतिपाद्यं भगवत्स्वरूपं अष्टभिर्विशेषणैः संगृह्णाति द्वितीयेन श्लोकेन।

कर्माध्यक्षः कलुषशमनः कोऽपि मुक्तोपभोग्यः
सिद्धोपायः स्फुरति पुरुषो [1]वाजिना संहितान्ते ।। 2 ।।
[2]ईशावास्यमिदं सर्वमित्यादि यदनूच्यते ।
शिष्यं प्रति गुरोरेतत् ब्रह्मविद्यानुशासनम् ।। 3 ।।
[3]संहितोदाहृतं सर्वं [4]विनियोगपृथक्त्वतः
विद्यार्थं स्यादिति व्यक्तं निबन्धोस्य तदन्ततः ।। 4 ।।

तत्र प्रथमम् [5]अचिद्विकाराधिष्ठितस्य स्वतन्त्रात्म[6]भ्रमादिपरिजिहीर्षया सर्वस्य परमपुरुषायत्तस्वरूपस्थितिप्रवृत्तिमभिप्रेत्य आह **ईशावास्यमिदं सर्वं यत्किंच जगत्यां जगदिति ।**

तद्यथा - सर्वेशान इति प्रथममन्त्रार्थः । सहजमहिमत्वं "अनेजदेकं 'तदेजति तन्नैजति" इत्यादिना प्रतिपादितम् । "तदन्तरस्य सर्वस्य"इत्यनेन सर्वभूतान्तरात्मत्वम् । "शुक्रं अकाय - - - अपापविद्ध"इति सर्वदोषोद्गतत्वम् । "विद्यां चा विद्यां च" "योसावसौ पुरुषः" इत्यादिना च सर्वविद्यावेद्यत्वम् । अथ कर्माध्यक्षत्वं नाम कर्मसाक्षित्वं फलप्रदत्वं वा, इति - स्वीकारेण तदुभयं अन्तर्यामित्वनिरूपणात् "कृतो ; कृतं स्मरे"ति प्रार्थनाच्च स्फोरितम् । कलुषशमनत्वं "अस्मज्जुहुराणमेनः युयोधि"इत्यनेन व्यंजितम् ।। "स पर्यगात्"इत्यादिमन्त्रे द्वितीययोजनानुसारेण मुक्तोपभोग्यत्वं स्मारितम् ।। एवंरूपस्य परमपुरुषस्यैव सिद्धोपायत्वं "त्वमेव सुपथा अस्मान् नय" इति प्रार्थनया द्योतितम् ।।

1. **वाजिना** - वाजसनेयशाखाधीतिना शुक्लयजुर्वेदिनामित्यर्थः ।।

2. उपनिषदोऽस्याः शिष्यं प्रति आचार्यकृत ब्रह्मविद्योपदेशरूपत्वं "भुंजीथाः" "मागृधः" इति मध्यमपुरुषप्रयोगात् "शुश्रुम" इति उत्तमपुरुषप्रयोगाच्च ज्ञायत इति भावः ।।

3. **यद्यपि ब्रह्मोपदेशरूपत्वात्** बृहदारण्यकादिज्ञानकाण्डान्तर्भावोऽस्य युक्तः, तथापि कर्मकाण्डभूत-संहितान्तर्निवेशोऽर्थविशेषद्योतनार्थः। संहितोदाहृतानां कर्मणां सर्वेषां विनियोगपृथक्त्वेन ब्रह्मविद्यांगत्वं च अस्तीति द्योतनमेव प्रयोजनमित्यर्थः। 'श्लोके व्यक्तं" इति स्थले "व्यङ्क्तुम् इति पाठान्तरम् । तदेव युक्तमिव । एतद्भाष्यानुसारिश्रीवत्साकनारायणमुनिकृतभाष्योपोद्घातश्लोके "तद्व्यक्त्यै " इति चतुर्थ्यन्तप्रयोगात् ।।

4. **विनियोगपृथक्त्वं नाम** - उपयोगभेदः । कर्मणां फलापेक्षया उपयुक्तानां तत्तत्फलसाधनत्वं च, मुमुक्षुणा त्रिविधत्यागपूर्वकं उपयुक्तानां ब्रह्मविद्यांगत्वं च , अस्तीति विनियोगभेदः ब्रह्मसूत्रकृता "सहकारित्वेन च" इति सूचितः । पूर्वमीमांसायामपिअग्निहोत्रादिकर्मणां यावज्जीवमनुष्ठेयत्वेनजीवनाधिकारत्वं,स्वर्गफलापेक्षिभिरनुष्ठाने स्वर्गाधिकारत्वं चेति इदं विनियोगपृथक्त्वं दर्शितम् ।।

5. अचिद्विकाराधिष्ठितस्येति । अचिद्विकारं त्रिगुणात्मकप्रकृतिविकारभूतं शरीरं अधिष्ठितवतः जीवस्येति तदर्थः। अत एव संभावितोऽस्य स्वतन्त्रात्मभ्रमादिरिति भावः ।। अत्र 'अचिद्विकाराधिष्ठितस्य' इति स्थले 'अधिविकारविषितस्य' इति स्वैरं पाठशोधनं कैश्चित्कृतं अहृद्यम् । यतः - एतद्भाष्यच्छायानुसारिणि श्रीवत्साकनारायणमुनिभाष्ये स्पष्टं "आचार्यः प्रथमं रजस्तमः प्रचुरदेहेन्द्रियादिविशिष्टत्वात्-----स्वतन्त्रोऽहं--इति च भ्राम्यतः----शिष्यस्य" इति अचिद्विकाराधिष्ठितपदविवरणदर्शनात् ।

6. **भ्रमादि** - अत्रादिपदेन देवतान्तर-राजान्तरादिपारतन्त्र्यभ्रमो विवक्षितः।

### सर्वस्य ईश्वरपरतन्त्रता

इदम् तत्तत्प्रमाणसिद्धम्, ईश्वरव्यतिरिक्तम्, चिदचिदात्मकम् [1]ईशा "ज्ञाज्ञौ द्वावजावीशनीशौ" ( श्वे. उ.1-9) इत्यादिषु जीवादत्यन्तविलक्षणतया प्रख्यातेन, सर्वनियन्त्रा पुरुषोत्तमेन , वास्यम् - व्याप्यमित्यर्थः। सर्वाधारे स्वस्मिन्, स्वेन वसनीयं वा । स्मर्यते हि - "सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततस्स वासुदेवेति विद्वद्भिः परिपठ्यते" इति ।। (वि.पु.1-2-22)

जगत्यामिति लोकान्तराणामुपलक्षणम् । जगत्-स्वरूपतः धर्मतो वा अन्यथात्वं गच्छत्, भोग्यभोक्तृरूपं वस्तुजातम् । अतदात्मकं किंचिदपि नास्तीति दृढयितु यत्किंचेति विशेष्यते। "इन्द्रियाणि मनो बुद्धिः सत्वं तेजो बलं धृतिः । वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञमेव च" ।। इति उपबृंहितम् ।

### ईशशब्दस्य रुद्रपरत्वनिरासः

[1]ननु "रूढिर्योगमपहरति" (पू.मी.6-1-12) इति न्यायात् ईशोऽत्र रुद्रः स्यात्; सर्वाद्युपपदाभावाच्च । [2]मैवम् ; कारणविषय- आकाशप्राणादिशब्दवत् रूढेः इह बाधितत्वात् । "एको ह वै नारायण आसीत् न ब्रह्मा नेशानः" ( म.उ.1-1 ) "अनपहतपाप्मा अहमस्मि नामानि मे धेहि" (शत.ब्रा.) इत्यादिभिः असर्वकारणत्वेन कर्मवश्यत्वेन च संप्रतिपन्ने रुद्रे सर्वावास्यत्वसर्वाधारत्वादेः असम्भवात् । तदुक्तया प्रसिद्धे अनवच्छिन्नैश्वर्ये सर्वेश्वरे यौगिकोयं शब्दः प्रत्येतव्यः । यद्यपि प्रसिद्धयन्निर्देशाभावात्, आकाशादिवाक्यवैषम्यम् ;तथापि [3]"ऐन्द्री" न्यायात् (पू.मी.3-2-2.)

---

1. 'ननु रूढिर्योग ' इति, प्रकृतिप्रत्ययरूपावयवार्थविवेचनेन अर्थबोधकत्वात् योगः विलम्बितधीहेतुः । रूढिस्तु तथा अवयवार्थविवेचनमन्तरेण झटिति समुदायश्रवणमात्रेण अर्थं बोधयतीति रूढेः योगापहारकत्वम् । ईशशब्दः कोशाद्युपस्कृतलोकप्रसिद्धेः रुद्रपर एव किं न स्यात् इत्याक्षेप्तुराशयः।' ईशः सर्वस्य जगतः' इत्यादौ सर्वशब्दसमभिव्याहारात् ईशशब्दो यौगिकार्थपुरस्कारेण कामं अन्यपरोऽप्यस्तु । नात्र तथा । निरुपपदत्वादीशशब्दस्येति च तदाशयः ।
2. मैवमिति अयोग्यरूढ्यर्थस्वीकारापेक्षया यौगिकोऽपि योग्यः अबाधितश्चार्थः स्वीकार्य इति आकाशप्राणाधिकरणयोः शिक्षितम् । तत्र प्रसिद्धाकाशप्राणयोः सर्वजगत्कारणत्वयोग्यताविरहात् यथा तत्परित्यागेन यौगिकार्थस्वीकरणेन च परमात्मपरत्वं आकाश-प्राणशब्दयोः प्रतिपादितं , तन्न्यायेनैव अत्रापि अनपहतपाप्मत्वादिश्रवणेनकर्मवश्यतयनिश्चितेरुद्रेऽपिनिरुपाधिकसर्वेश्वरत्व-सर्वाधारत्वादिविरहात्तत्परित्यागेन ईशशब्दोऽयं परपुरुषपर एवेति स्वीकार्यमिति समाधिः ।
3. 'ऐन्द्री" न्यायादिति - 'कदाचन स्तरीरसि नेन्द्र !सश्चसि दाशुषे' इत्यस्मिन् मन्त्रे स्थितस्य इन्द्रशब्दस्य रूढ्या इन्द्रपरत्वेन इन्द्रोपस्थानागत्वमिति पूर्वपक्षं कृत्वा, "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इति श्रुत्या गार्हपत्योप-स्थानांगतया प्रतिपन्नेऽस्मिन् मन्त्रे प्रसिद्धेन्द्रस्यान्वयाभावादेव इन्द्रशब्दः रूढित्यागेन गौणवृत्त्या गार्हपत्यपरतया

---

1. ईशा ' इति पदं नास्ति - क

विरुद्धार्थविषयतयैव रूढिभंगोपपत्तिः। [1]नचात्र "सर्वत्वमाधिकारिकम्" (पू.मी.1-2-16) इति न्यायः; संकोचादृष्टेः । [2]प्रवाहेश्वरानेकेश्वरपक्षौ तु त्रैकालिकसर्वनिर्वाहकेश्वर-प्रतिष्ठापकैः प्रमाणगणैः प्रत्यूढौ ।

नारायणस्यैव सर्वावास्यत्व स्थापनम्

अतः "पतिं विश्वस्यात्मेश्वरम्" (तै.ना.92) इत्यादि प्रसिद्धानन्याधी[1]नैश्वर्यं 'योसावसौ पुरुषः' (ई.उ.16) इत्यनुवदिष्यमाणं, ब्रह्मेशानजनकतया अनन्यथासिद्ध-वाक्यनिर्धारितम्, 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' (सुबा.उ.7) इत्यादिषु सर्वान्तर्यामित्वेन प्रख्यातम्, तत एव - "स ब्रह्मा स शिवः" (तै.ना.101) इत्यादि विभूतिभूतानां ब्रह्मशिवेन्द्रादीनां, "विश्वमेवेदं पु रुषः" (तै.ना.91) इत्यत्र [3]विश्वस्येव विशेष्यतयोक्तं नारायणमेव सर्वस्यावास्यं 'ईशम्' वक्तुमुचितमेतद्वाक्यम् - इत्यलम् [4]अन्यरूढिप्रसंगरहित असमस्तपदाध्ययनानभिज्ञा-श्रोत्रियचोद्योपालम्भनेन ।।

---

सिद्धान्तितः। तथैवात्रापि कर्मवश्ये रुद्रे सर्वकारणताविरोधात् तत्परित्याग इति भावः ।।

1' "न चात्र सर्वत्वमाधिकारिकं"मिति । पुनरपि एष शंकितुः आक्षेपः । "संकोचादृष्टे"रिति च तत्समाधानम् । अयं भावः । निरुपाधिकं ईश्वरत्वं कर्मवश्ये रुद्रे मास्तु । स्वशेषभूतकैलासवासिसर्वप्रमथगणापेक्षया ईश्वरत्वमेवात्र "इदं सर्वं" इत्यनेन विवक्षितं किं न स्यात्? एवं सर्वशब्दस्य प्रकृतार्थपरतया संकोचः पूर्वमीमांसायामपि क्वचित् दृष्टः । यथा "पूर्णाहुत्या सर्वान् कामानवाप्नोति" इति श्रुतिवाक्येन पूर्णाहुत्यैव सर्वविधफलावाप्तौ किं तत्तत्फलसाधकैः कर्मान्तरैरिति आक्षेपे प्राप्ते, "सर्वत्वमाधिकारिकं" इति सूत्रेण (1-2-1) पूर्णाहुतिवाक्यगतः सर्वशब्दः अग्निकर्माधिकृतफलमात्रग्राहीति प्रकरणात् संकोचो दर्शितः । न हि "भीमः सर्वमोदनं भुङ्क्ते" इत्युक्ते सर्वशब्दः त्रैलोक्यगतं ओदनं बोधयेत् - किन्तु प्रकरणावष्टब्धमेव तत् । तथात्रापि मन्त्रे " इदं सर्वं"मिति सर्वशब्दसंकोचेन रुद्रपरत्वमिति शंका । सत्यम् । तत्र पूर्णाहुतिश्रुतौ कर्मान्तरवैयर्थ्यपरिहाराय सर्वशब्दसंकोचः । प्रकरणं च तत्रोपष्टम्भकम् । न चात्र तथा संकोचे प्रमाणम् । नापि प्रकरणं, अनारभ्याधीतत्वात् । प्रत्युत "यत्किंच जगत्यां" इति पदान्तरविशेषणात् निरवशेषं सर्वं ग्राह्यमिति बाधकमपि दृष्टमिति, नेदृशं असंकुचितसर्वेश्वरत्वं रुद्रस्येति समाहितिः।

2. प्रवाहेश्वरपक्ष-अनेकेश्वरपक्षौ इति । प्रतिकल्पं सृष्टौ कश्चित् सर्वनिर्वाहक ईश्वरः । प्रलयानन्तरभाविनि सर्गान्तरे चान्यः । इति प्रवाहेश्वरपक्षः । एकैकस्मिन्नपि सर्गे ब्रह्मरुद्रादयः सृष्टिप्रलयादिकार्यभेदेन समानैश्वर्यशालिनः अनेके - इति द्वितीयः।।

3. "विश्वस्येव" इति दृष्टान्तः । यथा "विश्वमेवेदं पुरुषः" इत्यत्र परमपुरुषः विश्वशब्दविशेष्यतयोक्तः, तथा विशेष्यतया वाच्य इति । तथा च चिदचिदात्मकविश्वेन यथा न स्वरूपैक्यं ब्रह्मणो घटते इति विश्वशरीरकत्वविवक्षा, तथा ब्रह्मरुद्रादिभिरपि न स्वरूपैक्यं शक्यशंकमिति तत्रापि तत्तच्छरीरकतया नारायणस्य विशेष्यत्वमिति भावः ।।

4. अन्यरूढीत्यादि - अन्यस्मिन् रुद्रे - रूढिप्रसंगरहितं असमस्तं च यत् ईशा इति पृथक्पदं, तदध्ययनानभिज्ञाः रुद्रपरत्वचोद्यकृतः अश्रोत्रिया इत्यर्थः । ईशा-वास्यमिति पृथक्पदत्वेनैव सम्प्रदायपाठसत्त्वात् तदनभिज्ञैः ईशपदसत्त्वभ्रमेण कृतं चोद्यमिति भावः। एवं च समस्तपदत्वं स्वीकृत्यापि चोद्यपरिहारः कृत इति बोध्यम्।

---

1. ---नैश्वर्यः - ग.

### वैराग्यभूषितवृत्त्युपदेशः

एवं मुमुक्षोः ईश्वरपारतन्त्र्यबोधमुत्पाद्य वैराग्यभूषितां वृत्तिम् उपदिशति 'तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद्धनम्' इति । तेन - जगता भोग्यताभ्रमविषयेण त्यक्तेन - [1]दोषभूयस्त्वदर्शनात् परित्यक्तेन, उपलक्षितस्सन्, भुञ्जीथाः - [2]अप्रतिषिद्धयोगधर्मोपयुक्तदेहधारणमात्रौपयिकं भोग्यवर्गम्- इति, [3]अर्थप्रकरणाभ्यां सिध्यति। यद्वा सर्वावासत्वेन प्रकृतं निरतिशयभोग्यं वक्ष्यमाणोपायमुखेन [4]भुञ्जीथाः इति योज्यम् । कस्यस्वित् -कस्यापि बन्धोरबन्धोर्वा धनम्, मा गृधः - माभिकाङ्क्षः । आह च यमः किंकरं प्रति "परमसुहृदि" इत्यारभ्य "शठमतिरुपयाति योऽर्थतृष्णां पुरुषपशुर्न स वासुदेवभक्तः" ( वि.पु.3.7.29,30) इति। इदं च धनाशाप्रहाणं परमात्मेतरकृत्स्नविषयवैराग्योपलक्षणम् । स्मर्यते हि -

'परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि' ( ना.प.उ.3-18) इति ।।

## ईशावास्यप्रकाशिका

(श्रीवत्सनारायणमुनीन्द्रविरचिता)

### मंगलम्

विश्वं व्याप्य धार्यं [1]येन, विचित्राश्च शक्तयो यस्य ।
श्रीरंगेशं तमृषिं तनुवाक्चित्तैरुपास्महे पुरुषम् । 1 ।

### ईशावास्यसारः

[5]सर्वेशानस्सर्वभूतान्तरात्मा दोषानर्हस्सर्वविद्यैकवेद्यः ।
कर्माराध्यःसाध्यभक्त्येकलभ्यःश्रीमान्व्यक्तो वाजिना संहितान्ते । 2 ।

---

1. लौकिकस्य ऐश्वर्यस्य परित्यागे हेतुः दोषभूयस्त्वम् । तच्च "दुःखमूलं दुःखमिश्रं खुःखोदर्कमथास्थिरम् । अल्पं देहात्मधीमूलं दायप्राप्तविरोधि च ।। " इत्यादि श्लोकोक्तं दोषसप्तकम् ।

2. अप्रतिषिद्धयोगेति - अप्राप्तस्य प्राप्तिः योगः । धनादिलाभ इत्यर्थः। स च अप्रतिषिद्धेन पथा ग्राह्यः। यजन-याजन-अध्ययनाध्यपनादिना शास्त्रविहितेनैव पथा प्राप्तं ग्रह्यमिति भावः । अप्रतिषिद्धयोग - धर्मोपयुक्त - देहधारणमात्रौपयिकं च इति कर्मधारयः ।

3. अर्थप्रकरणाभ्यां - इति । अत्र अर्थो नाम - अर्थापत्तिः। "तेन त्यक्तेन " इति त्यागप्रकरणेऽस्मिन् सर्वत्यागे देहधारणाद्यसंभवात् तदौपयिकं भोग्यजातं तु अर्थात्सिद्धं ग्राह्यम्।।विद्याप्रकरणत्वाच्चतदविरुद्धंसत्त्वशुद्ध्यौपयिकं भोग्यजातमेव स्वीकार्यमिति च भावः ।।

4. भुञ्जीथा - इति । यद्वा - इति द्वितीययोजनायां सर्वावास्यं निरतिशयभोग्यं च ब्रह्मैव कर्म । उपासनस्य प्रीतिरूपत्वविधानात् उपास्यस्य परमभोग्यत्वाच्च प्रियतमब्रह्मानुभवपूर्वकं उपासनं भुञ्जीथा इत्यनेन विहितं प्रथममन्त्रेणेति भावः। ब्रह्मभोगोऽयं उपासनकालिकः, न तु मोक्षकालिक इति भाव्यम् ।

5. सर्वेशानः - इति श्रीदेशिकभाष्यगत संग्रहश्लोके "सहजमहिमत्वं कलुषशमनत्वं - मुक्तोपभोग्यत्वं" च अत्र विसृष्टं, सिद्धोपायत्वस्थाने साध्यभक्त्येकलभ्यत्वं प्रोक्तमिति च विशेषः ।।

---

1. तेन -क.

प्रतिज्ञा

यस्याचार्यैः कृतं भाष्यम् गम्भीरं विदुषां मुदे ।
बालामोदाय तद्भावः यथाभाष्यं प्रकाश्यते ।। 3 ।।
ईशावास्यानुवाकोयं वाजिनां संहितान्तगः ।
शिष्याय गुरुणा यस्मिन् ब्रह्मविद्योपदिश्यते ।। 4 ।।
कर्मणां संहितोक्तानां विनियोगपृथक्त्वतः ।
विद्यांगतास्ति तद्व्यक्त्यै निबन्धोस्य तदन्ततः ।। 5 ।।

"ईशावास्यमिदं सर्वम्" इत्येषोनुवाकः, अष्टादशमन्त्रात्मकः । एते च मन्त्राः पुरुषसूक्तोदित-परमपुरुष-तत्स्वरूप-तदुपासन-प्रपदन-तत्प्राप्तिरूप-तत्वोपायपुरुषार्थानां संग्रहेण सम्यक्प्रतिपादकत्वात् कर्मसु कल्पसूत्रकृता कात्यायनेन 'विनियुक्तत्वाच्च' उपनिषत्सारभूताः । भगवद्गीतादिभिश्च एतेषां मन्त्राणां उपबृंहणं तत्र तत्र परस्तात् प्रदर्शयिष्यते ।

एतदुपनिषदः संहितान्तपाठोपपत्तिः

[1]नन्वेवं ब्रह्मकाण्डे बृहदारण्यक एवैषां पाठः स्यात् ; न संहितायाम्, प्रयोजनाभावात् इति चेन्न, एतेषु सारभूतानां [1]पंचमन्त्राणां बृहदारण्यकेऽपि पाठदर्शनात् ।"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" ( बृ.उ. 6-4-22) विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ।। (ई.उ.11) इति अविद्याख्यस्य कर्मविशेषस्य ब्रह्मविद्यायां विनियुक्तत्वेन संहितायामुदाहृतं कर्मजातं विद्याया अप्यंगम् इति विशदीकरणार्थम् एषां संहितान्तपाठोपपत्तेश्च । अतः कर्मसु "विनियुक्तत्वात् "पूर्वोक्ततत्त्वोपायप्रयोजनप्रतिपादनपरत्वाच्च उपनिषद एवैते मन्त्राः इति सिद्धम् ।

अवतारिका

तत्र तावदाचार्यः प्रथमं रजस्तमः प्रचुरदेहेन्द्रियादिविशिष्टत्वात् ईश्वरोऽहमहं भोगी (भ.गी.) इत्यादिश्रीभगवद्गीतोक्तप्रक्रियया 'स्वतन्त्रोहं, देवतान्तरपरतन्त्रोऽहम्' इति च भ्राम्यतः [2]तत्त्वबुभुत्सया च उपसन्नस्य शिष्यस्य स्वतन्त्रात्मभ्रमादिनिवृत्त्यर्थं चिदचिदात्मकस्य कृत्स्नस्य प्रपंचस्य परमपुरुषायत्तस्वरूपस्थितिप्रवृत्तित्वं उपदिशति - ईशावास्यमिति ।

---

1. नन्वेयमिति - कर्मकाण्डान्ते ( संहिताभागे) एतन्मन्त्रपाठं साक्षेपं समर्थयते ।।
2. बुभुत्सा - बोद्धुं इच्छा । जिज्ञासा ।।

---

1.पंचषण्मन्त्राणाम् - क, पंचषण्मन्त्राणाम् - ग.

ईश्वरपारतन्त्र्यनिरूपणम्

**इदम्** - अचिन्त्यविविधविचित्ररचनतया ब्रह्मादिस्तम्बपर्यन्तक्षेत्रज्ञमिश्रतया च प्रत्यक्षादिप्रमाणसिद्धमित्यर्थः । **सर्वम्** - ईश्वरव्यतिरिक्तं भोग्यभोक्तृरूपम् सर्वम् । 'ईशा' इति तृतीयैकवचनान्तम्, सर्वनियन्त्रा इत्यर्थः संकोचे मानाभावात् । महापुरुषेणेति यावत्, "योऽसावसौ पुरुषः" इति अनुवदिष्यमाणत्वात् । स एव हि सर्वस्येष्टे । तथा च श्रुत्यन्तरं ' पतिं विश्वस्यात्मेश्वरम्' इति । तेन **वास्यम्** - निवासनीयम् व्याप्यमिति भावः, अनन्याधारत्वात् परस्य ब्रह्मणः । यद्वा सर्वाधारे स्वस्मिन्नेव स्वेन वसनीयं, प्रतिष्ठापनीयमित्यर्थः । स्मर्यते हि -

'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततस्स वासुदेवेति विद्वद्भिः परिपठ्यते ।।" इति ।। (वि.पु.1.2)

**जगत्यां** - उर्व्याम्, इदं लोकान्तराणामप्युपलक्षणम् । **जगत्** - अन्यथात्वं गच्छत्। तत्र अचिदंशस्य भोग्यत्वाय स्वरूपविकाररूपमन्यथात्वं, चिदंशस्य भोक्तृत्वाय ज्ञान-संकोचविकासादिलक्षणस्वभावविकारेण अन्यथात्वमिति भेदोऽनुसन्धेयः । ईशेनाव्याप्तं किंचिदपि नास्तीति दर्शयितुं यत्किंचेति जगत् विशेष्यते । जगत्यादिषु लोकेषु यत्किंच भोक्तृभोग्यरूपं जगद्वर्तते , तदिदं सर्वं ईशा वासुदेवेन, वास्य-व्याप्यं धार्यं चेत्यर्थः ।

'इन्द्रियाणि मनो बुद्धिस्सत्वं तेजो बलं धृतिः । वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञमेव च' ।। (वि.स.फलश्रुतिः) इत्याद्युपबृंहमणसहस्रमिहानुसन्धेयम् । 'पृथगात्मानं प्रेरितारं च मत्वा' (श्वे.उ.1.6) 'ज्ञाज्ञौ द्वावजावीशनीशौ' (श्वे.उ.1.9.) ईशानीशावित्यर्थः । 'नित्यो नित्यानां चेतनश्चेतानामेको बहूनां यो विदधाति कामान्' (क.उ.5-13) इत्यादिषु प्रसिद्धः जीवेश्वरयोः ईशेशितव्यादि-लक्षणयोः अत्यन्तभेदोऽप्यत्र सिद्धः । ननु 'रूढिर्योगमपहरति' इति न्यायादीशोऽत्र रुद्रस्स्यात् ; मैवं, एको हवै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि नाग्निर्न सूर्यो न चन्द्रमाः स एकाकी न रमेत' (महो.1.1) इत्यादिषु 'अनपहत-पाप्माहमस्मि नामानि मे धेहि' (शतपथ.) इत्यादिषु च भगवत्कार्यत्वेन कर्मवश्यत्वेन च सम्प्रतिपन्ने रुद्रे, सर्वव्यापित्वसर्वाधारत्वादेः अन्वयासम्भवेन विरुद्धार्थविषयतयैव इह रूढेः भग्नत्वात् । एवं च जगत्कारणवादिवाक्यगताकाशप्राणादिशब्दन्यायेन 'अज-स्सर्वेश्वरस्सिद्धः' (वि.स.11) इत्यनवच्छिन्नैश्वर्यतयाप्रसिद्धेसर्वेश्वरे यौगिकएवायम् 'ईट्' शब्दः प्रत्येतव्य इति सिद्धम् ।

### वैराग्यवृत्तेः उपदेशः

एवं मुमुक्षोः ईश्वरपारतन्त्र्यबोधमुत्पाद्य वैराग्यभूषिता वृत्तिमुपदिशति - **तेन त्यक्तेन भुंजीथाः** इति - तेन जगता भोग्यताभ्रमविषयेणेति भावः । त्यक्तेन अल्पास्थिरत्व-दुःखमूलत्व-दुःखमिश्रत्व-दुःखोदर्कत्व-देहात्माभिमानमूलत्व-स्वाभाविकब्रह्मानुभवविरुद्धत्वरूपा ये विषयदोषास्सप्त, तन्निरूपणपूर्वकं परित्यक्तेन उपलक्षितस्सन् भुंजीथाः - भगवदुपासनोपयुक्तदेहस्य धारणमात्रौपयिकमन्नपानादिकं याग-दान-होमार्चनाद्युपयोगिपरिजनपरिच्छदादिकं च भोग्यवर्गं भुंजीथा इत्यर्थः ।

यद्वा दोषसप्तकनिरूपणात् त्यक्तेन भोग्याभासेनोपलक्षितस्सन् भुंजीथाः, सर्वावासत्वेन प्रकरणे प्राप्तं उक्तदोषप्रतिभटं निरतिशयभोग्यं वक्ष्यमाणोपायमुखेन भुंजीथाः' इति योज्यम् ।

अत्र च 'भोक्ता भोग्यं प्रेरितारं च मत्वा' (श्वे.उ.1.12) ' द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' (श्वे.उ.4.6) 'समाने वृक्षे पुरुषो निमग्नः अनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' (श्वे.उ.4.7) । महिमानम् इति प्राप्नोतीत्यर्थः । [1]छान्दसो गुणाभावः । तदेति प्रतिनिर्देशोऽध्याहार्यः । यदाऽन्यमीशम् अस्य महिमानं च पश्यति, तदा वीतशोको भवति इत्यन्वयो वा ।

**मागृधः कस्यस्विद्धनं** - कस्यस्वित् कस्यापि बन्धोरबन्धोर्वा धनं मा गृधः - माऽभिकाक्षीः । 'गृधु अभिकाक्षायाम्' (पा.धा. पा.1247) इति धातुः ।

आह च यमः किंकरं प्रति

'हरति परधनं निहन्ति जन्तून्वदति तथाऽनृतनिष्ठुराणि यश्च ।
न सहति परसम्पदं विनिन्दां कलुषमतिः कुरुते सतामसाधुः ।।
परमसुहृदि बान्धवे कलत्रे सुततनयापितृमातृभृत्यवर्गे ।
शठमतिरुपयाति योऽर्थतृष्णां पुरुषपशुर्न स वासुदेवभक्तः' (वि.पु.3.7.2-3)

इति । भगवद्गीतासु च 'न काङ्क्षे विजयं कृष्ण' (भ.गी.1.32) इत्यादि । इदंच धनाशाप्रहाणं परमात्मव्यतिरिक्तकृत्स्नविषयवैराग्योपलक्षणम् । स्मरन्ति हि -

'परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि' (ना. प. उ. 3-18) इति ।

---

1. **छान्दस इति** - "महिमान इति " महिमानं प्राप्नोतीत्यर्थः । यद्यपि इण्धातोः लटि इकारस्य गुणे एतीति रुपसिद्धिः। तथापि गुणाभायः छान्दस इति समाधानम् ।।

## श्रीरंगाचार्यभाष्यम्

### मंगलाचरणम्

[1]श्रीमान् वेंकटशैलात् हरिरुद्यन्नोऽद्य दहरदिवि दीप्तः।
दहतु सुदर्शनमहसा सत्पथसंचारिवैरिसन्तमसम् ।।

[2]श्रीरामानुजयोग्यनन्तगुरुराट् सौम्योपयन्त्राह्वयै
र्यो वेषैरपुनाज्जगत्कुलगुरुर्यस्यात्र नो मध्यमः ।
आस्तां चापि तथा न आद्यचरमावाम्नायसिन्धुद्वयी-
पारप्रापणनाविकौ फणिपतिः सोऽयं विधत्तां जयम् ।।

[3]आध्यात्मिक्यां सरण्यां मम हृदयरथं स्वामि यन्त्वश्वरूपाः
श्रीशः श्रीभाष्यकारो भुवनगुरुवरो रम्यजामातृयोगी ।
सज्जास्संचारयन्तामविषममधुनाऽनुज्झितप्राच्यलेखं
दुर्मानोद्धृत्तवाहो न गमयति यथा दुष्पथं वक्रकर्णी ।।

---

1. श्लोकेऽत्र हरिपदं शेषशैलाधिप श्रीनिवासं सूर्यं च श्लेषेणाभिधत्ते। द्वयोः सादृश्यात् उपमाध्वनिः। विशेष्यस्य श्लिष्टत्वात् नालंकार इति व्यवस्था ।। शैलादुदयः दिवि (आकाशे) दीप्तत्वं सत्पथे (नक्षत्रमार्गे संचारः) महसा सन्तमसनिवारणं च सूर्यस्य यथा, तथा श्रीनिवासस्यापि वेंकटशैलादुदयः, (आविर्भावः) दहराकाशे (योगिनां) दीप्तत्वं, सत्पथसंचारः, (प्रपन्नजनानुवर्तित्वं) सुदर्शनज्योतिषा सुरवैरितमोविनाशकत्वं, च अस्तीति सादृश्य-निर्वाहः। भगवति सूर्यत्व-दहरकोशवर्तित्वकथनेन "पूषन्नेकर्षे;----योऽसावसौ पुरुषः-----"इत्यादि (16) मन्त्रार्थः संगृहीतः। सन्तमस शब्दाभिहितपाप्मविनाशकत्वोक्त्या "शुद्धं अपापविद्धं " इति (8) मन्त्रोक्तार्थश्च स्मारितः ।।

2. फणिपतिः - आदिशेषः । स एव भगवद्रामानुजरूपेण स्ववंशमूलपुरुषानन्तार्य(अनन्दाळ्वान्) रूपेण वरवरमुनिवर्यरूपेणावतीर्णः ।। तत्र आद्यः भगवद्रामानुजः चरमो वरवरमुनिश्च क्रमेण संस्कृत-द्राविडवेदान्तसागरपारप्रापणे कर्णधारौ आस्ताम् (अस-धातोः लङि प्रथमपुरुषद्विवचनम्) । सोऽयं शेषो जयं विधत्ताम् ।

3. प्रथमाचार्यः श्रीशः श्रीभाष्यकारः लोकाचार्यः वरवरमुनीन्द्रश्चेति गुरवोऽमी मम हृदयं गहनायां अध्यात्मविद्यापद्धतौ अविषमं अप्रतिहतं च प्रवर्तयन्ताम् - इति प्रार्थयते। तत्र स्वहृदयस्य रथत्वं चतुर्णां आचार्याणां क्रमेण रथित्वं (सारथित्वं) अश्वत्वं च (चरमयोः द्वयोः) इति रूपणप्रक्रियाकथनम् "आत्मानं रथिनं" इति कठोपनिषदुक्ता "युग्यस्यन्दनसारथी"ति श्लोके श्रीदेशिकोक्ता च रूपणप्रक्रियाऽत्र यथायथं भाव्या ।। दुर्मान एव उद्धताश्वः यथा वक्रमार्गे कर्णन् मां न निपातयेत् यथा च प्राचीनगुरुक्षुण्णात् पथः रेखामात्रमपि नातिक्रमणं स्यात्, तथा मदीयं हृदयरथं नयेयुरिति वाक्यार्थः ।।

[1]वेदान्ता काननान्ताः कुमतिकृतिमयैः कण्टकैर्दुर्गमार्गा
दुस्साधान्तस्स्थबोधाः स्वयमतिगहनाः सन्ति घण्टापथैः तान् ।
आरामान् वाऽभिरामान् सुकरविहरणान् कर्तुमद्याखिलानां
श्रीरंगं सान्तरंगं कलयतु सफलं प्रोद्यतं श्रीनिवासः ।।
श्रीशैलानन्तपुरुषगुरुपरिबृढदिव्यसिंहपीठस्थः ।
ईशावास्योपनिषद्भाष्यं श्रीरंगसूरिरातनुते ।।

### ग्रन्थावतरणिका - संहितान्तपाठसमर्थनं च

काण्वमाध्यन्दिनभेदभिन्नानां वाजसनेयिनां चत्वारिंशदध्यायात्मकशुक्लयजुर्वेद संहितायां एकोनचत्वारिंशाध्यायपर्यन्तात् कर्मकाण्डरूपात् भागात् अनन्तरः चरमो ज्ञानकाण्डरूपोऽयं चत्वारिंशोध्याय ईशावास्योपनिषत्संज्ञो व्याख्यायते । अयमध्यायः काण्वैरष्टादशमन्त्रात्मको माध्यन्दिनैः सप्तदशमन्त्रात्मकश्च पठ्यते ।

अयं खल्वध्यायः कर्मकाण्डरूपसंहिताघटकतया पठ्यमानोऽप्यत्रत्यमंत्राणां कर्मसु कल्पसूत्रकारादिभिः विनियोगादर्शनात्, बर्हिर्लवनाद्यनुष्ठेयकर्मप्रकाशकानां [2]'बर्हिर्देवसदनं दामि' इत्यादीनामिव अनुष्ठेयकर्मप्रकाशकत्वलक्षणकर्मविनियोगव्यंजकलिंगादर्शनेन लिंगबलादपि तदसिद्धेः, प्रत्युतात्मयाथात्म्यादिप्रतिपादनमुखेन विद्याविनियोगस्यैवावगमाच्च ज्ञानकाण्डरूप एव ।

न च, यद्ययमध्यायो ज्ञानकाण्डरूपः, तर्हि वाजसनेयिनां ज्ञानकाण्डरूपायां बृहदारण्यकोपनिषदि कुतोऽयं न पठ्यते? बृहदारण्यकोपनिषदपि वा अनेनैव सह संहितान्तर्गततया तदन्ते एव कुतो न पठ्यते? अतोऽयं कर्मकाण्डसंहितानन्तर्गततया पृथक्पठ्यमानज्ञानकाण्डभूतबृहदारण्यकोपनिषदन्तःपातित्वात्प्रत्युत कर्मकाण्डरूपसंहितान्तःपातित्वाच्च, कर्मकाण्डशेषभूत एव स्वीकर्तुमुचितः इति वाच्यम् ; अत्रत्यकतिपयमन्त्राणां बृहदारण्यकोपनिषद्यपि दर्शनेनास्य ज्ञानकाण्डरूपतायाः

---

1. वेदान्ताः स्वत एव दुष्प्रवेशतया काननप्रदेशसदृशाः । तत्रापि कैश्चन व्याख्यानच्छलेन वैयाकुली कुर्वद्भिः कण्टकप्रक्षेप एव कृतः। तादृशान् वेदान्तभागान् सुन्दरान् आरामानिव सुखप्रवेशान् कर्तुं श्रीरङ्गाचार्यः प्रोद्यतः । तदीयमुद्यमं श्रीनिवासः सफलयतु । वा - शब्दः इवार्थकः।।

2. बर्हिरिति - देवानां उपसदनस्य उपवेशनस्य योग्यं बर्हिः - दर्भविशेषं दामि - लुनामि - इति मन्त्रार्थः। दो - अवखण्डने - इति धातोः लटि दामीति उत्तमपुरुषैकवचनम् ।
मन्त्राणां अनुष्ठेयार्थप्रकाशकत्वकथनात् - बर्हिर्लवनरूपार्थबोधकोऽयं मन्त्रः । अत एव सामर्थ्यरूपाल्लिंगात् लवनक्रियांगमिति यथा निर्णीतम्, न तथा मन्त्राणामेषां अनुष्ठेययागादिगतकर्मविशेषव्यंजकत्वादर्शनात् कर्मांगतया विनियोग इति भावः ।

प्रत्यभिज्ञाप्यमानत्वात्, कर्मकाण्डात् ज्ञानकाण्डस्य पृथक् पाठ्यत्वेऽपि संग्रहेण विद्यास्वरूपं प्रदर्श्य कर्मकाण्डविहितकर्मणाम् आत्मयाथात्म्यज्ञानेन त्रिविधत्याग-संस्कृतानाम् आकारान्तरेण तदंगताज्ञापनार्थमेव ज्ञानकाण्डरूपस्यापि एतदध्याय-लक्षणाल्पभागस्य कर्मकाण्डसंहितान्ते पाठोपपत्तेश्च । एतदध्यायगतमन्त्राणां बृहदारण्यकोपनिषदि षष्ठाध्यायचतुर्थब्राह्मणसप्तमाध्यायपंचदशब्राह्मणादौ किंचिद्भेदेन पाठो दृश्यमानोऽस्याध्यायस्य ज्ञानकाण्डरूपत्वं स्पष्टयति । अतोऽयमध्यायः ज्ञानकाण्डरूपः एव ।

### प्रथममन्त्रावतारिका

प्रथमं बुभुक्ष्वधिकारिककर्मकाण्डप्रतिपन्नकेवलकर्मफलानित्यत्वगतागतपुनः पुनरवर्जनीयसंसारबन्धसंभवविज्ञान[1]निर्विण्णहृदयस्यमुमुक्षोःअधिकारिणःसंसारबन्ध निवृत्त्यनन्तस्थिरफलब्रह्मप्राप्तिहेतु सांगब्रह्मविद्याम् उपदिदिक्षुर्वेदपुरुषः प्रथमं ब्रह्मविद्यां प्रस्तुत्य तदनु तदंगतया विधास्यमानानां कर्मणां संस्कारविशेषभूतं बुद्धिविशेषलक्षणं त्यागम् उपदिशति ईशावास्यमित्यादिना प्रथममन्त्रेण ।।

### प्रतिपदार्थविवरणम्

अस्य प्रतिपदविवरणम् । **इदं** - प्रत्यक्षादिप्रमाणसिद्धं, **सर्वम्**- चिदचिदात्मकं वस्तुजातं, स्वेतरत्कृत्स्नं जगत् इत्यर्थः, **ईशा** - ईष्ट इतीट्, 'ईश-ऐश्वर्ये' (पा.धा. 1020) इत्यस्य धातोरदादिगणघटकस्य 'क्विप्च' (पा.सू.3.2.76) इत्यनुशासनेन कर्तरि क्विबन्तोऽयं शब्दः । तेन ईशा सर्वेश्वरेण श्रीमन्नारायणेन, **वास्यं** - वसितुम् आच्छादयितुं वस्त्रादिवत् स्वातिशयाधायकतया धारयितुं योग्यं, सर्वेश्वरेण स्वप्रयोजनविनियोजनैकयोग्यपरतन्त्रवस्तुभूतमिति यावत् ।

'वस आच्छादने'(धा.पा.1023) इत्यस्य धातोः अदादिगणघटकस्य 'ॠहलोर्ण्यत्' (पा.सू.3.1.124) इत्यनुशासनेन ॠवर्णान्तात् हलन्ताच्च धातोः ण्यत् स्यात् इत्यर्थकेन कर्मणि ण्यत्प्रत्ययान्तोऽयं शब्दः। अत्र वसधात्वर्थभूतम् आच्छादनं न तिरोधानप्रयोजकव्यापाररूपमपवारणम् । अपि तु स्वातिशयाधायकतया धारणमेव,

---

1.निर्विण्णहृदयस्येति । "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्---"इत्यादि-मुण्डकोपनिषन्मन्त्रार्थः स्मारितः। एवं प्रथममन्त्रावतारिकावाक्येन अधिकारि-विषय-प्रयोजन-सम्बन्धरूपं अनुबन्धिचतुष्टयं च ज्ञापितं भवति । तथाहि - मुण्डकश्रुत्युक्तविधया अल्पास्थिरकर्मफलविरक्तः अनन्तस्थिरफलब्रह्मानुभवकामो मुमुक्षु-रधिकारी। परावरात्मस्वरूप-साधनस्वरूप-मोक्षफलस्वरूपविरोधिस्वरूपनिरूपणं विषयः। ब्रह्मविद्यावगमः तद्द्वारा मोक्षश्च प्रयोजनम् । प्रतिपाद्यप्रतिपादकभावश्च सम्बन्ध इति ।।

'वस्त्रं वस्ते' इत्यादौ वस्त्रधारणस्यैव बोधात्। 'वसानमेणाजिनमंजनद्युति' (माघ.1.6) इत्यादिषु वस्तेर्धारणार्थकतयैव प्रयोगात्। तदर्थपरस्य आच्छादनशब्दस्यापि इह 'शाटीमाच्छाद्य दुश्छदाम्'(रा.2.32.33) 'आच्छादितायतदिगम्बरम्' (माघ.4.19) 'आच्छाद्य पुष्पपटम्' (माघ.4.52) इत्यादि प्रयोगानुरोधेन धारणार्थकत्वाच्च। तथा चात्र वस्त्रादिवत् धार्यत्ववाचिवास्य शब्देन शेषत्वगर्भितं पारतन्त्र्यं जगतः प्रतिपादितं भवति।

अतः जगत्यां - यथोक्तलक्षणे चेतनाचेतनात्मके जगति, यत्किंच - यत्किंचित्, जगत् - स्वभोगोपयोग्याकारेण परिणामं गच्छद्वस्तु। इदंच द्वितीयान्तं 'भुंजीथाः' इत्यस्य कर्म। यद्वा 'ईशावास्यमिदं सर्वम्' इत्येतदेव तत्कर्म; 'ईशावास्यम्' इति हेतुगर्भविशेषणम्। जगत्यां यत्किंच जगदस्ति। ईशावास्यमिदं सर्वं भुंजीथा इत्यन्वयः। त्यक्तेन - फलममताकर्तृत्वविषयत्रिविधत्यागलक्षणबुद्धिविशेषसंस्कृतेन तेन - तद्वस्तुना स्वस्वामिभावसम्बन्धेनोपलक्षितः त्वम् 'इत्थं भूतलक्षणे' (पा.सू.2.3.21) इत्यनुशासनेन अत्र तृतीया। भुंजीथाः - भुंक्ष्व, 'भुज-पालनाभ्यवहारयोः'(पा.धा.1455) इति धातोःरुधादिगणघटकाद्विधिलिङ्। कस्यस्वित् - स्वभिन्नस्य यस्य कस्यचित्प्रत्यगात्मनः स्वस्वामिभावेन सम्बन्धि, धनम् - किमपि वस्तु, मा गृधः - माभिकाङ्क्षः, 'गृधु - अभिकाङ्क्षायाम्' (धा. पा.1455) इति धातोर्दैवादिकात् कर्तरि लुङ्। 'न माङ्योगे' (पा.सू.6.4.74) इत्यनुशासनेन अट् प्रतिषेधः - इति।

### समुदितवाक्यार्थविवरणम्

अयं भावः जगदन्तर्गतस्य चेतनाचेतनात्मकस्य कृत्स्नस्य वस्तुनो भगवच्छेषतैकरसपरतन्त्रवस्तुतया, भगवद्भोगैकफलकत्वात्तदनन्तर्गतस्यस्वातन्त्र्येण स्वभोगस्य संसारबन्धहेत्वन्यथाज्ञानकार्यत्वाच्च, यत्किंचिद्वस्तु भुंक्षे, तत्सर्वं, 'भगवानेव स्वशेषभूतेन मया स्वकीयैरेव देहेन्द्रियान्तःकरणैः स्वकीयेनैव कर्मणा स्वकीयैरेव द्रव्यैः स्वात्मानं स्वयमेव प्रीतं कारयतीत्यनुसन्धानेन तत्तत्कर्मकर्तृत्वफलममता-विषयत्रिविधत्यागपर्यवसन्नबुद्धिविशेषलक्षणसंस्काररूपेणसंस्कृत्यभगवद्भोगान्तर्गत-स्वभोगस्सन्नेव भुंक्ष्व; तत्रापि लोकन्यायसिद्धस्वस्वामिभावसम्बन्धेन स्वसम्बन्ध्येव वस्तु तथा भुंक्ष्व; न तु उक्तसम्बन्धेन अन्यसम्बन्धि वस्तु। तथा सति रागद्वेषादि-मूलसर्वसांसारिकबन्धप्रसंगस्य दुर्वारत्वात् - इति।

### विरक्तस्य मुमुक्षोः लौकिकभोगानुभवप्रकारः

अत्र यत्किंचिदपि वस्तु, त्यक्तेन तेन स्वामित्वसम्बन्धेनोपलक्षितः त्वं भुंजीथाः इत्यनेन, इत्थंभूतलक्षणतृतीयाबलात् स्वामित्वसम्बन्धेन व्यावर्तकलक्षणतया दर्शित त्रिविधत्यागलक्षणबुद्धिविशेषसंस्कृत-तत्तद्वस्तुविशिष्टस्सन्नेव तत्तद्वस्तु भुंक्ष्व इत्यर्थ-लाभेन तादृशबुद्धिविशेषरहितेभ्यः परमपुरुषार्थलक्षणमोक्षेतरफलार्थिभ्यः तत्तद्वस्त्वस्वामिभ्यश्च परमपुरुषार्थनिष्ठस्य व्यावृत्तिः विवक्षिता भवति । सर्वस्यापि कर्मणः स्वेष्टभूतयत्किंचित्भोगार्थतयैव क्रियमाणत्वेन भोगस्य ईदृशत्रिविध-त्यागगर्भत्वावश्यकताविधानेन सर्वस्य कर्मणः तदावश्यकत्वं विहितं भवति ।

### सात्विकत्यागविषये गीतादिसंवादः

परविद्यांगभूतकर्मानुष्ठानांगतया मुमुक्षूणाम् अवश्यापेक्षितः दर्शितबुद्धिविशेष-लक्षणः त्यागो भगवतापि असकृत् अभिहितो गीताशास्त्रे 'मयि सर्वाणि कर्माणि सन्यस्याध्यात्मचेतसा' (भ.गी.3.30) इति तृतीयाध्याये 'त्यागो हि पुरुषव्याघ्र ! त्रिविधः संप्रकीर्तितः' (भ.गी.18.4) इत्यष्टादशाध्याये च । एवं स्थलान्तरेषु च त्यागस्य त्रैविध्यमपि स्पष्टीकृतं तद्भाष्ये भाष्यकारैः 'फलं मम न स्यात्' इति फलत्यागः, "मदीयफलसाधनतया मदीयमिदं कर्म" इति कर्मणि ममतायाः परित्यागः कर्मविषयस्त्यागः, सर्वेश्वरे कर्तृत्वानुसन्धानेनात्मनः कर्तृतात्यागः कर्तृताविषयस्त्यागः' इति भाष्यमाणैः ।

### सप्रमाणं त्रिविधत्यागानुसन्धानप्रकारनिरूपणम्

त्रिविधत्यागलक्षणानुसन्धानप्रकारश्च, भरद्वाजसंहिताशिरसि न्यासोपदेशे प्रथमाध्याये

> निक्षिप्यात्मानमात्मीयम् अशेषमखिलात्मनि ।
> क्रियाश्च सकलास्तत्र वर्तन्ते वीतकल्मषाः ।। (भर.संहि.1.70)
> मन्यन्ते च स्वकीयान्नस्स्वप्रीत्यै स्वोचितां स्वयम् ।
> नाथः स्वकीयसेवान्तां वृत्तिं कारयतीति वै ।।(भर.संहि.1. 71)

इति वचनाभ्यां विस्तरेण , तत्रैव परिशिष्टे प्रथमाध्याये -

> 'परमात्मा हरिः स्वामी स्वतोऽहं तस्य किंकरः ।
> कैंकर्यमखिला वृत्तिः इत्येष ज्ञानसंग्रहः ।।'( भर.संहि.परि.1.76)

इति वचनेन संग्रहेण च दर्शितः ।

---

1.आभिः श्रीभाष्यकारसूक्तिभिः "त्वदीयं वस्तु गोविन्द ! तुभ्यमेव समर्प्यते" इत्येवंरूपः प्रपन्नजनानुसन्धानप्रकारः विशदीकृतो भवति ।।

एतत् संहितोक्तरीत्यनुसारेणैव च [1]भाष्यकारैरपि गीताभाष्ये तृतीयाध्याये त्रिंशश्लोकव्याख्यायां 'स्वकीयेनात्मना कर्त्रा स्वकीयैश्चोपकरणैः स्वाराधनैक-प्रयोजनाय परमपुरुषः सर्वेश्वरः सर्वशेषी स्वयमेव स्वकर्माणि कारयतीत्यनुसन्धाय' इत्यनेन, अष्टादशाध्याये त्रयोदशश्लोकावतारिकायां "परमपुरुषो हि स्वकीयेन जीवात्मना स्वकीयैः च करणकलेबरप्राणैः स्वलीलाप्रयोजनाय कर्माण्यारभते" इत्यनेन, एवं नित्यग्रन्थे "प्रथमतः भगवानेव स्वशेषभूतेन मया स्वकीयैः एव कल्याणतमैः औपचारिकसांस्पर्शिकाभ्यवहारिकैः भोगैः अखिलपरिजनपरिच्छदान्वितं स्वात्मानं प्रीतं कारयितुमुपक्रमत इत्यनुसन्धाय" इत्यनेन, मध्ये "भगवानेव स्वनियाम्य-स्वरूपस्थितिप्रवृत्तिस्वशेषतैकरसेनानेनात्मना स्वकीयैश्च देहेन्द्रियान्तःकरणैः स्वकीयकल्याणतमद्रव्यमयौपचारिक- सांस्पर्शिकाभ्यवहारिकादि- समस्तभोगान् अतिप्रभूतान् अतिसमग्रान् अतिप्रियतमान् अत्यन्तभक्तिकृतानखिलपरिजन-परिच्छदान्विताय स्वस्मै स्वप्रीतये स्वयमेव प्रतिपादयितुमुपक्रमत इत्यनुसन्धाय" इत्यनेन; ततः किंचिदुपरिष्टात् 'भगवानेव सर्वं कारयतीति पूर्ववद्ध्यात्वा' इत्यनेन, अन्ते च भगवानेव इत्यारभ्य पूर्वोक्तानुपूर्वीकेण 'स्वयमेव प्रतिपादितान्' इत्यन्तेन च निर्देशेन मुमुक्षूणां दर्शित त्रिविधत्यागलक्षणानुसन्धानप्रकारोऽसकृत् दर्शितः ।

अत एव च अस्मत्सैद्धान्तिकाः कर्मसु क्वचित्, 'भगवानेव' इत्याद्युक्तरीत्या विस्तरेण, क्वचित् कैंकर्यरूपत्वनिर्देशेन संक्षेपेण च यथोक्तलक्षण त्रिविधत्यागरूप-मनुसन्धानविशेषमनुतिष्ठन्ति ।

**पिण्डितार्थनिरूपणम्**

तथाचात्र मन्त्रे 'ईशावास्यम्' इत्यनेन परविद्यायां परस्मिन् अनुसन्धेयं स्वतन्त्रत्वनियन्तृत्व[1]शेषित्वस्वामित्वलक्षणमाकारचतुष्टयं, स्वस्मिन्ननुसन्धेयं पर-तन्त्रत्व-नियाम्यत्वशेषत्व-स्वत्वलक्षणमाकारचतुष्टयं, 'तेनत्यक्तेन' इत्यनेनपरविद्याग-कर्मानुष्ठानांगतया कर्तव्यानुसन्धानविशेषस्वरूपं च दर्शितं भवति ।

**शांकरव्याख्यानसंग्रहः**

यत्पुनरत्र शांकरं व्याख्यानं -"**जगत्यां** - पृथिव्युपलक्षितेषु सर्वेषु लोकेषु, यत्किंच जगत्, द्वैतरूपं नामरूपकर्माख्यं विकारजातम् अस्ति, इदं सर्वम् अनृतरूपम्,

1. शेषित्व - स्वामित्वेति - अनयोः ईषद्भेदो विवक्षितः । यथा - स्वामित्वं नाम - स्वव्यतिरिक्तस्य समस्तस्य वस्तुनः स्वकीयत्वेनाभिमानः । शेषित्वं तु तदाहितातिशयाश्रयत्वम् । ईदृशभेदविवक्षयैव श्रीभाष्यकारैरपि पृथुगद्ये "अशेषचिदचिद्वस्तुशेषिभूत ! अखिलजगत्स्वामिन् !" इति प्रयुक्तं बोध्यम् ।।

ईशा - सुज्ञातेन सत्यरूपेण स्वेनात्मना, वास्यम् - आच्छादनीयम्, व्यपोहनीयमिति यावत् । 'वस-आच्छादने' इति धातोः आच्छादनार्थकत्वात् आच्छादनस्य व्यपोहनपर्यवसन्नत्वात्; यथा चन्दनागुर्वादेः उदकादि संबन्धजक्लेदादिजं दौर्गन्ध्यं तत्स्वरूपनिघर्षणेनाच्छाद्यते स्वेन पारमार्थिकेन गन्धेन, तद्वदेवेति भावः । इत्थं च नामरूपकर्माख्यमनृतं सर्वं विकारजातं परमार्थसत्यात्मभावनया त्यक्तं स्यात् । पुत्राद्येषणात्रयसंन्यासलक्षणत्यागस्सिद्ध्यतीति यावत् । ततश्च कर्मसन्यास एवाधिकारः, न तु कर्मसु । **तेन त्यक्तेन** - तत्त्यागेनेत्यर्थः, आत्मानं **भुंजीथाः**- पालयेथाः, त्यागेन यथोक्तलक्षणेनात्मानं संसारनिवृत्त्या सुरक्षितं कुर्वीथाः, मुक्तो भवसीति यावत् । एवं त्यक्तैषणस्त्वं, **कस्यस्विद्धनं मा गृधः** - स्वस्य परस्य वा कस्यापि धनं मा कार्षीरित्यर्थः । अथवा, **कस्यस्विद्धनं** - कस्य किमस्ति धनं - सर्वस्य द्वैतप्रपंचस्य मिथ्यात्वात् अतः, मा गृधः माकांक्षां कार्षीः" इति ।

**शांकरव्याख्याने अनुपपत्तिप्रदर्शनम्**

तदेतत्सर्वं यथावस्थितशब्दार्थव्युत्पत्त्यनवधारणमूलमक्षराननुगुणं स्वमताभिनिवेश-बलात्कारकारितस्वैराध्याहारपूरणादिना स्वपरिगृहीतविपरीतार्थपरताप्रसह्यारोपण-मात्ररूपं चेति विमत्सरं विचारप्रवृत्तानां विदुषां सुगमम् ।

**'वास्यम्, भुंजीथाः,' इत्यादिषु शब्दशास्त्रविरोधादि दोषप्रदर्शनम्**

तथाहि 'वस-आच्छादने' (धा. पा.1023) इति धात्वर्थभूताच्छादनस्य स्वातिशया-धायकतया धारणरूपतायाः प्रागावेदितत्वेन तिरोधानहेतुव्यापाररूपापवारणानात्म-कतया व्यपोहनपर्यवसन्नत्वाभावात्, 'वास्यम्' इत्यस्य व्यपोहनीयमित्यर्थपर्यवसानम् आश्रित्य, द्वैतप्रपंचनिवृत्तिपरत्ववर्णनं शब्दार्थाव्युत्पत्तिमूलमेव ।

एवं - 'भुंजीथाः' इत्यस्य पालयेथा इत्यर्थवर्णनमपि शब्दार्थाव्युत्पत्तिमूलमेव 'भुजोऽनवने' (पा.सू.1.3.66) इत्यनुशासनेन पालनभिन्नार्थकस्यैव भुजेरात्मनेपदं भवति, न तु पालनार्थकस्येत्यर्थकेन, आत्मनेपदिनो भुजेः पालनार्थकत्वाभावस्यैव प्रतिपन्नत्वात् । अत एव हि 'ओदनं भुंक्ते' इत्यादि प्रयोगेषु पालनभिन्नार्थकस्य भुजेरात्मनेपदम् । 'पृथिवीं भुनक्ति' इत्यादिप्रयोगेषु पालनार्थकस्य भुजेः परस्मैपदं च नियतं दृश्यते ।

एवम्, ईशेत्यस्य विशेषणतया सत्यरूपेण सुज्ञातेनेति पूरणस्य 'भुंजीथाः' इत्यस्यात्मानमिति कर्मपूरणस्य सर्वमिदम् इत्यस्यानृतमिति विशेषणपूरणस्य च कल्पनम् ईशेत्यस्य स्वात्मस्वरूपेणेत्यर्थवर्णनं च स्वमताभिनिवेशकारित-स्वैरितामात्रमित्यनुपादेयमेव शब्दस्वरसविदा विदुषां प्रकरणसन्दर्भादिबल-निर्भासितयोरेव पूरणार्थपर्यवसानयोः करणस्य न्याय्यत्वात् अतथाविधयोः तयोः स्वैरं करणस्य अयुक्तत्वात्, अन्यथा अतिप्रसंगस्य दुर्वारत्वात्, प्रकृतस्थले दर्शितपूरणार्थ-पर्यवसानाकरणे क्षतिलेशस्यापि अनुपलम्भाच्च ।

**ईश्वरस्य ईशितव्यद्वैतप्रपंचसापेक्षतया प्रपंचसत्यत्वसाधनम्**

अपि च, ईशेति ईश्वरत्वेन निर्दिष्टमात्मानं सत्यरूपत्वेन विशेष्य, तेन सुज्ञातेन द्वैतप्रपंचनिराकरणपरत्ववर्णनमपि श्रुतेः न संजाघटीति, ईश्वरत्वस्येशितव्यद्वैतप्रपंच-सापेक्षत्वेन तस्य सत्यरूपत्वे द्वैतप्रपंचस्यापि सत्यतासिद्ध्या तेन सुज्ञातेन द्वैतप्रपंच-निराकरणायोगात् ।

उक्तानुपपत्तिपरिहाराय - 'ईशा' इत्यस्य स्वात्मस्वरूपेणेत्यर्थस्स्वीक्रियत इत्यपि न सुवचम्, ईश्वरत्वविशिष्टवाचकस्य तस्य केवलस्वात्मस्वरूपमात्रवाचकतया विना लक्षणामसम्भवात् ।

**मागृधः कस्यस्विद्धनं इत्यत्र पुनरुक्त्यादि दोषः**

किं बहुना, आत्मस्वरूपेण सुज्ञातेन द्वैतप्रपंचनिराकरणं यदि इह विवक्षितम् अभविष्यत्, तदाऽत्मस्वरूपपरनिर्देशमुपेक्ष्य, ईश्वरत्वविशिष्टपरः 'ईशा' इति निर्देश एव नाकरिष्यतेति तु तत्त्वमवधेयम् ।

एवं 'तेन त्यक्तेन भुंजीथाः' इत्यस्य स्वरूपतः सर्वकर्मसन्यासलक्षणत्यागपरत्वे, 'मा गृधः कस्यस्विद्धनम्' इति पुनर्धनग्रहणकांक्षाप्रतिषेधः पिष्टपेषणरूपः पौनरुक्त्यदोषादसमंजसः, सर्वत्यागे विधीयमाने धनग्रहणमात्रस्य पुनः प्रसंगलेशाभावाच्च ।

**कुर्वन्नेवेहेति उत्तरमन्त्रविरोधः**

अपि च, शंकराभिमतरीत्या स्वरूपतः सर्वकर्मसन्यासलक्षणत्यागस्यैव मुमुक्षोः आवश्यकतया एतन्मन्त्रप्रतिपाद्यत्वे, 'कुर्वन्नेवेह कर्माणि' इति द्वितीयमन्त्रे पुनः कर्मानुष्ठानविधानम् अत्यन्तासमंजसम् ।

द्वितीयमन्त्रो बुभुक्षुविषय इति वर्णनमपि अविवेकविलसितमेव, बुभुक्षूणाम् अपेक्षितकर्मानुष्ठानप्रक्रियां निरवशेषं निरूप्य समापनानन्तरं मुमुक्ष्वपेक्षितानुष्ठान-

प्रक्रिया प्रतिपादनैदंपर्यप्रवृत्ते ज्ञानकाण्डरूपेऽस्मिन् चरमेऽध्याये पुनर्बुभुक्षोः अनुष्ठानप्रक्रियावर्णनस्य संगतिलेशाभावात् ।

तस्मात् सर्वमिदं शांकरं व्याख्यानं बलाच्छ्रुतेस्स्वाभिमानपरिगृहीतार्थपरतया योजनमात्ररूपं शिरस्त्राणानुगुण्येन शिरःकर्तनन्यायमेवानुसरीति निर्मत्सरास्तत्त्व-बुभुत्सवो विद्वांसो विदांकुर्वन्तु ।

### महीधरव्याख्याने असामंजस्य प्रदर्शनम्

यदपि शंकरमतानुयायिना वाजसनेयिसंहिताव्याख्यात्रा महीधरेण शांकरव्याख्याने क्वचिदंशे किंचिदस्वारस्यं मन्वानेन 'यत्किंच जगत्यां जगत् तेन त्यक्तेन भुंजीथाः' इत्यंशस्य यत्किंचेति भिन्नक्रमम्, किंच यत् जगत्यां लोकत्रये, जगत् जंगमादिकम्, स्वामिसम्बन्धालिंगितं भवेत्, तेन सर्वेण, त्यक्तेन - त्यक्तस्वस्वामिसम्बन्धेन, भुंजीथाः - 'भोगमनुभवेः' इति व्याख्यानं कृतम् । तदप्यसत्, स्वामिसम्बन्धालिंगितं भवेदिति स्वैरपूरणात्, 'भुंजीथाः' इत्यस्य भोगमनुभवेरित्यर्थकरणस्योदक्षरत्वाच्च । भुंजीथाः इत्यत्र भोगमात्रस्य लाभेन तदनुभवो हि न केनापि लभ्यते ।

किंच भुजेः सकर्मकत्वेन कर्मसापेक्षतया कर्मतया तदन्वययोग्यस्य 'तेन त्यक्तेन' इत्यस्य, करणतयान्वयो न घटते । अन्यथा, 'अन्नं भुंजीथा' इति स्थाने 'अन्नेन भुंजीथाः' इत्यपि प्रयोगापत्तेः । एवम् - 'ईशावास्यमिदं सर्वम्' इत्यंशस्य शंकरवदेव स्वयमपि परमार्थसत्यरूपस्वात्मस्वरूपयाथात्म्यानुसन्धानेन अनृतरूपकृत्स्नद्वैत-प्रपंचनिराकरणविधिपरतां व्याख्याय, पश्चात् 'किंच' इत्यादिना ममताबुध्यनास्प-दीकृतजंगमादिभोगोपकरणेन भोगानुभवविधिपरतया यत्किंचेत्याद्यंशस्य व्याख्यानं हि असमंजसम्, द्वैतप्रपंचनिराकरणस्य जंगमादिवस्तुकरणकभोगानुभवस्य च द्वयोरेकंप्रति विधानासम्भवात् ।

किंच 'मा गृधः कस्यस्विद्धनम्' इत्यस्य क्वापि धने कस्यापि स्वत्वं वस्तुतो नास्ति; अतः स्वीयत्वेन परकीयत्वेन वा, लोकसिद्धे सर्वस्मिन्नपि वस्तुनि ममताबुद्धिं मा कृथाः' इति व्याख्यानात्, पूर्वांशस्य 'ममतालिंगिते वस्तुनि सर्वत्र ममताबुद्धिं प्रहाय तेन भोगमनुभवेः' इति व्याख्यानाच्च, सर्वत्रैव ममता बुद्धिं प्रहाय तेनैव भोगानुभवप्रसंगेन विपरीतो महाननर्थोऽपि प्रसज्यते । परकीयेषु वस्तुषु स्वेन ममताबुद्धिप्रहाणेऽपि परेषां तत्र तद्बुद्धिसत्वेन तत्कृतोपरोधादिमूलसर्वदुःखस्य, तथाविधोपरोधाद्यसत्वे च स्वैरं परदारपरद्रव्यापहारादिशास्त्रप्रतिषिद्धाकृत्यकरणेऽपि दोषाभावप्रसंगस्य च आपातात् ।

इतरांशस्य शंकरवदेवानेनापि व्याख्यानात् तद्व्याख्याने प्रागुक्ता दोषास्सर्वेऽप्येतद्-व्याख्यानेऽपि तदवस्थाः । अत एतद्व्याख्यानमपि असमंजसमेव ।

### ईशेत्यस्य रुद्रपरत्वानौचित्यम्

एतेन 'ईशावास्यम्' इति समस्तपदमाश्रित्य, 'ईशेन रुद्रेण, आवास्यं व्याप्यम्' इति व्याकृत्य, 'रूढिर्योगमपहरति' (पू.मी.6.1.12) इति न्यायेन, योगाद्रूढेर्बलिष्ठतया रुद्रपरत्वम् ईशपदस्याश्रित्य रुद्रस्यैवैतन्मन्त्रप्रतिपाद्यत्वम्, एतदुपनिषत्प्रतिपाद्य-विद्यावेद्यत्वं च मन्यमाना अपि निरस्ताः । अध्येतृपाठ-सम्प्रदायविरोधेन अत्र समस्तपदस्वीकारासम्भवात्, तृतीयान्तस्य क्विबन्तेशधातु-निष्पन्नेट्छब्दस्य यौगिकस्यैव अत्र पदविभागानुसन्धायि अध्येतृपाठसम्प्रदाय-सिद्धतया, तस्य योगमात्रेणैश्वर्यविशिष्टवाचकस्य रुद्रे रूढिप्रसंगस्यैवाभावात् ।

### वास्यशब्दस्य व्याप्त्यर्थकत्वनिरासः

तदानीं 'वस-निवासे' (धा.पा.1005) इति निवासार्थकवसधातोः 'गृहे वसति' इत्यादिप्रयोगवशेन अकर्मकताया एव सिद्धतया 'लः कर्मणि च भावे चाकर्मकेभ्यः' (पा.सू.3-4-69) इत्यनुशासनेन अकर्मकेभ्यो धातुभ्यो भावकर्त्रोः एव लकारविधानेन 'तयोरेवकृत्यक्तखलर्थाः' इत्यनुशासनेनलकारादेशभूतकृत्य-प्रत्ययानांभावकर्मणोरेव विधानेन च तस्माद्धातोः कर्मणि कृत्यप्रत्ययान्तर्गतण्यत्प्रत्ययासम्भवेन भावार्थे तत्सम्भवेऽपि तस्य इह अनुपकारकत्वेन च वास्यमित्यस्य व्याप्यार्थकताया एवासम्भवाच्च । यद्यपि, 'आवास्यम्' इति पदच्छेदमाश्रित्य वसतेराङ्पूर्वकत्वाश्रयणे 'उपान्वध्याङ्वसः' (पा.सू. 1.4.48) इत्यनुशासनेन आङ्पूर्वकस्य तस्य आधारकर्मकतया सकर्मकत्वसम्भवेन तदुपरि कर्मणिण्यप्रत्ययसम्भवेनच, 'आवास्यम्' इत्यस्य व्याप्यार्थकत्वमपि कथंचित्सुवचम् ।

तथापि 'वास्यम्' इत्येव पदविभागस्य अध्येतृपाठसंप्रदायसिद्धतया, तत्राङ् प्रश्लेषकल्पनापि न सम्भवति, पाठसम्प्रदायोल्लंघने वेदप्रामाण्यस्यैव दुर्लभत्व प्रसंगात्, अविच्छिन्नशिष्टपाठसम्प्रदायस्यैव वेदप्रामाण्यबीजतायाः सर्व-सम्प्रतिपन्नत्वाच्च । अस्तु वा समस्तपदपाठसम्भावनाऽपि क्वचित् तथापि, का नः क्षतिः? सर्वपरविद्यानां "यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति ।" (तै.भृ.1) 'कारणं तु

ध्येयः' (अथर्वशिरः 2) । इत्यादि शास्त्रैः निखिलजगत्कारणभूत ब्रह्मविषयत्वस्यैव सिद्धतया, रुद्रस्य तथात्वासम्भवेनैव अत्र ईशशब्दस्य तत्परत्वासम्भवात्, उपपदाभावेनासंकोचतोऽनवधिकैश्वर्यवत्त्वेन रूपेण योगशक्तिमात्रेण निखिलजगत्कारणभूतनारायणपरताया एव वक्तव्यत्वाच्च ।

यथा हि रूढ्या, अन्यपरतया प्रसिद्धानाम् आकाशप्राणादिशब्दाना, प्रकरणप्रतिपन्नजगत्कारणत्वाद्यनुपपत्त्या, रूढ्यर्थप्रहाणेन योगशक्त्या, परब्रह्मपरत्वं स्थापितम् आकाशाद्यधिकरणेषु ; तथैवेहापि भविष्यतीति न किंचिदवहीनम् ।

जगत्कारणत्वं च नारायण सृज्यकोटिप्रविष्टस्य कर्मवश्यस्य रुद्रस्य न सम्भवति, 'एको ह वै नारायण आसीन्न ब्रह्मानेशानः' इति महोपनिषदा, 'नारायणाद्ब्रह्मा जायते । नारायणाद्रुद्रो जायते' इति नारायणोपनिषदा 'अनपहतपाप्मा वा अहमस्मि अविहितनामा । नाम मे धेहि पाप्मनोऽपहत्यै' इति शतपथाष्टमूर्तिब्राह्मण श्रुत्यादिभिश्च रुद्रस्य नारायणसृज्यकोटिप्रविष्टतया कर्मवश्यतायाः नारायणस्यैव निखिलजगत्परमकारणतायाश्च प्रतिपन्नत्वात् ।

एवम्, 'ईशावास्यम् ' इत्यत्र विवक्षितसर्वभूतान्तरात्मत्वलक्षणा व्याप्तिरपि तस्य न सम्भवति, 'एष सर्वभूतान्तरात्मापहतपाप्मा दिव्यो देव एको नारायणः' (सु.उ.7) इत्यादि श्रुत्या -

'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततस्स वासुदेवेति विद्वद्भिः परिपठ्यते ।। ' (वि.पु.1.2)

इत्यादि स्मृत्या च, नारायणस्यैकस्यैव [1]तस्याः प्रतिपन्नत्वात् ।

**ईशपदस्य रुद्रपरत्वे प्रकरणविरोधप्रदर्शनम्**

अपि च अस्यामेवोपनिषदि उत्तरत्र 'पूषन्नेकर्षे' (ई.उ.16) इति मन्त्रे, कल्याणतमाप्राकृतदिव्यरूपविशिष्टादित्यमण्डलान्तर्वर्तिपरमपुरुषविषयत्वस्य, अत्र विवक्षितपरविद्यायाः प्रतिपन्नत्वात् तादृशपरमपुरुषस्य, 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषोदृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः' (छा.उ.1.6.6,7) । इति च छान्दोग्यश्रुत्या पुण्डरीकाक्षत्वापहतपाप्मत्वादिभिः नारायणरूपतायाः स्फुटीकृतत्वाच्चास्याः विद्याया अनपहतपाप्मविरूपाक्ष रुद्रविषयता

1. तस्याः - उक्तान्तरात्मत्वलक्षणव्याप्तेः ।

न कथंचिदपि संभवतीत्यतोऽप्यत्रत्येशशब्दस्य समस्तपदघटकतासंभावनायामपि प्रकरणविरोधेन नारायणपरत्वं दुरपह्नमेव ।

वस्तुतोऽत्र 'ईशावास्यम्' इत्यस्य व्याप्तिपरत्वस्वीकारोऽपि नोचितः, उत्तरवाक्यार्थानुपकारकत्वात् । तस्माद्यथोक्तरीत्यैव व्याख्यानम् इह उचितम् ।

### नारायणपरत्वे श्रुतप्रकाशिकासम्मतिः

अत एव 'स्तुतयेऽनुमतिर्वा' (ब्र. सू. 3.4.14) इति सूत्रश्रुतप्रकाशिकायाम् 'ईशावास्यम्' इति ईट्शब्दस्तृतीयान्तः, ईशा तेन, वास्यं, यद्वा, ईशेन आवास्यम्, ईश्वरपरतन्त्रमित्यर्थः' इति व्यासार्यैः अपि व्याख्यानं कृतम् ।

अत्यन्तपारतन्त्र्यस्य स्वैरविनियोगयोग्यत्वरूपत्वेन स्वातिशयाधायकतयाऽपि विनियोगप्रयोजकत्वसम्भवात् शेषत्वगर्भितत्वसम्भवे न, परतन्त्रशब्देन शेषत्वगर्भितम् अत्यन्तपारतन्त्र्यमेवेह विवक्षितम्, प्रागुक्तरीत्या तस्यैव त्यागगर्भित भोगरूपवक्ष्यमाणवाक्यार्थोपकारकत्वात् ।

अत एव च, त्यागशब्दार्थानुसन्धानविशेषस्वरूप प्रदर्शयद्भिः भाष्यकारैः 'स्वनियाम्यस्वरूपस्थितिप्रवृत्तिस्वशेषतैकरसेनानेनात्मना' इति तादृशानुसन्धानस्य शेषत्वपारतन्त्र्योभयगर्भितत्वं दर्शितम् ।

### वास्यशब्दस्य आच्छादनार्थत्वे स्वारस्य

वास्यशब्दस्य प्रागुक्तरीत्या 'वस-आच्छादने' इति धातुनिष्पन्नत्वाभिप्रायेणैव परतन्त्रपरता दर्शितश्रुतप्रकाशिकाभिप्रेता; वस्त्रादिवत्स्वेष्टानुगुण्येन धार्यत्वार्थकत्वे सत्येवात्यन्तपारतन्त्र्यलाभात्, 'वस-निवासे' इति धातोरकर्मकत्वेन तदुपरि कर्मणि ण्यत्प्रत्ययासम्भवादिदोषस्य प्रागेवोक्तत्वाच्च ।

यद्वा 'वस-निवासे' इति धातोरपि ण्यन्तात्कर्मणि ण्यत्प्रत्ययाश्रयणसम्भवेन, वासयितुं स्वेष्टानुगण्येन स्थापयितुं - योग्यं वास्यमिति व्युत्पत्त्याऽपि वास्य शब्दस्य यथोक्तार्थ एव पर्यवसानं सम्भवतीत्यपि सुवचम् ।

अत्र, ईशेनावास्यमिति समस्तपदाभिप्रायेण व्याख्यानमपि, संहितास्थमन्त्राणामपि, केषांचिच्छाखास्वपि पाठदर्शनेन तत्र पदविभागाध्ययनस्य पाठसंप्रदायासिद्धतया तत्र प्रकारान्तरेण योजनानामपि दर्शनात्, तद्वदस्यापि मन्त्रस्य क्वचित् पाठसम्भावनायामपि यथोक्तार्थपर एवायं मन्त्र इत्यभिप्रायेणैव कृतम् ;नतु तथाविधं पाठं क्वचिद्दृष्ट्वा तदनुरोधेन कृतम् ; तथाविधपाठस्य क्वाप्यनुपलम्भादिति बोध्यम् ।

### केषाचित् व्याख्यानविमर्शः

एतेन 'सर्वमिदं तत्तत्प्रमाणसिद्धं सर्वं चिदचिदात्मकं वस्तु, ईशा सर्वनियन्त्रा पुरुषोत्तमेन वास्यं व्याप्यमित्यर्थः, सर्वाधारे स्वस्मिन् स्वेन वासनीयं वा' इति, 'जगत्यां सर्वस्मिन्नपि लोके, यत्किंच यत्किंचिदस्ति, इदं सर्वमिति पूर्वेण सम्बन्धः' इति 'भुंजीथाः' इत्यत्र अप्रतिषिद्धयोगधर्मोपयुक्तदेहधारणमात्रौपयिकभोग्यवर्गमित्यर्थ-प्रकरणाभ्याम् सिध्यति । यद्वा, सर्वावासत्वेन प्रकृतं निरतिशयभोग्यं वक्ष्यमाणोपायमुखेन भुंजीथा इति योज्यम्' इति तेन जगता भोग्यतासम्बन्धिविषयेण, त्यक्तेन दोषभूयस्त्वदर्शनात् परित्यक्तेन, 'उपलक्षितस्सन् भुंजीथाः' इति च केषांचिद्व्याख्यानमपि अनुपपन्नमितिसिद्धम्। शब्दस्वभावविरोधात्पूर्वोत्तरवाक्यार्थ-संगत्यभावात्, स्वरसालभ्यपूरणगर्भत्वाच्च । निवासार्थकस्य वसतेः अकर्मकत्वेन तदुपरिकर्मणि ण्यत्प्रत्ययासम्भवात्तद्धातुनिष्पन्नस्य वास्यमित्यस्य व्याप्यार्थकत्वं हि न सम्भवति। ण्यन्तात्तस्मात्कर्मणि ण्यत्प्रत्ययाश्रयणेन सम्पाद्यस्य, सर्वाधारे स्वस्मिन् स्वेन वासयितव्यमित्यर्थस्यापि नात्र विवक्षा युक्ता । उत्तरवाक्यार्थानुपकारकत्वात् व्याप्यार्थकत्वस्य कथंचित्संपादनेऽपि तस्याप्ययं दोषस्समानः ।

'भुंजीथाः' इत्यत्र देहधारणमात्रौपयिकान्नपानादिभोग्यवर्गस्य, सर्वावास-भूतनिरतिशयभोग्यपरमपुरुषस्य वा कर्मणो वाचकशब्दपूरणं, वक्ष्यमाणोपायेनेति करणवाचकपूरणं च गुरुतरं स्वैरं कल्प्यमानं न सहृदयहृदयंगमम् ; क्लिष्ट-कल्पनामूलत्वेनास्वारसिकत्वात्, गौरवात्, क्लिष्टकल्पनामन्तरेण पूर्वोक्तरीत्या निर्वाहसम्भवाच्च । एवं 'तेन त्यक्तेन' इत्यत्र वैराग्यवशेन स्वरूपतस्त्यागस्यैव विवक्षिततया तथा त्यक्तेन तेन वैशिष्ट्यरूपतदुपलक्षितत्वस्य त्यागानन्तरमसिद्ध्या तदुपलक्षितस्सन् भुंजीथा इति वाक्यार्थानुपपत्तिः ।

न च यदाकदाचित् तत् संबन्धित्वरूपं तदुपलक्षितत्वमिह विवक्षितुं शक्यम् । 'इत्थंभूतलक्षणे' इत्यनुशासनसिद्धतृतीयायास्तत्काले व्यावर्तकधर्मविधया प्रकृत्यर्थ-रूपलक्षणवैशिष्ट्यरूपोपलक्षितत्वैकपरत्वात् । 'अपि भवान् कमण्डलुना च्छात्र-मद्राक्षीत्' इत्यादितदुदाहरणस्थलेषु तत्काले प्रकृत्यर्थरूप लक्षणवैशिष्ट्य-

रूपलक्षिततत्वस्यैवनुभवदर्शनादन्यथा तत्कालेदर्शनोपयोगित्वेनापेक्षिताया व्यावृत्तेः तत्रासिद्धिप्रसंगाद्वैशिष्ट्यपरत्वसम्भवे यदाकदाचित्संबन्धित्वपरत्वकल्पनाया अस्वारसिकत्वाच्च ।

तस्माद्यथोक्तरीत्यैव व्याख्यानं स्वीकर्तुं युक्तं प्रामाणिकैः ।

### स्वोक्तत्यगशब्दार्थस्य त्रिविधत्यगानुसन्धानपरत्वसमर्थनम्

न चास्मिन् मन्त्रे तत्तद्वस्तुष्वेव त्यागोऽभिहितो दृश्यते, न कर्मसु । तत्कथं वक्ष्यमाणकर्मानुष्ठानांगभूतः कर्मसु त्रिविधत्यागरूपो यथोक्तलक्षणानुसन्धानविशेषोऽनेन मन्त्रेण सिध्यतीति वाच्यं, जीवात्मविशिष्टत्वप्रकारक-धीविषयसामान्य विशेष्यकभगवद्विशिष्टत्वप्रकारक निर्णयस्यैव 'तेन त्यक्तेन' इत्यत्र त्यजिधात्वर्थत्वात्, तादृशनिर्णयप्रयोज्य प्रागुक्त-लक्षणानुसन्धान-विशेषविषयत्व-रूपफलाश्रयत्वरूपकर्मत्वस्यैव तदुत्तरक्तप्रत्ययार्थत्वाच्च । तादृशकर्मत्वाश्रय-तत्तद्वस्तुविशिष्टकर्तृकतायां तत्तद्वस्तुकर्मकभोगे विधीयमानायां परंपरया तद्विशेषणभूततादृशनिर्णयेऽपि विधेयत्वसिद्ध्या वक्ष्यमाणकर्मस्वपि यथोक्त-लक्षणानुसन्धानविशेषसिद्धेर्निष्प्रत्यूहत्वात् ।

धियो जीवात्मविशिष्टत्वं, स्वभोगसाधनत्व स्वसम्बन्धित्वोभयसम्बन्धेन । भगवद्विशिष्टत्वं स्वेतरपुरुषव्यापाराप्रयोज्यस्वव्यापारप्रयोज्यस्वभोगसाधनत्व स्वसम्बन्धित्वोभयसम्बन्धेनेति बोध्यम् । तादृशनिर्णयस्य दर्शितोभयसम्बन्धेन जीवात्मविशिष्टत्वबुद्धित्यागपर्यवसायित्वात्त्यागरूपत्वमित्यवसेयम् ।

स्वेष्टसाधनत्वबुद्धिमन्तरेण कस्मिन्नपि कर्मणि पुरुषस्य प्रवृत्त्यनुदयेन तादृशविषय-सामान्ये दर्शितनिर्णयसिद्धौ तदधीनदर्शितानुसन्धानविशेषस्सर्वकर्मस्ववर्जनीयः प्राप्नोत्येवेति च बोध्यम् ।

किंच, यथा हि 'मयि सर्वाणि कर्माणि सन्यस्याध्यात्मचेतसा' इत्यादावभिहितः कर्मसु त्यागः, तत्कर्तृतदुपकरणादिविषयः पर्यवस्यति । तथैवेहाभिहितो वस्तुषु त्यागोऽपि तत्तद्वस्तुतद्विनियोजनकर्मादिविषयः पर्यवस्यतीति न कश्चिद्दोषः।

अत एवहि 'मयि सर्वाणि कर्माणि सन्न्यस्य' इति श्लोकभाष्ये 'स्वकीयेनात्मना कर्त्रास्वकीयैश्चोपकरणैःस्वाराधनैकप्रयोजनायपरमपुरुषस्सर्वेश्वरस्सर्वशेषीस्वयमेव

स्वकर्माणि कारयति इति वाक्येन तत्तत्कर्मतत्कर्तृतदुपकरणद्रव्यादि विषयानुसन्धानविशेषरूपमेव कर्मत्यागस्वरूपं विवृतं भाष्यकारैः।

न हि तत्तद्वस्तुषु परं स्वकीयत्वस्वार्थत्वबुद्धिं प्रहाय तद्विनियोजनादिकर्मसु परं तादृशबुद्धिमनपहायैव तानि स्वोपयोगे विनियुञ्जानास्तद्वस्तुत्यागिनो भवन्ति।

तस्मात्कर्मत्यागाभिधानस्य कर्मतत्संबन्धिकर्तृद्रव्यादित्यागपरत्ववद्वस्तुत्यागाभिधानस्यापि तत्तद्वस्तुतत्सम्बन्धिकर्मादित्यागपरत्वस्यावर्जनीयतयाऽत्राभिधीयमानो वस्तुत्यागः कर्मत्यागान्नार्थान्तरं भवितुमर्हतीति वक्ष्यमाणे मुमुक्षूपयोगिकर्मानुष्ठानेऽङ्गतयापेक्षितो दर्शितत्रिविधत्यागलक्षणानुसन्धानविशेष एव प्रथममन्त्रे दर्शित इति सिद्धम्।

## आनन्दभाष्यम्

मुक्तिः काशीमृतानां मृतिसमयशिवप्रत्तयन्मन्त्रशक्तेः
यन्नामग्राहमन्तस्समुदितपुलकः सास्रनेत्रस्त्रिणेत्रः।
साकेतेशः समस्तश्रुतिसकलशिरोऽभ्यस्तमाहात्म्यभूमि-
र्भव्यायास्माकमास्तामनुपधिकरुणो भूमिजाभूषिताङ्गः॥ 1॥

आराध्यं ब्रह्मरुद्रादेर्जगद्धेतुं च मुक्तिदम्।
दिव्यदेहं गुणाम्भोधिं रामं ब्रह्म समाश्रये॥ 2॥

सूत्रवृत्तिकृतौ नत्वा व्यासबोधायनौ मुनी।
श्रीमन्तं राघवानन्दाचार्यं गुरुं नमाम्यहम्॥ 3॥

कुर्वे गुरुं नमस्कृत्य ज्ञानभक्तिदयानिधिम्।
ईशावास्योपनिषदो भाष्यमानन्दसंज्ञकम्॥ 4॥

ब्रह्मविद्योपदेशाय प्रवृत्तायामस्यामुपनिषदि प्रथमतः स्वतन्त्रात्मतादिभ्रमवन्तं संसारानलपरितप्तं तत्त्वजिज्ञासया शरणमुपागतं शिष्यं प्रति, तादृशभ्रमनिवृत्तिफलकं सर्वस्य भोक्तृभोग्यवर्गस्य परमपुरुषाधीनत्वं मुमुक्षोचितां वृत्तिं च गुरुरुपदिशति -

ईशेति। जगत्यां पृथिव्याम् इह लोके, एतस्य लोकान्तरोपलक्षणतया परलोकेऽपि यत्किंच चिदचिद्रूपं जगत् अन्यथाभावं प्राप्नुवत् अस्तीत्यध्याहारः। सर्वमिदम् ब्रह्मादि[1]स्तम्बपर्यन्तम्। ईशा - ईष्ट इति ईट् तेन सर्वनियामकेन परमपुरुषेण श्रीरामाख्येन वास्यम् - व्याप्यम् नियाम्यमिति भावः। एतेन चिदचिद्रूपस्य समस्तस्य जगतः परमात्माधीनत्वप्रदर्शनात् स्वातन्त्र्यभ्रमनिवृत्तिरुपदिष्टा। अत्र अचित्पदार्थस्य अन्यथा भावः स्वरूपविकाररूपः स च भोग्यतासम्पत्तये भवति। चित्पदार्थस्य नित्यत्वात् स्वरूपविकारो न सम्भवति, अतः तस्य अन्यथाभावः ज्ञानसंकोच-विकासादिरूपस्वभावविकारात्मकः। सोऽपि भोक्तृत्वसम्पत्तये। अत उभयमपि जगत् इत्यनेन संगृहीतम् इति ध्येयम्। एवं पूर्वार्धेन परमात्माधीनत्वमुपदिश्य मुमुक्षानुकूलां वृत्तिमुत्तरार्धेन उपदिशति - तेनेति।

तेन - सर्वनियन्त्रा परमपुरुषेण [2]त्यक्तेन - दत्तेन भगवदिच्छया संप्राप्तेन वस्तुना भुंजीथाः - भोगं कुर्वीथाः। भगवदुपासनोपयुक्तदेहधारणमात्रोपयोगिपदार्थ-मनुभवेत्यर्थः। यद्वा तेन जगता दुःखमूलत्वस्वाभाविकब्रह्मानन्दानुभवविरुद्धत्वादि-दोषचिन्तनपूर्वकं मनसा त्यक्तेन भोग्यभूतेन उपलक्षितः सन् भुंजीथाः भोग्यजातं मनसा त्यक्त्वा शास्त्राऽविरुद्धं भोगमनुतिष्ठेत्यर्थः।

मा गृधः कस्यस्वित् कस्यापि स्वसम्बन्धिनः असम्बन्धिनो वा धनं द्रव्यं मा गृधः मा कांक्षीः। गृधु अभिकांक्षायामित्यस्मात् लुङ्। यद्वा मा गृधः सर्वथा अभिलाषं मुंच, कुत इत्यपेक्षायामाह - कस्यस्वित् - अत्र स्वित् इति निपातः आक्षेपार्थः तेन धनमिति किं कस्यचित् अस्ति? अर्थात् न कस्यापि धनम्। यतः परमपुरुषस्य सर्वान्तःप्रविष्टत्वात् सर्वमेव तस्य शरीरम्। तस्मात्सर्वं ब्रह्मात्मकम् इति किमपि कस्यापि भोग्यं नास्तीत्यतः परमात्मभिन्नसर्वविषयामाशां परित्यजेत्यर्थः। अत्र जगत्पदेन भोक्तृभोग्ययोः ईशेत्यनेन ईश्वरस्य च कथनात् चिदचिदीश्वररूपं तत्त्वत्रयम् - ईशेतितव्यभेदश्च उक्तो भवति। ईशावास्यमित्यनेन अन्तः प्रविश्य नियमनं व्यज्यते।

---

1. स्तम्बः- क्षुद्रकीटविशेषः इति केचित् - स्तम्बः कर्मवश्य इतिश्रुतप्रकाशिका।
2. भाष्यान्तरगतत्यागशब्दार्थापेक्षया निर्विवादोऽयं अभिनवःसरसश्चार्थः।

# सुवोधिनी

(श्रीगोपालानन्दस्वामिविरचिता)

## उपोद्घातः

वेदाः स्तोतुं प्रवृत्ता यदनवधिमहानन्दमालक्ष्य दूरात्
प्रत्यावर्तन्त, सर्गस्थितिलयमखिलस्यास्य येनामनन्ति ।
स्थाने दिव्येऽक्षरे यो निवसति सततं नित्यमुक्तानुषक्तः
सोऽयं कृष्णः कृपालुः स्वयमवति निजांस्वामिनारायणो नः ।। 1 ।।
विश्वात्मानमनन्तं व्याकृतदेवादिविविधभेदं तम् ।
कल्याणगुणनिकेतं कृष्णं वन्दे क्षराक्षरातीतम् ।। 2 ।।
स्मृत्वा चरणसरोजे सहजानन्दस्य भगवतः साक्षात् ।
श्रुतिशिरसामहमधुना तनोमि विवृतिं सुबोधिनीं सरलाम् ।। 3 ।।

## ईशोपनिषत्सारः

स जयति विश्वव्यापी कर्मभिरखिलैः समाराध्यः ।
अनवद्यमंगलगुणो विचित्रशक्तिः श्रुतः श्रुतिषु ।। 4 ।।
असौ यः पुरुषः पूषा येन व्याप्तमिदं जगत् ।
स ईशः सत्यधर्मैकदृष्टये नस्तमो ह्रियात् ।। 5 ।।

## अवतारिका

इयमुपनिषदुपदेशरूपा, उपदेशश्च ब्रह्मविद्यामधिकृत्य । तदुक्तमभियुक्तैः - 'ईशावास्यमिदं सर्वमित्यादि यदनूच्यते । शिष्यं प्रति गुरोरेतद्ब्रह्मविद्यानुशासनम्' इति । स्वतन्त्रात्मताभ्रमनिवृत्तये सर्वस्य ब्रह्मात्मकतां मुमुक्षानुरूपां वृत्तिमप्युपदिशति ईशेति ।

**जगत्याम्** - लोके । **यत्किंच जगत्** - यत्किंच चराचरं चिदचिज्जातं वा । सर्वमिदम् । **ईशा** - ईष्ट इति ईट्, असंकोचतः सर्वनियन्त्रा तेन । **वास्यं** - व्याप्यम् । **तेन** - सर्वनियामकेन **त्यक्तेन** - दत्तेन (लाक्षणिकोऽयमर्थः) **भुंजीथाः** - शास्त्राविरुद्धं भोगं कुरु । **कस्यस्विद्धनम्** - कस्यापि द्रव्यम् । **मा गृधः**-माकांक्षीरित्यर्थः ।

चेतनाचेतनयोरेकं स्वभावेन अन्यत्तु स्वरूपेणान्यथात्वं गच्छतीति चेतनाचेतनं जगदित्युच्यते । यद्वा - त्यक्तेन तेनेति विशेष्यविशेषणभावेनान्वयः । दोषानुचिन्तनेन त्यक्तेन तेन भोग्यभूतेन वस्तुनोपलक्षितः सन् भुंजीथाः । भोग्यजातं दोषानुचिन्तनेन त्यक्त्वा यावद्देहधारणोपयोगि शास्त्राविरुद्धं भुंजीथा इति भावः ।

यद्वा - **मा गृधः** - सर्वथाऽऽशां त्यज । ननु स्वीये धन आशा कुतस्त्याज्या ?, मैवम् । **कस्यस्विद्धनम्** ? धनमिति भोग्यं लक्ष्यते, कस्यस्विदित्याक्षेपे, धनमिति किं कस्यचिदस्ति ? न कस्यापि किंचित् । तत्कुतः ? **ईशावास्यमिदं सर्वं यत्किंच** - अखिलमेव नियामकेन व्याप्तम्, अखिलमेव परंब्रह्मान्तःप्रविश्य नियमयतीति सर्वमेव तच्छरीरम्, तस्मादखिलं ब्रह्मात्मकम्, तत्कस्य किं भोग्यमस्ति ? तर्हि मुमुक्षोरप्यवर्जनीयो देहधारणोपयोगी शास्त्रीयो वा भोगः कथं घटेत ? **त्यक्तेन तेन भुंजीथाः** - मनसा त्यक्तेन तेनोपलक्षितः सन्भुंजीथाः, अहं कर्ताऽहं भोक्तेत्याद्यभिमानं त्यक्त्वा *'ब्रह्मार्पणं ब्रह्म हविः'* इति न्यायेन शास्त्रीयं देहधारणोपयुक्तं भोगं भुंजीथा इति ।

ईशावास्यमित्याभ्यामन्तःप्रविश्य नियमनं व्यज्यते ।

**परमतखण्डनम्**

अत्रापरे समाश्रित्य वसेराच्छादनार्थताम् ।<br>ब्रह्मणेदं जगत्सर्वमाच्छाद्यमभिमन्वते ।। 1 ।।

नैतेन सिद्धयेन्मिथ्यात्वं सिषाधयिषितं तु यत् ।
नहि केनचिदाच्छन्नं मृषा भवितुमर्हति ।। 2 ।।
सूर्यरश्मिसमाच्छन्नं नक्षत्रं किं मृषा भवेत् ? ।
शुक्तिस्वरूपे विज्ञाते रजतं बाध्यते परम् ।। 3 ।।
ज्ञातेन तेन चेच्छन्नं तत्तु सत्यं तदा भवेत् ।
घृष्टचन्दनदृष्टान्तो विषमस्तु निदर्शितः ।। 4 ।।
सलिलक्लेददौर्गन्ध्यं चन्दनांशगतं तु यत् ।
घृष्टांशस्य सुगन्धस्य भूयस्त्वादभिभूयते ।। 5 ।।
आच्छाद्यं कथमीशत्यमाच्छादकनिरूपकम् ।
मन्यते यदि धर्म्यैक्यमीशेत्यस्वरसं तदा ।। 6 ।।
घृष्टेन चन्दनेनेव ज्ञातेन ब्रह्मणैव हि ।
आच्छाद्यताऽस्य जगतो न स्वरूपसता भवेत् ।। 7 ।।
ज्ञातेनेति पदं तावदध्याहार्यं तदा भवेत् ।
तस्मान्मृषात्वावगमो नैतेन स्यात्कथंचन ।। 8 ।।
[1] किन्त्वीशा स्मर्यमाणेन व्यपेतप्रत्ययान्तरम् ।
आच्छाद्यमिदमित्येव वस्तुतोऽर्थः प्रतीयते ।। 9 ।।
सेयं निध्यानकाष्ठैव ध्येयान्यादर्शनं तु यत् ।
न वा बाधः पदार्थानां तिरोधिः सा त्वदर्शनम् ।। 10 ।।

---

1. किन्त्वीशा इति - जगन्मिथ्यात्वपर्यवसायि वास्यशब्दस्य आच्छादानार्थकत्वं भगवत्पादोक्तं निरस्य आच्छादनरूपार्थस्वीकाराभिनिवेशश्चेत् एवमर्थो वाच्य इति परिष्करोति । स्मर्यमाणेनेति विशेषणमध्याहृतम् । तथा च - ईशा स्मयर्माणेन तादृशस्मृतौ उपासनरूपाया प्रत्ययान्तरव्यवधान-विरहात् विषयान्तरं सर्वं जगद्गतं छादितमिव तिरोहितं भवतीति, तत्र च हेतुः स्मर्यमाणात्यर्थ-प्रियत्वमिति च भावः अवधेयः । एतद्विवरणमेव उत्तरश्लोकः 'सेयं निध्यान... इत्यादिः ।

* * * *

## द्वितीयो मन्त्रः

### विदुषो विद्यांगतया यावज्जीवं कर्मानुष्ठानम्

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतगँ समाः ।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ।। 2 ।।**

## प्रतिपदार्थदीपिका

### अवतारिका

एवं विरक्तस्य विदुषः फलसंगकर्तृत्वादित्यागयुक्तः ब्रह्मविद्यांगभूतः कर्मयोगः यावज्जीवम् अनुष्ठेयः इत्याह - कुर्वन्नेवेहेति । **शतं समाः** - शतं वत्सरान्, **कर्माणि**- नित्यनैमित्तिकानि, **कुर्वन्नेव, इह** - लोके, **जिजीविषेत्** - जीवितुमिच्छेत्, त्वयि- ईश्वरपरतन्त्रे सति **एवम्** अनुष्ठेयानि इत्यर्थः । **नान्यथेतोऽस्ति** - इतः- अनुष्ठानात् **अन्यथा** - अननुष्ठानम् नास्ति इत्यर्थः **न कर्म लिप्यते नरे** इति । नरे- प्रस्तुतब्रह्मविदि नरे, विद्यांगतया क्रियमाणः कर्मयोगः न लिप्यते; किन्तु भगवति भक्तियोगम् उत्पादयति इत्यर्थः ।

कैश्चित् अयं मन्त्रः अविद्वद्विषयतया व्याख्यातः । स च 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' (ई.उ.11) इति । वक्ष्यमाणमन्त्रविरोधात् अनुपपन्नः । तस्मात् त्रय्यन्तनिष्णाताः तद्व्याख्यां न बहुमन्यन्ते ।

## वेदान्ताचार्यभाष्यम्

### अवतारिका

एवं विदुषः फलसंगकतृत्वादित्यागयुक्तं नित्यनैमित्तिकरूपं विद्यांगभूतं कर्म यावज्जीवमनुष्ठेयम् इत्याह **कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः** इति। ब्रह्मविदोऽपि यावद्विद्यापूर्ति जीवनमिष्टं भवतीति ज्ञापनाय [1]सन्प्रयोगः । **शतम्** - इति च प्रायिकविषयम् । शतं समाः जीवन् [2]अधिकारानुगुणानि कर्माणि कुर्वीतैव । न

---

1. **'सन् प्रयोगः'** इति । मन्त्रे जीवेत् इत्यनुक्त्वा, जिजीविषेत् इति इच्छार्थकसन्प्रत्ययान्ततया कथनं मुमुक्षोरपि विद्यासमाप्तिपर्यन्तं जीवनं इष्टं भवतीति द्योतयितुमिति भावः ।
2. **अधिकारानुगुणानीति** । स्वस्ववर्णाश्रमानुगुणानीत्यर्थः ।

कदाचिदपि विद्यांगं कर्म परित्यजेत् इत्यर्थः । अस्य वाक्यस्य फलसाधनभूत-स्वतन्त्रकर्मविषयत्वे विशेषहेत्वभावस्सूत्रितः [1]"नाविशेषात्" (ब्र.सू.3-4-13) इति । अर्थान्तरं च प्रकरणाविरुद्धम् अनन्तरसूत्रोक्तम् [2]'स्तुतयेऽनुमितिर्वा" (ब्र.सू.3-4-14) इति । भाष्यम् - "वाशब्दोऽवधारणार्थः । 'ईशावास्यमिदं सर्वम्' इति विद्याप्रकरणात् विद्यास्तुतये सर्वदा कर्मानुष्ठानानुमतिरियम् । विद्यामाहात्म्यात् सर्वदा कर्मकुर्वन्नपि न लिप्यते कर्मभिरिति हि विद्या स्तुता भवति । वाक्यशेषश्चैतदेव दर्शयति - 'एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे' इति" । त्वयि - ब्रह्मविदि अधिकारिणि एवमेवानुष्ठेयार्थः, इतोऽन्यथा नास्ति इति व्यतिरेकेणोक्तं दृढीकरणार्थम् ।

### विदुषा अनुष्ठीयमानकर्मणा अलेपकत्वोक्तिः

ननु ब्रह्मविदोऽपि कर्मानुष्ठानभावाद्बन्धस्स्यादित्यत्राह - न कर्म लिप्यते नरे - इति। प्रस्तुते ब्रह्मविदि [3]नरे । [4]'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्' (ब्र.सू.4-1-16) इति

---

1. 'नाविशेषात्' पुरुषार्थाधिकरणे इदं ब्रह्मसूत्रम् । 'कुर्वन्नेवेह' इति प्रकृतमन्त्रमादाय पूर्वपक्षिणा आत्मविदामपि. नियमेन यावज्जीवं कर्मानुष्ठानविधेः, तेषामात्मज्ञानं कर्मण एवांगम् - इत्याक्षेपे कृते, इदं समाधानसूत्रम् । अस्मिन् मन्त्रे 'कर्मणि' इत्येव पदं दृष्टम् । न तु स्वर्गादिफलसाधनभूतस्वतन्त्रकर्माणि इति । एवं विशेषहेतोः अदर्शनात् विद्यांगभूत निष्कामकर्मविषयतयैव अयं मन्त्रो ग्राह्यः । तादृशकर्माणि अंगिभूतेन उपासनेन सह तत्सिद्ध्यर्थं नियततया यावज्जीवं अनुष्ठेयानीति मन्त्रार्थः । एवं च आत्मज्ञानमेव कर्मणो अंगमिति वादो न युक्तः । मोक्षसाधनीभूत ब्रह्मज्ञानांगतयैव इह मन्त्रे निष्कामकर्मविधिरिति भावः ।

2. इदं तदनन्तरसूत्रमेव । प्रकृतमन्त्रं विद्यांगकर्मणां अवश्यानुष्ठेयत्वपरतया पूर्वसूत्रे व्याख्याय, अनेन सूत्रेण अन्यथापि पूर्वपक्षः समाधीयते । कुर्वन्नेवेति मन्त्रे अविशेषेण सर्वकर्मणां ग्रहणेऽपि ब्रह्मविद्याप्रभावात् नित्यं तानि कुर्वाणेऽपि तेषां न फलप्रदत्वमिति, ब्रह्मविद्यास्तुतये कर्मणां यावज्जीवानुष्ठानानुमतिः इति । उदाहृतं च श्रीभाष्यमेतदर्थकम् ।

3. 'नरे' न रमते इति नरः इति व्युत्पत्त्या निस्संगे (ब्रह्मविदि) इति श्रुतप्रकाशिका ।

4. 'अग्निहोत्रादी'ति - ब्रह्मविद्यामाहात्म्यात् सुकृतदुष्कृतयोः उत्तरपूर्वाघयोः अश्लेषविनाशौ उक्तौ तदधिगमसूत्रे। एवं फलाश्लेषात् अग्निहोत्रादिकर्मणां अननुष्ठानस्य प्राप्तौ, मुमुक्षुणा फलापेक्षाविरहेऽपि स्वाश्रमधर्मत्वात् तेषामवश्यानुष्ठेयत्वमिति अस्मिन् अधिकरणे विनियोगपृथक्त्वन्यायेन निरूप्यते । यद्यपि अग्निहोत्रादिकर्मणां स्वर्गादिफलत्वम् । तथापि तेषामेव तादृशफलापेक्षाविरहेऽपि चित्तशुद्धिसिद्धये स्वीकार्यत्वेन अवश्यानुष्ठेयत्वमिति निरूपितम् । अग्निहोत्रादि कर्माणि तु तत्कार्यायैव ब्रह्मविद्योत्पत्तिरूपकार्यार्थमेव विदुषा अनुष्ठेयानि । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन' इत्यादिश्रुतिवाक्येन कर्मणां विद्यासाधनत्वदर्शनात् - इति सूत्रार्थः। एवं विद्यांगत्वेनैव स्वीकारात् न स्वर्गादिफलश्लेष इति भावः ।

विनियोगपृथक्त्वन्यायेन कर्म न स्वर्गादिफलहेतुर्भवति । [1]विद्यानुपयुक्तकाम्यानां निषिद्धानां च विरक्तेन विवेकिना न बुद्धिपूर्वोपादानसम्भवः । 'सम्भावितानामपि केषाचित् [2]"नाविरतो दुश्चरितात्" ( क.उ.2-24) इत्यादिबलात् स्वानुगुणा निष्कृतिः स्यात् । तदधिगमाधिकरणे (ब्र.सू.अधि.4-1-7) तु प्रामादिकानामेव अश्लेषः परविद्यावतामपिस्थापितः। [3]ज्ञानाग्निदग्धाधिकारो विधिनिषेधानधिकारीति पक्षस्तु न वेदवित्सम्मतः ।।

## ईशावास्यप्रकाशिका

### अवतारिका

एवं विरक्तस्य विदुषः फलसंगकर्तृत्वादित्यागयुक्तो ब्रह्मविद्यांगभूतः कर्मयोगो यावज्जीवम् अनुष्ठेय इत्याह - कुर्वन्नेवेति ।

**शतं समाः** - शतसंवत्सरान्, प्रायिकवादोऽयम् । **कर्माणि** - नित्यनैमित्तिकानि, **कुर्वन्नेव, इह लोके, जिजीविषेत्** - जीवितुमिच्छेत् । ब्रह्मविदोऽपि यावद्विद्यापूर्ति जीवितुमिच्छा भवतीति प्राप्तत्वात् शतसंख्याकान् वत्सरान् जीवन्नित्यनूद्य कर्माणि कुर्वीतैवेति विधिस्संक्रामयितव्यः ।[4]यावज्ज्ञानयोगाधिकारं कर्मयोगः कर्तव्य इति भावः।

### कर्मयोगशब्दार्थः

कर्मयोगो नाम 'दैवमेवापरे यज्ञम्'(भ.गी.4-25) इत्यादिना विकल्पविहितेषु कर्मयोगावान्तरभेदेष्वेकं यथारुचि अंगितया स्वीकृत्य अन्यानि नित्यनैमित्तिकानि तदंगतयोपसंहृत्य असंगकर्मानुष्ठानविशेषः । न कदाचिदपि विद्यांगकर्म परित्यजेत् इति एवकाराभिप्रायः ।

---

1.अत्र 'विद्यानुपयुक्तकाम्यानां' इति कथनात्, विद्योपयुक्तकाम्याना (अर्थात् आयुष्यहोमादीना) विद्यासिद्धिपर्यन्तायुरपेक्षया आचरणं ब्रह्मविदो न दोषायेति व्यंजितम् ।

2. 'नाविरतो दुश्चरितात्' इत्यादिकठोपनिषन्मन्त्रे पापकर्मभ्यः निवृत्तिरपि ब्रह्मविद्यांगत्वेन विहिता। तद्व्यतिरेकेण ब्रह्मविदापि पापकरणसम्भवे, प्रायश्चित्तेनैव तच्छोधनमिति भावः । निष्कृतिः - प्रायश्चित्तम् ।

3. ज्ञानाग्निदग्धेति - अयं अद्वैतिना पक्षः । तन्मते सन्न्यासिनामेव ब्रह्मविद्याधिकार इति, ते च स्वब्रह्मज्ञानेन कर्मोत्तीर्णत्वात् शास्त्रीयविधिनिषेधवश्याः न भवन्तीति ज्ञानाग्निदग्धाधिकाराः इति व्यपदिश्यन्ते । तेषां ब्रह्मज्ञानस्य कर्मानपेक्षणात् द्वितीयमन्त्रोऽयं न मुमुक्षुविषयः । किन्तु बुभुक्षुविषय इति तन्मतं न वेदवित्सम्मतम् । यतः अत्रैव उपनिषदि 'विद्यां चाविद्यां च' इति मन्त्रे उभयोरपि विद्याकर्मणोः मुमुक्षुं प्रति मृत्युतरणपूर्वक - अमृतत्वप्राप्तिसाधनतया स्वीकार्यत्वश्रवणादिति भावः ।

4. अत्र 'यावद्ध्यानयोगं' इति पाठः श्रेयान् ।

**त्वयि** - ईश्वरपरतन्त्रात्मस्वरूपतया तदाज्ञापरिपालनरूपकर्मानुष्ठाने अधिकार-पूर्तिमतीति भावः। **एवम्** - एवमेव अनुष्ठेयानि कर्माणि इत्यर्थः।

उक्तमर्थं व्यतिरेकेण स्थिरीकरोति - **नान्यथेतोऽस्ति इति**। **इतः** - अनुष्ठानात्, **अन्यथा** - प्रकारान्तरम्, अ(न)नुष्ठानं नास्ति इत्यर्थः।

ननु ब्रह्मविदोऽपि कर्मानुष्ठानावश्यंभावे बन्धस्स्यात् इत्यत्राह - **न कर्म लिप्यते नरे** - इति। विद्याविरुद्धेषु कर्मफलेषु, न रमत इति - नरः। प्रस्तुते ब्रह्मविदि नरे विद्यांगतया क्रियमाणः कर्मयोगः, न लिप्यते - न स्वर्गादिहेतुर्भवति, अपि तु ज्ञानयोगद्वारा वा, साक्षाद्वा, प्रथमं परिशुद्धजीवात्मविषयकयोगमुत्पाद्य, पश्चात् भक्तियोगांगभूतं प्रत्यगात्मसाक्षात्कारमेव उत्पादयति इति भावः।

**कुर्वन्नेवेति विधेः अविद्वन्मात्रविषयकत्वनिरासः**

यत्तु - 'कुर्वन्नेवेह कर्माणि' इत्ययं विधिः अविद्वद्विषय एव - न ब्रह्मविद्विषय इति, तस्य विधिनिषेधशास्त्रवश्यत्वाभावात् ब्रह्मज्ञानाग्निना कर्माधिकारः प्रणष्ट इति शांकरं व्याख्यानम् - तत्प्रकरणविरुद्धम्,

'विद्यां चाविद्यां च यस्तद्वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते'॥ (ई. उ. 11)

इत्युपरितनविध्यन्तरविरुद्धं च इति, न वेदविदो बहुमन्यन्ते॥

## श्रीरंगाचार्यभाष्यम्

बुभुक्षोः भोगहेतुसुकृतप्रयोजकतयैव मुमुक्षोरपि मोक्षहेतुपरविद्यासहकारितया, स्वाधिकारार्हेण केनचिदाकारेण कर्मयोगानुष्ठानावश्यकताम् अभिसन्धाय, तदंगभूतं त्रिविधत्यागलक्षणानुसन्धानविशेषरूपमाकारं प्रथममन्त्रे अभिधाय अंगिभूतं कर्मयोगं स्वांगिभूतपरविद्यायाः, आप्रयाणादनुष्ठेयायाः उपकारकतया यावज्जीवमनुष्ठेयं [1]प्रतिपादयति 'कुर्वन्नेव' इत्यादिर्द्वितीयो मन्त्रः।

---

1. 'प्रतिपादयति' इति। एतदनन्तरं 'कुर्वन्नेवेत्यादिना द्वितीयमन्त्रेण' इति शोधनं युक्तम्। प्रतिपादयतेः वेदपुरुषः कर्ता स्यात्। अन्यथा अभिसन्धाय, प्रथममन्त्रेऽभिधाय इत्येतेन पूर्वल्यबन्तद्वयेन अनन्वयः।

बुभुक्षूपयोगिनामेव च कर्मणां केनचिदाकारेण मुमुक्षोरपि आवश्यकतां प्रदर्शयितुमेव कर्मकाण्डभूतसंहितान्ते एव, ज्ञानकाण्डोऽपि उपाक्रामि।

य एव यज्ञादयो धर्माः केवलाश्रमिणां बुभुक्षूणामपेक्षिताः; त एव मुमुक्षूणामपि विद्यांगतयाऽपेक्षिताः आकारमात्रेणैव भेदः। न तु कर्मस्वरूपभेद इत्ययमंशः 'सर्वथाऽपि त एवोभयलिंगात्' (ब्र.सू. 3-4-34) इति सूत्रे सूत्रकारेणाऽपि दर्शितः।

अस्य मन्त्रस्य विवरणम् एवम् - पूर्वमन्त्रोक्तप्रकारेण, त्रिविधत्याग-लक्षणानुसंधानपूर्वकमिति यावत्। मुमुक्षुर्भवानपीति शेषः; मुमुक्षुप्रकरणात्, जिजीविषेत् इति प्रथमपुरुषनिर्देशानुगुण्यात्, उपदेशप्रकरणानुगुण्याच्च। इह अस्मिन् विद्यायोनिजन्मनि, कर्माणि - स्ववर्णस्वाश्रमाधिकारानुगुणतया बुभुक्षुं प्रति प्राग्विहितानि सर्वाणि कर्माणि **कुर्वन्नेव** - विद्यांगतया यथाशक्त्यनुतिष्ठन्नेव, **शतं समाः** - शतं संवत्सरान्, स्वायुरवसानपर्यन्तमिति यावत्। शतोक्तिस्तु 'शतायुः पुरुषः' (तै.ब्रा.1-8-9) इति पुरुषायुषस्य संवत्सरशतपरिमितत्वश्रवणेन प्रायशस्तत्संभवा-ऽभिप्रायेण कृता।

यद्वा शतशब्दोऽनेकमात्रपरः; अनेकान् संवत्सरान् इत्यर्थः। विद्यासिद्धि-पर्यन्तमिति यावत्। **जिजीविषेत्** - जीवितुमिच्छेत्, विदुषोऽपि यावद्विद्यानिष्पत्ति तदंगकर्मानुष्ठानं जीवनं च एष्टव्यमेव भवतीत्यभिप्रायेण 'कुर्वन्नेव जिजीविषेत्' इत्युक्तिः। बुभुक्षुं प्रति विहितानां सर्वेषां कर्मणामविशेषेणानुष्ठाने विदुषोऽपि बुभुक्षोरिव बन्धः किं न स्यात्? इत्याशंकापरिहारायोच्यते - **त्वयि नान्यथेतोस्ति इत्यादि**। **नरे** - न रमत इति नरः। तस्मिन् फलानुरागरहिते, एतत्फलं मम न स्यात् इत्यभिसन्धिमतीति यावत्। **त्वयि, कर्म** - पूर्वोक्तेषु कर्मसु किमपि कर्म, **न लिप्यते** - संश्लेषानुकूलव्यापारवत् न भवति, स्वसत्तामात्रेण [1]मोक्षविरोधिफलोपधायकसम्बन्ध-विशेषानुकूलव्यापारवत् न भवति। **इतः** - अस्मात्प्रकारात्, **अन्यथा** - प्रकारान्तरं

1. मोक्षविरोधि फलं स्वर्गनरकादि। तदुपधायकसंबन्धविशेषः संश्लेषः। तदनुकूलव्यापाररूपत्वं लिम्पतिधात्वर्थ इति भावः।

मोक्षविरोधिफलोपधायकसम्बन्धविशेषानुकूलव्यापारवत्वलक्षणं नास्ति - न कदापि भवतीति । प्रागुक्तलक्षणत्रिविधत्यागरूपानुसन्धानपूर्वकं परविद्यागतया कर्माण्यनु-तिष्ठतः, कदाचिदपि मोक्षविरोधिफलप्राप्तिलक्षणबन्धप्रसंगएव न सम्भवतीति भावः ।

### अस्मिन्विषये श्रुतप्रकाशिकासंवादः

'इतोऽन्यथा नास्ति' इत्यभिधानम्, इदं तात्विकमेव न स्तुतिमात्रम् इति ज्ञापनाय। अत एव 'स्तुतयेऽनुमतिर्वा' ( ब्र.सू.3-4-14) इति सूत्रश्रुतप्रकाशिकायामिदं श्रुतिखंडं "नरे न रमत इति नरः - निस्संगः, तस्मिन् इतोऽन्यथा नास्ति,- नरे त्वयि न कर्म लिप्यत इतीतोऽन्यथा नास्ति इदमेव तत्त्वम्, न स्तुतिमात्रम् इत्यर्थः" इति व्यासार्यैरपि व्याख्यातम् ।

### त्रिविधत्यागलक्षणकर्मानुष्ठानस्य बन्धकत्वाभावे गीतासंवादः

दर्शितत्रिविधत्यागलक्षणानुसन्धानविशेषवता मोक्षविरोधिफलासम्भवः स्पष्टमुक्तो भगवताऽपि गीताशास्त्रे -

1"अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिना प्रेत्य न तु सन्यासिनां क्वचित् "।।(भ.गी.18-12) इति ।
2"सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्"।। (भ.गी.18-56) इति च ।

अत्र द्वितीयश्लोकेऽपि मद्व्यपाश्रयः इत्यस्य मयि सन्यस्तकतृत्वादिक इत्यर्थकतया यथोक्तलक्षणत्यागवतः सर्वाणि कर्माणि कुर्वतोऽपि मोक्षविरोधितत्तत्फल-प्रसंगमन्तरेणैव मोक्षप्राप्तिरभिहिता ।

---

1. 'अनिष्टमिष्टं' इति । अस्य श्लोकस्य गीताभाष्योक्तोऽयमर्थः । यथा 'अनिष्टं नरकादि, इष्टं स्वर्गादि, मिश्रं अनिष्टसम्भिन्नं पुत्रपश्वन्नादि, एतत्रिविधं कर्मफलं अत्यागिनां कर्तृत्व-ममता-फलत्यागरहितानां प्रेत्य भवति । प्रेत्येति कर्मानुष्ठानोत्तरकालमित्यर्थः । न तु सन्यासिनां क्वचित् । न तु कर्तृत्वादिपरित्यागिनां क्वचिदपि मोक्षविरोधि फलं भवति' - इति । शिष्टमाकरे ।

2. 'सर्वकर्माणि' इति । अस्यापि भाष्योक्तार्थ एवम् । 'न केवलं नित्यनैमित्तिकानि कर्माणि, अपि तु काम्यान्यपि कर्माणि, मद्व्यपाश्रयः - मयि सन्यस्तकर्तृत्वादिकः कुर्वाणो मत्प्रसादात् शाश्वतं पदमव्ययं अविकलं प्राप्नोति । पद्यत इति पदम् । मां प्राप्नोतीत्यर्थः' ।। इति ।

मन्त्रे कर्मशब्देन काम्यकर्मणामपि विवक्षितत्वसाधनम्

अत्र सर्वशब्देन काम्यकर्मणामपि विवक्षितत्वेन तेषामपि विदुषा दर्शित-त्यागलक्षणाभिसन्धिविशेषवतानुष्ठीयमानानां विद्यामाहात्म्येन विद्योपकारकतयैव पर्यवसानस्य मोक्षविरोधितत्फलप्रसंगविरहस्य च सिद्धेश्चेहाभिप्रेततया विद्यास्तुतिरपि विवक्षिता ।

नित्यनैमित्तिककर्मणां कामोपनिबन्धमन्तरेण बुभुक्षून् मुमुक्षूंश्च प्रति अविशेषेणैव विधानेन विनियोगपृथक्त्वन्यायेनैव तत्तदधिकार्युद्देश्यप्रधानफलानुगुण्यसिद्ध्या तद्विरोधिफलप्रसंगाभावात्, इह तत्प्रसंगसम्भवमाश्रित्य तत्प्रतिषेधदर्शनात् कामोपनिबन्धपूर्वकं विहितानां काम्यकर्मणामेव विरोधिफलहेतुत्वस्वभावनैयत्याच्च विद्यामाहात्म्येन तेषामेव इह विरोधिफलहेतुत्वलक्षणलेपकत्वप्रसंगपरिहारमुखेन विद्यास्तुतेरिह विवक्षितत्वात् काम्यकर्मणामत्राविवक्षितत्वे तदनिर्वाहाच्च, तान्यप्यत्र विवक्षितान्येवेत्यवगम्यते ।

अस्मिन्विषये ब्रह्मसूत्रसम्मतिः

तदिदं सर्वमभिप्रेत्यैव पुरुषार्थाधिकरणे 'स्तुतयेऽनुमतिर्वा' (ब्र.सू.3-4-14) इति सूत्रे सूत्रकारेण अस्यां श्रुतौ विदुषः सर्वेषां कर्मणाम् अनुमतिः विद्यास्तुत्यर्था इत्युक्तम्।

एतेन विद्वद्विषया एव इयं श्रुतिः विदुषोऽपि विद्यांगतया यावज्जीवं कर्मानुष्ठानमावश्यकमेवेति प्रतिपादयति - 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः'- इति ; [1]न त्वविदुषः इति सिद्धम् ।

अविद्वद्विषयकत्वेन शांकरयोजना - तन्निरासश्च

यत्तु, पूर्वमन्त्रेणात्मविदो विदुषो विद्यास्वरूपोपदेशः कृतः - आत्मग्रहणा-शक्तस्य अविदुषः कर्माण्युपदिशति अयम् मन्त्रः, न तु विदुषः, विद्याकर्मणोः अत्यन्तविरोधेन एकं प्रति उभयोर्विधानायोगात् ; सूचितं च अत्रापि 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इत्यनेन जिजीविषुरेव कर्माधिकारीति । विदुषो जीवितेच्छाविरहाच्च नायं मन्त्रो

1. 'न त्वविदुषः इति' - अत्र 'न त्वविद्वद्विषया इति सिद्धम्' इति युक्तम् । अन्यथा अनन्वयः स्फुटः ।

विद्वद्विषय इति शंकरोक्तमुपनिषद्भाष्ये ।

तन्न ; पूर्वमेकोनचत्वारिंशदध्यायात्मककर्मकाण्डेन अविद्वद्विषयवक्तव्यसर्व-कर्मनिरूपणानन्तरं प्रवृत्ते ज्ञानकाण्डरूपे विद्वद्विषयेऽस्मिन् चत्वारिंशाध्याये प्रकरण-विरोधेनाविदुषः प्रसंगलेशाभावात्, 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (ब्र.सू.3-4-26) इत्यधिकरणे 'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्' (ब्र.सू.4-1-16) इत्यधिकरणे च सूत्रकारेणैयकर्मवत्सु गृहस्थेषु विद्यायाः कर्मांगकत्वस्य निर्धारितत्वेन, अस्यामेवोपनिषदि, उत्तरत्र 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह' (ई.उ.11) इत्यत्र विद्याकर्मणोः एकैकानुष्ठाने अनर्थप्रदर्शनपूर्वकम् उभयोः अंगांगिभावेन सह अनुष्ठेयतायाः स्थापयिष्यमाणत्वेन च विद्याकर्मणोर्विरोधस्यैव अप्रामाणिकत्वात् ; तत्रापि अन्यथा-व्याख्यानस्य असमंजसताया वक्ष्यमाणत्वात्, विदुषोऽपि विद्यानिष्पत्तिपर्यन्तं देहधारणस्यावश्यकतया, जीवितेच्छाया अपि अविरुद्धत्वेन, तावन्मात्रेण अस्य मन्त्रस्य अविद्वद्विषयतायाः वक्तुमशक्यत्वात् ; 'नाविशेषात्' (ब्र.सू.3-4-13) 'स्तुतयेऽनुमतिर्वा' (ब्र.सू.3-4-14) इति सूत्राभ्याम् अस्य मन्त्रस्य विद्वद्विषयतायाः सूत्रकारेणोक्तत्वेन सूत्रकाराशयविरोधाच्च ।

### शारीरकभाष्ये शंकरकृतयोजनान्तरं - तन्निरासश्च

यदपि 'नाविशेषात्' (ब्र.सू.3-4-13) इति सूत्रस्य 'कुर्वन्नेवेह कर्माणि जिजीविषेत्' इत्येवमादीनि न विद्वद्विषयाणि ; विद्वदविदुषोर्व्यावर्तकरूपेण निर्देश-मन्तरेणाविशेषेणैव कर्मानुष्ठाननियमविधानात्, तस्मादविद्वद्विषयाण्येव भवितु-मर्हन्तीत्येतदर्थपरतया व्याख्यानं, 'स्तुतयेऽनुमतिर्वा' (ब्र.सू.3-4-14) इति सूत्रस्य 'यद्यप्यत्र प्रकरणसामर्थ्याद्विद्वानेव कुर्वन्निति सम्बध्येत ; तथापि, विद्यास्तुतये कर्मानु-ज्ञानमेतदिति द्रष्टव्यम्' इत्यर्थपरतया व्याख्यानं च शारीरकभाष्ये शंकरेण कृतम् ।

तदप्ययुक्तम् - 'पुरुषार्थाधिकरणे विद्यांगकात् स्वतन्त्रात्कर्मणः पुरुषार्थो वा, उत विद्यातः पुरुषार्थो वा ?' इत्येव विप्रतिपत्तेः प्रसक्तत्वात् ; 'नियमात्' (ब्र.सू.3-4-7) इति सूत्रे पुरुषार्थार्थिनं आत्मविदः पुरुषस्य, यावज्जीवं कर्मसु 'कुर्वन्नेवेह कर्माणि

जिजीविषेच्छतं समाः' इत्यनया श्रुत्या नियमनेन विद्यांगकात्स्वतन्त्रात्कर्मण एव पुरुषार्थ इत्येव पूर्वपक्षस्य प्राप्तत्वाच्च; तादृशपूर्वपक्षनिरसनार्थं प्रवृत्तयोः "नाविशेषात्" (ब्र.सू.3-4-13) "स्तुतयेऽनुमतिर्वा" (ब्र.सू.3-4-14 ) [1]इत्यनयोः सूत्रयोः कर्मणा विद्यांगतायापि सम्भवेन ततोऽपि हेतोः पुरुषार्थार्थिनो यावज्जीवं कर्मसु नियमनसम्भवात्, अस्याश्श्रुतेः विद्यांगकर्मविषयकत्वमेव सम्भवति ; न तु स्वतन्त्र-कर्मविषयकत्वम् ; तदसाधारणव्यावर्तकविशेषणनिर्देशादर्शनात्, प्रत्युत विद्यांगकर्म-विषयकत्वोत्तम्भकनिर्देशस्यैव दर्शनाच्च, अतो विद्यात एव पुरुषार्थ इति यत्किंचिदेकविधपुरुषार्थांशस्य स्वतन्त्रकर्मसाध्यत्वविद्यासाध्यत्वरूपकोटिद्वयविषयक-विप्रतिपत्तिघटकसिद्धान्तकोटिस्थापनपरताया एव युक्तत्वेन, दर्शितश्रुतेः विद्वदविद्व-द्विषयकत्वरूपकोटिद्वयविषयकविप्रतिपत्तेः अप्रसक्तायाः परिहारपरत्वेन अनयोः सूत्रयोः व्याख्यानस्य प्रकरणविरोधेन अयुक्तत्वात्; अस्याश्श्रुतेः अविद्वद्विषयकत्व-व्यवस्थापनपरतया अत्र [2]आद्यसूत्रव्याख्यानेन, प्रत्युत स्वतन्त्रात्कर्मण एव पुरुषार्थ इति पूर्वपक्षकोटेरेव स्थापनसिद्ध्या तस्य सिद्धान्तपरसूत्रताया एव असिद्धिप्रसंगात् ; अस्याश्श्रुतेः विद्वद्विषयकत्वमेव आश्रित्य विद्यास्तुतये विदुषो यावज्जीवं कर्मानुष्ठानानुमतिविषयकत्वव्यवस्थापनपरतया, द्वितीयसूत्रव्याख्यानस्यापि विद्या-कर्मणोःतेजस्तिमिरयोरिवपरस्परसाहचर्यगन्धासहिष्णुस्वमतविरुद्धत्वाच्चाविद्याकर्मणोः तेजस्तिमिरयोरिव परस्परसाहचर्यगन्धासहिष्णुत्वे हि स्तुत्यर्थमपि वा तयोः साहचर्येण अनुष्ठानानुमतिरियं न कथंचिदपि संजाघटीति ।

### शंकरोक्तिषु परस्परव्याघातः

एवं 'स्तुतयेऽनुमतिर्वा' (ब्र.सू.3-4-14) इति सूत्रभाष्ये 'कुर्वन्नेवेह कर्माणि' इत्यादि मन्त्रस्य, विद्वद्विषयकतायाः सूत्रकाराभिप्रेतत्वं स्वयमेव व्याकुर्वता शंकरेण उपनिषद्भाष्ये केवलाविद्वद्विषयकत्ववर्णनं स्वयचनविरोधेनापि व्याहतम् ।

---

1. 'इत्यनयोः सूत्रयोः' इत्यस्य उत्तरत्र 'स्थापनपरताया एव युक्तत्वेन' इत्यत्रान्वयो बोध्यः ।
2. 'आद्यसूत्रव्याख्यानेन' अस्याः तृतीयायाः 'स्थापनसिद्ध्या' इत्यनेनान्वयो द्रष्टव्यः।

किंच, अस्मिन्मन्त्रे 'न कर्म लिप्यते नरे' इति कर्मणः फलजनकत्व-रूपलेपकत्वाभावश्रवणमपि अविद्वद्विषयकतां तस्य निरुणद्धि ; कर्मणा स्वर्गादि-फललिप्सोः अविदुषः स्वर्गादिफलसिद्धेः अवश्यंभावितया तस्मिन् तस्य लेपकत्वा-भाववर्णनासम्भवात् ।

अन्यथाऽपि परस्परव्याघातप्रदर्शनम्

इदं पुनरत्रावधेयम् - पुरुषार्थाधिकरणे, कर्मणः पुरुषार्थो वा ;विद्यातः पुरुषार्थो वा; इति विप्रतिपत्तिस्वरूपं तावत् शोधनीयम् ।

न तावदत्र सामान्यतः पुरुषार्थस्य कर्मसाध्यत्वविद्यासाध्यत्वरूपकोटिद्वय-विषयकत्वं वक्तुं शक्यम् स्वर्गादिफलस्य कर्मसाध्यतायास्सिद्धान्तिनोऽपि अभिमतत्वात्, उद्गीथादिविद्यासाध्यतायाः कर्मफलेषु पूर्वपक्षिणोऽपि अभिमतत्वाच्च। उभयसम्प्रतिपन्नयोः दर्शितकोट्योः परस्परविरोधित्वाभावेन विप्रतिपत्तिविषयताया एव असम्भवात् । किन्तु वेदान्तशास्त्रं स्वप्रतिपिपादयिषितप्रधानपुरुषार्थविशेष्यक-स्वतन्त्रकर्मसाध्यत्वप्रकारकप्रमितिपरं ; वा तद्विशेष्यकस्वतन्त्रविद्यासाध्यत्वप्रकारक-प्रमितिपरं वा; इत्येव विप्रतिपत्तिस्वरूपमिह विवक्षितं वक्तव्यम् । इत्थं च 'कुर्वन्नेव' इत्यादिमन्त्रस्य अविद्वद्विषयकत्वेन व्याख्यानपरतायाः 'नाविशेषात्' (ब्र.सू.3-4-13) इति सूत्रस्य स्वीकारे सिद्धान्तपरस्यास्य सूत्रस्य पूर्वपक्षस्थापनपरताया एव प्रसंगेन शंकरव्याख्याने परस्परव्याघातो दुर्वार एवेति ।

तथा च श्रीभाष्यकारोक्तरीत्या 'नाविशेषात्' (ब्र.सू.3-4-13) इति सूत्रं 'कुर्वन्नेवेह कर्माणि' इत्यादिश्रुतौ कर्मणा फलसाधनभूतस्वतन्त्रकर्मविद्यांगभूतकर्मणोः एकतरा-साधारणाकारेण विशिष्य निर्देशाभावात् अत्रत्यकर्मशब्दस्य विद्यांगकर्मपरतास-म्भावात् न विरोध इति स्वपक्षविरोधाभावप्रदर्शनमात्रेण पूर्वपक्षिप्रत्याख्यानपरम् ; 'स्तुतयेऽनुमतिर्वा' (ब्र.सू.3-4-14) इति सूत्रन्तु दर्शितश्रुतौ 'न कर्म लिप्यते नरे' इति वाक्यशेषेण सर्वदा कर्माणि कुर्वन्नपि विद्वान् न तैर्लिप्यते इति 'ईशावास्यमिदं सर्वम्' (ई.उ.) इति पूर्वमन्त्रप्रस्तुतविद्यास्तुतये सर्वकर्मानुमतेरेव प्रतिपाद्यमानतया, प्रत्युत परपक्षविरोधोऽप्यस्तीति परपक्षविरोधप्रदर्शनेनापि पूर्वपक्षिप्रत्याख्यानपरं चेति सिद्धम् ।

स्वतन्त्रकर्मपरत्ववादिनां पूर्वपक्षिणां कर्मलेपाभावनिर्देशो हि विरुद्ध एव, कर्मफलसम्बन्धलक्षणलेपस्यैव तदभिमतपुरुषार्थत्वात्, तत्साधनायैव स्वतन्त्रकर्मानुष्ठानस्य तदभिमतत्वाच्च ।

#### मन्त्रस्य अर्थवादरूपत्वे आक्षेपः समाधानं च

न च - 'स्तुतयेऽनुमतिर्वा' (ब्र.सू.3-4-14) इति सूत्रे दर्शितश्रुतिप्रतिपन्नाया विदुषः कर्मानुष्ठानानुमतेः विद्यास्तुत्यर्थतावर्णनेन कर्मणामनुष्ठेयत्वरूपप्रातीतिकार्थे तात्पर्याभावावगमात् विदुषः कर्मानुष्ठानावश्यकत्वं न सिध्यत्यनया श्रुत्या इति वाच्यम्, स्तुतिशब्दस्य गुणकथनमात्रपरत्वेन सत्यासत्यगुणकथनसाधारणतया स्वप्रतिपाद्यार्थतात्पर्याभावनियमस्य दुर्वचत्वात् ; अन्यथा पण्डितादिषु पाण्डित्यादिगुणकथनेन, सर्वेश्वरे सर्वज्ञत्वादिगुणकथनेन च सत्यगुणविषयेण स्तुत्यसिद्धिप्रसंगात् ; लौकिकस्तुतेः क्वचिद्गुणासत्त्वेन असत्यगुणकथनरूपतासम्भवेऽपि वैदिकस्तुतेः तथात्वासम्भवात् । अन्यथा वेदस्य अप्रमाणताप्रसंगात्, अर्थवादानामपि असति प्रमाणान्तरबाधे स्वरसतः प्रातीतिकार्थेऽपि प्रामाण्यस्य, सति तु प्रमाणान्तरबाधे लक्षणादिना स्वघटकपदोपस्थापिताबाधितार्थे प्रामाण्यस्य च [1]देवताधिकरणभाष्ये श्रीभाष्यकारैः स्थापितत्वाच्च । अनया श्रुत्या विदुषो विद्यांगतया कर्मानुष्ठानावश्यकतासिद्धेः निष्प्रत्यूहत्वात् ।

तदिदं सर्वमभिसन्धायैव दर्शितश्रुतिव्याख्यानरूपायां प्रागुदाहृतश्रुतप्रकाशिकायां 'न कर्मलिप्यते' इति "इतोऽन्यथा नास्ति, इदमेव तत्त्वम्, न स्तुतिमात्रमित्यर्थः" इति वाक्यशेषो व्याख्यातो व्यासार्यैः । अत्र स्तुतिशब्दस्य गुणकथनपरतया गुणकथन-

1. 'देवताधिकरणभाष्ये' इति । एवं हि 'तदुपर्यपि बादरायणस्सम्भवात्' इति सूत्रे श्रीभाष्यम् 'न चानुष्ठेयार्थप्रकाशनस्तुतिपरत्वाभ्यां प्रतीयमानार्थान्तराविवक्षा शक्यते वक्तुम् । स्तुत्याद्युपयोगित्वात्, तेन विना स्तुत्याद्यनुपपत्तेश्च । गुणकथनेन हि स्तुतित्वम् । गुणानामसद्भावे स्तुतित्वमेव हीयेत । न चासता गुणेन कथितेन प्ररोचना जायते । अतः कर्मप्ररोचयन्तो गुणसद्भावं बोधयन्त्येवार्थवादाः । इति -'तत्र प्रमाणान्तराप्राप्तान् गुणान् स्वयमेव बोधयित्वा तैः कर्म प्ररोचयन्ति । गुणविशिष्टं वा प्रकाशयन्ति । प्राप्तांश्चानूद्य तैः प्ररोचनप्रकाशने कुर्वन्ति । विरुद्धत्वे तु तद्वाचिभिश्शब्दैः अविरुद्धान् गुणान् लक्षयित्वा कुर्वन्ति' इति च । एतेन स्तुतिपराणां अर्थवादवाक्यानामपि स्वार्थे प्रामाण्यं स्थापितं भवति ।

मात्रं न, कथितगुणोऽत्र पारमार्थिक एवेति लौकिकस्तुतिव्यावृत्तिमभिदधानैर्व्यासार्यैः सूत्रघटकस्तुतिशब्दः पारमार्थिकगुणकथनरूपस्तुतिपरो विवृतः।

### अनुमतिशब्दार्थनिष्कर्षः

न च - एवमपि 'अनुमति' शब्देन कर्मणा करणाकरणयोः कामचारस्यैव सिद्धया, विद्यांगतया तदनुष्ठानावश्यकत्वनियमो न सिध्यत्येवेति वाच्यम्। विद्यायास्तत्तदाश्रमविहितधर्मांगताया एव अभिमतत्वेन कर्मवत्सु गृहस्थेषु यज्ञादिकर्मणा विद्यांगतयानुष्ठानावश्यकत्वनियमेऽपि वैराग्येण गार्हस्थ्यं परित्यज्य आश्रमान्तरं स्वीकुर्वता तादृशकर्मानुष्ठानानावश्यकत्वेन, विद्वान् गार्हस्थ्ये स्थित्वा यावज्जीवं यज्ञादिकर्माणि विद्यांगतयानुतिष्ठन्नेव तिष्ठेत्, न तत्र किंचिद्बाधकमस्तीति अनुमतेरेवेह विवक्षिततया गृहस्थेषु यज्ञादिकर्मानुष्ठाननियमसिद्धेर्निष्प्रत्यूहत्वात्, वैराग्येणाश्रमान्तरस्वीकारे तत्त्यागस्याप्यभिमततया सामान्यतो विद्वांसं प्रति यज्ञादिकर्मानुष्ठानस्य नियमतो विधानासम्भवेन तदनुमतेरेवेह श्रुत्यर्थतया सूत्रकाराभिमतत्वात्, तावतापि यथोक्तनियमसिद्धेरव्याहतत्वात्, आश्रमान्तरनिष्ठेषु ईदृशकर्मत्यागस्य अभिमततायाः '[1]कामकारेण चैके' (ब्र.सू.3-4-15) इत्युत्तरसूत्रे स्पष्टीकरिष्यमाणत्वाच्च इह अनुमतिशब्दसद्भावमात्रेण क्षतिलेशाभावात्।

तथा च दर्शितश्रुतौ 'कुर्वन्नेवेह कर्माणि जिजीविषेत्' इत्यत्र लिङ् लकारो न विधिपरः, अपि तु कामचारपरामन्त्रणशब्दार्थानुमतिपर एवेति सूत्रकाराशयस्सिद्धः।

### श्रीवेदान्ताचार्यभाष्यानुवादेन तत्रास्वारस्यप्रदर्शनम्

यत्तु सूत्रकारेण 'नाविशेषात्' (ब्र.सू.3-4-13) इति दर्शितश्रुतेः फलसाधनभूतस्वतन्त्रकर्मविषयत्वे विशेषहेत्वभावेन विद्यांगभूतकर्मविषयत्वमेव सम्भवतीत्येक-

---

1. 'कामकारेणे'ति - 'कामकारेण चैके' इति सूत्रस्यायमर्थः 'एके शाखिनः, कामकारेण यथेष्टं विरक्तस्य ब्रह्मविदः गार्हस्थ्यत्यागं अधीयते' इति प्रकरणात् शेषपूरणम्। आत्मविद्यैव यज्ञादिकर्मणोंगमिति वादं निरसितुं इदं ब्रह्मविदा विरक्ताना गार्हस्थ्यत्यागनिदर्शनम्। एतेन 'किं प्रजया करिष्यामः येषा नोऽयमात्मा' इत्यादिश्रुत्युक्तरीत्या गार्हस्थ्य तदनुबन्धिकर्मत्यागदर्शनात् विद्याया एव प्राधान्यसिद्धिरिति न विद्या कर्मणोंगमिति भावः।

विधार्थपरत्वमुक्त्वा 'स्तुतयेऽनुमतिर्वा' (ब्र.सू.3-4-14) इत्यनन्तरसूत्रे तत्प्रकरणा-विरुद्धम् अर्थान्तरमुक्तम् इत्यभिसन्धाय, तत्संवादार्थं दर्शितद्वितीयसूत्रभाष्यमपि उदाहरद्भिः वेदान्ताचार्यैः, शारीरकमीमांसायां, सूत्रकारभाष्यकारभ्यां तत्प्रकरणानुगुण्येन दर्शितश्रुतेः उक्तद्वितीयसूत्रे अर्थान्तरपरत्वोक्तावपि तत्र तयोः नैर्भर्यं नास्ति ; अपि तु दर्शितप्रथमसूत्रोक्तार्थपरत्व एव नैर्भर्यमित्यभिसन्दधानैः, उक्तश्रुतौ प्रथमभागस्य 'विद्वान् फलसंगकर्तृत्वादित्यागयुक्तं नित्यनैमित्तिकरूपं विद्यांगभूतं कर्म यावज्जीवमनुतिष्ठेदेव; न कदाचिदपि विद्यांगं कर्म परित्यजेदित्यर्थः' इति नियमतः कर्मानुष्ठानविधिपरतामेव व्याख्याय, द्वितीयभागस्य त्वयि ब्रह्मविद्याधिकारिणि, एवमेवानुष्ठेयार्थः; इतोऽन्यथा नास्तीति व्यतिरेकेणोक्तं दृढीकारार्थम् ; ननु ब्रह्मविदोऽपि कर्मानुष्ठानभावाद्बन्धस्स्यात् इत्यत्राह - ' न कर्म लिप्यते नरे' इति । प्रस्तुतब्रह्मविदि नरे 'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्' (ब्र.सू.4-1-16) इति विनियोगपृथक्त्वन्यायेन 'कर्म न स्वर्गादिफलहेतुर्भवति' इत्यर्थपरतामेव व्याकुर्वद्भिः वाक्यशेषस्य सूत्रकारभाष्यकारोक्तं विद्यास्तुतये विदुषः सर्वदा कर्मानुष्ठनानुमतिपरत्वं उपेक्षितम् ।

तदयुक्तम्, दर्शितसूत्रयोः द्वयोरपि एकविधार्थस्थापनपरताया एव, दर्शनेन परस्परविलक्षणपक्षद्वयपरत्वाभावात्; तथा सति वाकारस्य पक्षान्तरपरत्वसम्भवेन तदुपेक्ष्य 'वाशब्दोऽवधारणार्थः' इति भाष्यकारैः अवधारणपरतया व्याख्याना-नावश्यकत्वात्, सूत्रकारमहर्षिकण्ठोक्तश्रुत्यर्थस्य अर्वाचीनैः परित्यागायोगात्, तदपरित्यागेऽपिअनिष्टाभावस्यप्रागुपदर्शितत्वात्;वस्तुतोगार्हस्थ्यादाश्रमान्तरनिष्ठानां विदुषामुक्तकर्मत्यागस्याभिमततायाः 'कामकारेण चैके' (ब्र.सू.3-4-15) इत्युत्तरसूत्रेण प्रतिपन्नतया, सामान्यतो विद्वांसं प्रति नियमत उक्तकर्मानुष्ठाने विधेरसम्भवेन अनुमतेरेव दर्शितश्रुतिविवक्षितत्वावश्यकत्वाच्च ।

दर्शितश्रुतेर्दर्शितरीत्या कर्मानुष्ठानविधिपरत्वासम्भवाभिप्रायेणैव च, वाकारस्य अवधारणार्थकत्वमाश्रित्य यावज्जीवं कर्मानुष्ठानानुमतिरेव दर्शितश्रुतिविवक्षिता, न तु

तद्विधिरिति भाष्यकारैरपि व्याख्यातम् । एतदभिप्रायेणैव च श्रुतप्रकाशिकायां व्यासार्यैरपि दर्शितश्रुतौ 'नान्यथेतोऽस्ति' इत्यस्य पूर्वभागोक्तकर्मानुष्ठानान्यथाभावप्रतिषेधपरतामुपेक्ष्य वाक्यशेषोक्तकर्मलेपाभावान्यथाभावप्रतिषेधपरतया व्याख्यानं कृतम् ।

'एवमर्थस्वाभाव्येन चोद्यं परिहृत्य 'कुर्वन्नेवेह कर्माणि' इत्यस्य वाक्यस्यार्थमाह' इति द्वितीयसूत्रावतारिकाभाष्यपर्यालोचने, दर्शितश्रुतौ कर्मपदार्थस्य विद्यांगकर्मसाधारणरूपत्वलक्षणस्वभावज्ञापनेन चोद्यं परिहृत्य वाक्यार्थोऽपि तदनुगुण एव वर्तत इति तं दर्शयति सूत्रकार इत्याशयेनैव द्वितीयसूत्रमवातारयन्, भाष्यकृत इत्यवगमेन द्वयोरपि सूत्रयोः दर्शितश्रुतेः एकविधवाक्यार्थप्रतिपादनपरताया एव प्रतीयमानतया, 'अर्थान्तरं च प्रकरणाविरुद्धमनन्तरसूत्रोक्तम्' इत्यभिधानमपि असंगतमेव ।

द्वितीयसूत्रस्य दर्शितश्रुतेः अर्थान्तरपरतया व्याख्यानपरत्वे, श्रुतिमर्थान्तरपरतयाऽपि व्याकरोति सूत्रकार इत्येव द्वितीयसूत्रमवातारयिष्यन् भाष्यकृतः, व्याख्यास्यंश्च वाकारं पक्षान्तरपरतयैव । न तु अवधारणपरतयेति तथाभिधानम् असम्बद्धमेव ।

न च - आश्रमान्तरनिष्ठस्य अग्निहोत्रदर्शपूर्णमासादिकर्मसु अनधिकारेण तादृशकर्मानुष्ठानासम्भवेऽपि, विद्यानुग्राहकतया स्वाश्रमान्तरंगधर्मरूपकर्मणाम् अनुष्ठानसम्भवेन दर्शितश्रुतेः सामान्यतो विद्वांसं प्रति, यावज्जीवं नियमतः कर्मानुष्ठानविधिपरत्वं सम्भवत्येवेति कुतः अनुमतिपरत्वं वक्तव्यमिति वाच्यम् ; पूर्वं कर्मकाण्ड आश्रमान्तरकथाया एवाभावेन, तत्र गृहस्थाधिकारिकयज्ञादिकर्मणामेव, अभिधानात् तेषामेवेह कर्मशब्देन परामर्शसम्भवेन तदनुष्ठाननिर्बन्धस्य सामान्यतो विद्वांसं प्रति विधातुम् अशक्यतया अत्र लिङोऽनुमतिलक्षणामन्त्रणपरताया एव सम्भवात्।

इत्थमिह पक्षान्तरपरत्वासम्भवं [1]'विधिर्वा धारणवत्' (ब्र.सू.3-4-20) इत्यादिष्विव अवधारणपरतयाऽपि वाकारप्रयोगसम्भवञ्च आलोच्यैव इह वाकारम्

---

1. 'विधिर्वा धारणवत्' इति । अत्र सूत्रे वा इत्यव्ययं न विकल्पार्थकम् । किन्तु विधिरेव इति अवधारणार्थकम् इति श्रीभाष्ये कृतं विवरणं द्रष्टव्यम् ।

अवधारणपरतया व्याचख्युः भाष्यकृतः । तस्मात् यथोक्तलक्षणं वेदान्ताचार्य-तदनुयायिव्याख्यानमपि सूत्रकारभाष्यकारश्रुतप्रकाशिकाकाराशयविरुद्धम् अनुपपन्नं च इत्यनुपादेयमेव ।

### लिप्यते इति कर्मकर्तरि प्रयोगोपपत्तिः

ननु 'न कर्म लिप्यते नरे' इति कथमसौ प्रयोगः ? लिम्पतेस्तौदादिकस्य सकर्मकत्वेनाकर्मकत्वासम्भवादिति चेन्न, सकर्मकाणामपि धातूनां कर्म-कर्तर्यकर्मकतया प्रयोगसम्भवेन लिम्पतेरिह कर्मकर्तरि प्रयोगस्य विवक्षिततया दोषाभावात् । पचिभिद्यादीनां सकर्मकाणामपि कर्मण एव कर्तृत्वविवक्षायाम्, 'ओदनः पच्यते', 'काष्ठं भिद्यते' इत्यादिरकर्मकः प्रयोगो हि दृश्यते ।

'कर्मवत्कर्मणा तुल्यक्रियः' (पा.सू.3-1-87) इत्यनुशासनेन कर्तृत्वेन विवक्षितस्यापि कर्मणः कर्मवद्भावे, 'सार्वधातुके यक्' (पा.सू.3-1-67) इत्यनुशासनेन 'धातोः यक्प्रत्ययस्स्याद् भावकर्मवाचिनि सार्वधातुके परे,' इत्यर्थकेन यक्प्रत्यये च, लिम्पतेर्लिप्यत इति कर्मकर्तरि प्रयोगः अकर्मकस्सम्भवति ।

न च यद्धातूपस्थाप्यक्रियायां यस्य क्वचित्कर्मतयान्वयो दृश्यते ; तद्धातूपस्थाप्यक्रियायां तस्यैव क्वचित्कर्तृतया विवक्षायां हि तद्धातोः कर्मकर्तरि प्रयोगो नाम ; लिम्पतिक्रियायां, सुकृतरूपस्य दुष्कृतरूपस्य वा कर्मणः क्वचिदपि कर्मतयाऽन्वयादर्शनात्, प्रत्युत 'कर्मणा लिप्यते पुरुषः' इत्यादौ कर्तृतयैवान्वयदर्शनाच्च, कथं तस्य कर्तृताविवक्षायां लिम्पतेः कर्मकर्तरि प्रयोगः सम्भवतीति - वाच्यम् ; महापातकिनः स्वसंसर्गिषु स्वीयं दुष्कृतं लिम्पन्ति, विद्वांसो मुच्यमानाः स्वीयं सुकृतं सुहृत्सु, दुष्कृतं द्विषत्सु च लिम्पन्तीत्यादिप्रयोगेषु लिम्पतिक्रियायां कर्मशब्दवाच्यस्य कर्मतयान्वयदर्शनेनेह तस्य कर्तृताविवक्षायां कर्मकर्तरि प्रयोगसम्भवे क्षतिविरहात् ।

संश्लोषानुकूलव्यापारो हि लिम्पत्यर्थः ; संश्लेषश्च फलोपधायकः सम्बन्धविशेष इति, प्रकृते 'न कर्म लिप्यते नरे त्वयि' इत्यनेन फलाभिसन्धिरहिते त्वयि दर्शितत्रिविधत्यागपूर्वकमनुष्ठीयमानं किमपि कर्म मोक्षविरोधिफलोपधायक-स्वसम्बन्धविशेषानुकूलव्यापाररूपलेपवत् न भवतीत्यर्थस्सिद्ध्यति ।

नरशब्दस्य व्युत्पत्तिद्वयप्रदर्शनम्

पूर्वमन्त्रोक्तत्यागानुवादकलेपाभावहेतुगर्भविशेषणत्वाभिप्रायेण च नरशब्दः 'न रमते' इति व्युत्पत्त्या व्याख्यातश्श्रुतप्रकाशिकायां व्यासार्यैः । 'अन्येष्वपि दृश्यते' (पा.सू.3-2-101) इत्यनुशासनेन रमेर्डप्रत्यये 'टेः' (पा.सू.6-4-143) इत्यनुशासनेन टिलोपे च, र इति सिद्ध्यति; तस्य नशब्देन 'सुप्सुपा' (पा.सू.2-1-4) इति समासे, नर इति रूपं सिद्ध्यतीति बोध्यम् । यद्यपि, 'रिङ्क्षये' इति धात्वन्तरेण 'नर' शब्दस्य क्वचिन्निष्पत्तिः कृता दृश्यते ; तथापि तद्वदेव रमिधातुनापि निष्पत्तिसम्भवात् प्रकृतोपयोगानुरोधेन इह एतद्धातुनिष्पन्न एव नरशब्दो विवक्षित इति व्यासार्याशयः ।

तथा च प्रथममन्त्रप्रक्रान्ताया उपरिष्टाद्विशदं निरूपयिष्यमाणायाश्च परविद्यायाः अंगतया अनुष्ठेयः प्रथममन्त्रोक्तत्यागलक्षणानुसन्धानविशेषांगकः कर्मयोगः अनेन मन्त्रेण अभिहित इति सिद्धम् ।।

## आनन्दभाष्यम्

ब्रह्मविद्यांगभूतं कर्म मुमुक्षूणामपि यावज्जीवं कर्तव्यमेवेति उपदिशति कुर्वन्नेवेति ।

**शतं समाः** - शतसंवत्सरान् यावत्, उपलक्षणमेतत् , यावज्जीवमित्यस्य, मनुष्याणां शतायुष्ट्वश्रवणात्तु एवमुक्तम् शतं समा इति । **कर्माणि** - नित्यनैमित्तिकानि, 'अहरहः सन्ध्यामुपासीत', 'राहूपरागे स्नायात्' इत्यादि विधिवाक्यविहितानि सन्ध्योपासनादीनि **कुर्वन्** - आचरन्नेव, **इह** - लोके, **जिजीविषेत्** - जीवितुमिच्छेत्, विद्यापूर्तिपर्यन्तं ब्रह्मविदोऽपि जीवनेच्छासम्भवात् । विद्यासम्पत्तये फलासक्तिकर्तृत्वाभिमानराहित्येन नित्यनैमित्तिककर्माणि मुमुक्षुणा यावज्जीवम् अनुष्ठयान्येव ; विद्यांगकर्मणः त्यागस्य विद्यासिद्धिविरोधित्वात् इति भावः।

**त्वयि** - ईश्वरपारतन्त्र्यज्ञानवत्तया ईश्वराज्ञापालनकृति त्वयि, **एवम्** - यावज्जीवं कर्मानुष्ठानमेव युक्तम्, **इतः** - फलाभिसन्धिरहितविद्यांगकर्मानुष्ठनात् **अन्यथा** - प्रकारान्तरम् **नास्ति** - भगवदाज्ञापालनमेव भगवत्तोषकारणं तत्परतन्त्राणाम् नान्यत् किमपि कारणम् । अतः तदाज्ञारूपकर्म यावज्जीवम् अनुष्ठेयमेव इति भावः ।

निष्कामकर्मणोऽलेपकत्वम्

कर्मानुष्ठानेन तत्फलबन्धः स्यादिति भयं न कार्यमित्याह - '**न कर्म लिप्यते नरे**' इति उक्तविद्याविरूद्धकर्मफलेषु 'न रमते' इति नरः, तस्मिन्नरे, विद्यांगतया क्रियमाणं निष्कामं **कर्म न लिप्यते** - न बन्धाय भवति, रागोपहितं हि यागादिकर्म बन्धहेतुर्भयति। परमात्मव्यतिरिक्तसर्वविषयविरक्तस्य स्वरूपतः कर्म बन्धहेतुः न भवतीत्यर्थः।

## सुबोधिनी

मुमुक्षोरप्यवर्जनीयं विद्यागं कर्मेत्याह - कुर्वन्नेव इति ।

**'शतं समाः'** इति प्रायिकं वचनम्, यावज्जीवम् इत्यर्थः । मुमुक्षुरपि विद्यायामधिकृतो विद्यानिष्पत्तये कर्माणि - फलाद्यभिसन्धिरहितानि यावज्जीवं **कुर्वन्नेव, इह** - लोके, **जिजीविषेत्** । यद्यपि जिजीविषेत् इति विधिः श्रूयते, तथाऽपि 'स्नात्वा भुंजीत' इत्यत्र स्नान इव कर्मानुष्ठाने विधिः योजनीयः ।

कर्मणः ज्ञाननिष्ठाप्रयोजकत्वम्

मुमुक्षोः मम किं कर्मणा ? मैवम् । **त्वय्येवम्** - अनिष्पन्नज्ञाननिष्ठे त्वयि विषये उक्तकर्मानुष्ठानमेयोचितम् । **इतः** - उक्तप्रकारात्, **अन्यथा** - प्रकारान्तरं नास्ति । मुमुक्षामात्रेण न सहसा ज्ञाननिष्ठासिद्धिः, तत् 'कर्मण्येवाधिकारस्ते' (भ.गी.2-47) 'यस्त्यात्मरतिरेव स्यादात्मतृप्तश्च मानवः --- तस्य कार्यं न विद्यते' (भ.गी.3-17) त्यादृशानामिति भावः ?

ननु कर्मफलेन बन्ध एव भवेत् ? मैवम् । **न कर्म लिप्यते नरे** - नरेप्रकरणान्मुमुक्षौ, **कर्म** - उक्तं निष्कामं कर्म, **न लिप्यते** - न बन्धाय भवति ।

कर्मणः स्वरूपतो न बन्धकत्वम्

यस्तुतः कर्मस्वरूपपर्यालोचनायां यत्किंचिदपि यागादिकं कर्म सर्वतनोः परमात्मन आराधनमेय, बुभुक्षाव्याकुलान्तकरणा न जानन्तीत्येतावता न वस्तुस्वरूपं व्याहन्येत,

तत्स्वरूपतः कर्म कस्यापि न बन्धाय, बुभुक्षोः रागवशात्तु वन्धः, तदुपाधिकं तु बन्धकत्वं कर्मणः, न स्वरूपत इत्यभिप्रेत्य न कर्म लिप्यते नर इति सामान्यनिर्देशोऽपि सुसंगतः ।

**परमतखण्डनम्**

धीकर्मणोर्विरोधं शैलवदविकम्प्यमाकलय्यात्र ।
अधिकृत्यानात्मविदं विहितं कर्मेति केचिदाचख्युः ।। 1।।
आत्मविदामनुरूपे सन्न्यासे किं न कर्मलेशो वा ?
धीकर्मणोर्विरोधः कथमविचाल्यस्त एव जानन्ति ।।2।।
भिक्षाटनादिनियमं कर्म कथं ते न जानन्ति ।
यदि मन्यते विरोधो नानेनान्यैर्विरोधः कः ?।।3।।
अपरिच्छिन्नविशुद्धब्रह्मात्मैकत्वविषयविज्ञाने ।
ब्राह्मण्याद्याभिमानाद्यदग्निहोत्रादि तद्विरोधोऽयम् ।।4।।
इति यदि विभावितं स्यात्कथमिह भिक्षाटनादिनियमो वा ।
यदि विदुषः सन्न्यासान्न मन्यते विधिनिषेधवश्यत्वम् ।।5।।
ननु विधिनिषेधभाक्को भुंजीथा मा गृधश्चेति ।
आत्मैकत्वज्ञाने न चोपदेश्यो न चोपदेष्टा च ।।6।।
यदि नामानिष्पन्नज्ञानिनि सन्न्यासविधिरेषः ।।7।।
व्यपगतसमस्तभावं नरो यदाऽऽत्मन्यनारतं रमते ।
प्रच्यवति कर्म सर्वं प्रसुप्तहस्तस्थतालवृन्त इव ।।8।।
यावन्नैवम्भूतस्तावत्कर्मानुवर्तते नियतम् ।
उपदेशादिकमखिलं स्यादिममधिकृत्य, नैव तं [1]सिद्धम् ।।9।।
तदिहाभिमतः को वा विरोधो ज्ञानकर्मणोः ।
येनाधिकारिभेदेन व्याख्याक्लेशोऽपि सह्यते ।। 10 ।।
अथवाऽयं विवादस्तु न पृथक्पदमर्हति ।
मुक्तिसाधनविज्ञानविवादमनुगच्छति ।। 11 ।।
तद्यथा स्वस्वसिद्धान्तं व्याचक्षाणो न दुष्यति ।
परं पदानां नयनं क्लिष्टं चेद्दूषणं तदा ।। 12 ।।

1. सिद्धम् - सिद्धपुरुषमधिकृत्येत्यर्थः ।

## तृतीयो मन्त्रः

**असुर्या नाम ते लोका अन्धेन तमसावृताः ।**

**ताँस्ते प्रेत्याभिगच्छन्ति ये के चाऽऽत्महनो जनाः ।। 3 ।।**

## प्रतिपदार्थदीपिका

### अवतारिका

ये केचन आसुरप्रकृतयः शास्त्रविधिम् उत्सृज्य अन्यथा कर्म कुर्वन्ति, ते निरयगामिनो भवन्ति इत्युपदिशति -

### आत्मघातिनां नरकप्राप्तिरूपं फलम्

**असुर्याः** - आसुरस्वभावाः, **नाम** इति प्रसिद्धौ, **अन्धेन तमसावृताः**-अन्धकारेण व्याप्ताः, **ये के च** - देवजातीयाः मनुष्यजातीया ब्राह्मणादयो वा **आत्महनः**-आत्मघातिनः, ब्रह्मज्ञानशून्याः केवलकाम्यकर्मनिष्ठाः, **ते** - सर्वे, **प्रेत्य**-तदातनदेहात् उत्क्रम्य, **तान् अभिगच्छन्ति** - पृथिव्यन्तरिक्षस्वर्गरौरवादिसंज्ञितान् नारंकलोकान् अभिगच्छन्तीत्यर्थः ।

[1]'असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्' (तै.आन. 6.30) इति श्रुत्या असत्प्रायाः भवन्तीति यावत् ।

## वेदान्ताचार्यभाष्यम्

### आत्मज्ञानविधुराणां प्राप्यं स्थानम्

वक्ष्यमाणविद्यायां शीघ्रं प्रवृत्त्यर्थम् उक्तप्रकारब्रह्मवेदनविधुरतया

1. 'असन्नेयेति' - एतच्छ्रुतियाक्ययियरणपरत्येन आनन्दमयाधिकरणश्रीभाष्ये भगवद्रामानुजार्यसूक्तिरियम् यथा 'ब्रह्मज्ञानाज्ञानाभ्यां आत्मनः सदभायासदभायौ दर्शयति' इति। तथा च ब्रह्मास्तित्यज्ञानात् तन्नास्तित्यज्ञानाच्च, सन् भयति, असन् भयति, इति नार्थः । किन्तु स्यस्मिन् ब्रह्मज्ञानमस्ति चेत् सन् भयति - तन्नास्ति चेत् असन् भयति - इत्येव अर्थः इति भाष्यकाराशयः । तदा -ब्रह्म येद इत्येतत् असच्चेत्, ब्रह्म येद इत्येतत् अस्ति चेत्, इति श्रुतिपदानां अन्ययेन अर्थो याच्यः । 'असन्नेय' इत्यत्र एयकारः नायधारणार्थः । किन्तु 'यिष्णुरेय भूत्या' इत्यादायिय इव शब्दार्थः । असत्प्रायो भयतीति सारम् ।

वित्तेषणायोगाच्च [1]अन्यथा भवद्भिः ज्ञानानुष्ठानैः आत्मघातिनां निरयपातः अवश्यम्भावीत्याह - असुर्याः —— जनाः इति ।

असुर्याः - 'असुरस्य स्वम्' (पा.सू.4-4-123) इति यत्, आसुरप्रकृतीनाम् अनुभाव्याः इत्यर्थः । नाम इति प्रसिद्धौ । ते - नरकसंज्ञिता भीषणतमाः लोकाः सन्ति। पुनस्तान् विशिनष्टि - **अन्धेन तमसाऽऽवृताः**- गाढेन अन्धकारेण व्याप्ताः । तान्- आलोकप्रसंगरहितान् **ते** - स्वात्मघातिनः **प्रेत्य** - तदातनदेहादुत्क्रम्य **अभिगच्छन्ति**- कात्स्न्र्येन निरन्तरं प्राप्नुवन्ति, **ये के च** - देवजातीया मनुष्यजातीया वा [1]तथा ब्राह्मणक्षत्रियादयो वा **आत्महनः** - 'असन्नेव स भवति', असद्ब्रह्मेति वेद चेत्' (तै.आ.30) इत्याम्नाताम् असत्कल्पतां स्वात्मानं नयन्तः । [2]देहपातमुखेन पातक- वर्गोपलक्षणम् इदम् । **जनाः** - जनिमन्तः संसरन्त इत्यर्थः ।।

## ईशावास्यप्रकाशिका

एवं मन्त्रद्वयेन तत्त्वत्रयस्वरूपं विद्यांगकर्मानुष्ठानस्वरूपं च यथावत् उपदिष्टम् । इदानीं ये केचन आसुरप्रकृतयः यथोपदेशं तत्त्वत्रयम् अविदित्वा अन्यथा जानन्ति, कामक्रोधलोभाद्यन्विताः सन्तः शास्त्रविधिम् उत्सृज्य यज्ञादिकर्म कुर्वन्ति, निषिद्धानि च आचरन्ति, ते सर्वे स्वात्मघातिनः । तेषां निरयपातः अवश्यम्भावीत्युपदिशति आचार्यः - **असुर्याः** इति ।

असुराणां स्वभूता असुर्याः, असुरस्वभावभूता वा, आसुरप्रकृतीनामेव अनु- भाव्याः, अन्येषां दैवप्रकृतीनाम् अनुभवितुम् अशक्याः इत्यर्थः । अतिभीषणा इति यावत् । नाम इति प्रसिद्धौ । अतिभीषणाः नरकसंज्ञिताः ते लोकाः सन्तीति

---

1. 'अन्यथाभवद्भिः ज्ञानानुष्ठानैः' इति । तेषां अन्यथाभावो यथा ज्ञानस्य अन्यथाभावः 'अनात्मन्यात्मबुद्धिः अस्वे स्वमिति बुद्धिः' इत्येवमादिरूपः । अथ अनुष्ठानेऽन्यथाभावः - शास्त्रविधिमुत्सृज्य यज्ञाद्याचरणम् । एवमन्यत् ।
2. 'देहपातमुखेन' इति । पत-धातोः गत्यर्थकतया इह देहपातो नाम देहप्राप्तिः । सा हि अज्ञानायत्तकर्मकृता । तन्मुखेन यः पातकवर्गः विविधः, तस्यापि इदं आत्महननं उपलक्षणम् -द्योतकमित्यर्थः । इह देहघातमुखेन इत्यपि पाठान्तरं केचिदाद्रियन्ते ।

---

1.तत्रापि - ग.

सर्वशास्त्रप्रसिद्धम् इति भावः । पुनस्तान् विशिनष्टि **अन्धेन तमसाऽऽवृता** इति । **अन्धेन** - अतिगाढेन, **तमसा** - अन्धकारेण आवृताः - व्याप्ताः तान्- अतिभीषणान् आलोकप्रसंगरहितांश्च लोकान् इति भावः । **ये के च** - देवजातीयाः मनुष्यजातीया वा, तत्रापि ब्राह्मणा वा क्षत्रियादयो वा, **आत्महनः** - 'असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्' (तै.आ.30) इत्याम्नाताम् असत्कल्पतां स्वात्मानं नयन्तः, ब्रह्मज्ञानहीनाः काम्यकर्मादिनिष्ठाः इत्यर्थः। तथा च बृहदारण्यके -

'अनन्दा नाम ते लोका अन्धेन तमसाऽऽवृताः ।

तांस्ते प्रेत्याभिगच्छन्ति अविद्वांसोऽबुधो जनाः'।। इति ।।(बृ.उ.6-4-11)

देहपातमुखेन पातकवर्गस्य च उपलक्षणमिदम् । पातकिनश्च ये **जनाः** - जनिमन्तः - संसरन्त इत्यर्थः । स्वात्मघातिनस्ते सर्वे **प्रेत्य** तदातनदेहादुत्क्रम्य **अभिगच्छन्ति**- अभितो गच्छन्ति, सर्वान् पृथिव्यन्तरिक्षस्वर्गरौरवादिसंज्ञितानपि नारकलोकान्निरन्तरं गच्छन्ति इत्यर्थः।।

## श्रीरंगचार्यभाष्यम्

### अवतारिका

प्रथमद्वितीयसूत्रप्रक्रान्तपरविद्यातदंगकर्मानुष्ठाननिष्ठाविरहिणाम् अविदुषां तादृशनिष्ठायां द्रुतप्रवृत्तये तदभावे महानर्थप्रसंगः प्रदर्श्यते - **असुर्या नाम** इत्यादिना तृतीयेन मन्त्रेण ।

### असुर्यशब्दे व्युत्पत्तिद्वयनिरूपणम्

अस्य पदविवरणम् - **अन्धेन** - अन्धयतीत्यन्धम् तेन अतिगाढेन, सूर्यालोकप्रसंगविरहिणा इति यावत् । **तमसा** - अन्धकारेण वृताः - व्याप्ताः **असुर्या नाम** - असुर्या इति संज्ञया प्रसिद्धाः, नामेति प्रसिद्धौ । 'उगवादिभ्यो यत्' (पा.सू.5-1-1) इत्यनुशासनेन उवर्णान्तात् गवादिभ्यश्च यत्स्यात् प्राक्क्रीतीयेष्वर्थेषु इत्यर्थकेन, 'तस्मै हितम्' (पा.सू.5-1-5) इत्यनुशासनसिद्धे अर्थे, असुरशब्दस्य गवादिगणघटकतया यत्प्रत्यये, असुरेभ्यो हिताः असुर्याः इति व्युत्पत्त्या 'असुरस्य स्वम्' (पा.सू.4-4-123)

इत्यनुशासनेन असुरशब्दात् 'असुरस्य स्वम्' इत्यर्थे यत्प्रत्ययो भवतीत्यर्थकेन यत्प्रत्यये, असुराणांस्वभूताःअसुर्याइतिव्युत्पत्त्यावाअसुरहितत्वेनअसुरस्वामिकत्वेन वा प्रवृत्तिनिमित्तेन असुर्यसंज्ञया प्रसिद्धाः इत्यर्थः । अनेन विशेषणद्वयेन असुरेतरेषा अतिदुःखदा इति सूचितम् । ते - तत्र तत्र श्रुतिषु प्रसिद्धाः । श्रूयते हि बृहदारण्यकोपनिषदि षष्ठाध्यायचतुर्थब्राह्मणे -

अनन्दा नाम ते लोका अन्धेन तमसाऽऽवृताः ।
तांस्ते प्रेत्याऽभिगच्छन्त्यविद्वांसोऽबुधो जनाः ।। (बृ.उ.6-4-11)

कठोपनिषदि प्रथमवल्ल्यामपि ---

पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः ।
अनन्दा नाम ते लोकास्तान् स गच्छति ता ददत् ।। (क.उ.1-3)

इति च । अतश्च असुर्यसंज्ञितानामेव लोकानाम् 'अनन्दा' इत्यपि संज्ञान्तरमस्तीति अवगम्यते ; 'अन्धेन तमसाऽऽवृताः' इति स्वरूपस्य द्वयोः तुल्यतादर्शनात् **लोकाः** - ईदृशा लोकाः केचन सन्ति । **तान् लोकान्** **ते** - प्राणिनः **प्रेत्य** - मृत्वा, **अभिगच्छन्ति** - अभिमुखा गच्छन्ति, कदाचित् तद्धेतुदुष्कृतप्रसंगवशात् तत्प्राप्त्युन्मुखास्सन्तः प्राप्नुवन्ति । 'अपि गच्छन्ति' इति माध्यन्दिनपाठेऽपि अयमेवार्थो बोध्यः। अपिधानम् इत्यादाविव अत्रापि अपीत्यस्य उपसर्गत्वात् उपसर्गाणाम् अनेकार्थत्वसम्भवात् पाठद्वयैककण्ठ्यानुरोधाच्च । के ते प्राणिन इत्यात्राह - **ये के च** इति । **येकेच** - ये केचित् ।

**आत्महनः** - आत्मानं घ्नन्ति नाशयन्तीति आत्महनः, पूर्वोक्तलक्षणस्वस्वरूपपरस्वरूपयाथात्म्याज्ञानविपरीतज्ञानाभ्याम् आत्मानम् 'असन्नेव स भवति। असद्-ब्रह्मेति वेद चेत्' (तै.आ.-30) इत्युक्तमसत्कल्पत्वलक्षणं स्वरूपनाशं प्रापयन्तः । प्रागुदाहृतश्रुत्यन्तरैककण्ठ्यात् प्रकरणानुरोधाच्च अज्ञत्वलक्षणमात्महन्तृत्वमेवेह विवक्षितम् । **जनाः**-पुनःपुनर्जननधर्माणस्संसरन्तः सन्ति, ते तानभिगच्छन्तीत्यन्वयः- इति ।

स्वस्वरूपपरस्वरूपयाथात्म्याज्ञानविपरीतज्ञानशालिनो जनास्तदधीनकादाचित्कप्रबलदुष्कृतपरिपाकवशात्कदाचिद्यथोक्तलक्षणान्महादुःखदान् लोकानपि अवश्यं प्राप्नुयुरेव ; अतश्शीघ्रमेव यथोक्तलक्षणनिष्ठां प्राप्य तादृश महासंकटप्राप्तेर्मोचनीय आत्मा विवेकिभिरिति भावः ।

### शांकरयोजनानिरासः

अत्र स्वमतसिद्धाद्वैतज्ञानविधुराणां सर्वेषामसुरशब्दविवक्षितत्वम्, असुर्यलोकशब्दस्य महाक्लिष्टकल्पनया संसारमण्डलान्तर्जन्ममात्रपरतां, नामशब्दस्य निरर्थकतां चाश्रित्य शंकरकृतं व्याख्यानमसमंजसम्; 'असुर्या नाम ते लोकाः' इति श्रुत्यन्तरप्रसिद्धतयासुर्यसंज्ञतया च कांश्चिल्लोकान् पृथग्विभज्य निर्दिश्य, तेषाम् 'अन्धेन तमसावृताः' इत्यतिसंकटरूपतां च प्रदश्य तत्प्राप्तेः फलत्वेन प्रतिपाद्यमानताया वचोभंग्यैवाऽऽपण्डितपामरमतिस्फुटत्वेन अकारणमेव तत्प्रहाणस्य अयुक्तत्वात् ।

इत्थमेव विलक्षणज्ञाननिष्ठायाः असम्पादने महानर्थप्राप्तिस्सामवेदीयतलवकारोपनिषदि द्वितीयखण्डेऽप्युक्ता, 'इह चेदवेदीथ सत्यमस्ति, न चेदिहावेदीन्महती विनष्टिः' (के.उ.2-5) इति ।।

विपरीतज्ञानात्सर्वपापप्रसंगश्च -

'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपाद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा' ।। ( भा.उद्यो.41-34)

इत्यादिभिरप्युच्यते ।

तथा च यथोक्तलक्षणनिष्ठाविरहे महानर्थप्रसंगावर्जनीयताप्रतिपादनमुखेन सा शीघ्रं सम्पादनीयेत्येवास्य मन्त्रस्य निर्गलितोऽर्थ इति बोध्यम् ।।

## आनन्दभाष्यम्

विद्यायामविलम्बेन प्रवृत्तिसाधनाय अविदुषाम् अनर्थमुपदिशति - असुर्या इत्यादिना असुराणां तमःस्वभावानां जीवानां इमे, **असुर्याः** - आसुरप्रकृतिकजीवानां भाव्याः, रौरवादिसंज्ञाः लोकाः भोगभूमयः प्रसिद्धाः ; शास्त्रेषु नामेत्यस्य प्रसिद्धिपदार्थत्वात् ।

कीदृशास्ते इत्यपेक्षायामाह - **अन्धेन तमसावृता** इति । **अन्धेन** - अतिगाढेन **तमसा** अन्धकारेण **आवृताः** - आविष्टाः, यत्र आलोकः कदापि न प्रसज्यते तादृशाः इत्यर्थः । **तान्** - लोकान् रौरवादिसंज्ञितान् निरयान्, **ते प्रेत्य** - मृत्वा **अभिगच्छन्ति** - अभितः प्राप्नुवन्ति ।

ते के इत्याकाङ्क्षायामाह - **'ये के चात्महनो जनाः'** इति। आत्मानं घ्नन्ति, ब्रह्मज्ञानवैधुर्येण हिंसन्ति संसारमहागर्ते पातयन्ति ते आत्महनः 'असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्' (तै.आ.30) इति श्रुत्या ब्रह्मज्ञानरहितानामेव आत्मघातित्व-प्रतीतेः स्वभूताः ये के च - ब्राह्मणः क्षत्रियादयो वा देवयोनयो वा जनाः- जनिमन्तः सन्ति ते सर्वे निरयपातिनो भवन्ति।

अतः (नित्यनैमित्तिक) कर्मव्यतिरिक्तेषु काम्यनिषिद्धकर्मसु वैमुख्यमासाद्य ब्रह्मज्ञानाय शीघ्रं प्रयतनीयमिति भावः ।।

## सुबोधिनी

विद्यायामविलम्बेन प्रवृत्तये अविदुषामनर्थमाह - **असुर्या नाम** इति। असुरा-स्तमःप्रकृतयस्तेषां उपभोगार्थाः **असुर्याः**। **नाम** - इति प्रसिद्धौ, अतिभीषणत्वेन प्रसिद्धाः। **अन्धेन तमसावृताः** - गाढान्धकाराविष्टाः लोकाः; सन्तीति शेषः। **ते प्रेत्य** - मृत्वा, **तान्** - लोकान्, **अभिगच्छन्ति** - प्राप्नुवन्ति। के ते? **ये के चात्महनः**, आत्महनः ब्रह्मज्ञानविधुराः। ब्रह्मज्ञान विधुरा हि आत्मान-मवसादयन्ति संसारकान्तारे, ततो ब्रह्मज्ञानविधुराः आत्महन उच्यन्ते। असन्नेव स भवति, असद्ब्रह्मेति वेद चेत्' (तै.आ.30) इति श्रुतेश्च।

ननु ब्रह्मज्ञानवैधुर्ये माभूत् अपवर्गः; स्यात्तु सुकृतसाध्यो लोकः, तत्कथमुच्यते नरकान्प्राप्नुवन्तीति तत्राह **जनाः** इति। आत्महनो हि जनाः जनिमन्तः, यदाकदाचिदेषणावेगेन ज्ञानानुष्ठानवैकल्यसम्भवेन नरकानभिगच्छन्ति इति यावत्। यथा मन्दाकिन्या अपि वियत्तलात्प्रच्युताया निम्नगास्वाभाव्यात् अवर्जनीयः क्षीरसागरसमावेशः क्रमशः, तद्वदेव आत्मज्ञानविधुराणाम् एषणावेग-योगेन ज्ञानानुष्ठानादिवैपरीत्यसम्भवेन अवर्जनीयो निरयपात इति भावः।

यद्वा लोक्यन्ते अनुभूयन्ते इति **लोकाः** - कर्मफलरूपा योनयः, ते च **असुर्याः** - आत्मज्ञानविधुराः एवासुराः, तेषामुपभोग्याः। यस्मिंस्तमसि नात्माऽपि लक्ष्यते तदन्धं तमः - तच्च आत्मस्वरूपाज्ञानं 'देवोऽहम्', 'मनुष्योऽहम्' इति विपरीतज्ञानम्, तेनाविष्टाश्च तादृशानि नानाविधजन्मानि अभिगच्छन्तीति।

चतुर्थ मन्त्रः

**अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन् पूर्वमर्षत् ।**
**तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥4॥**

## प्रतिपदार्थदीपिका

सर्वावासत्वेन प्रस्तुतस्य परब्रह्मणः अनन्तविचित्रशक्तियोगमुपदिशत्याचार्यः **अनेजदेकम् इति ।**

**अनेजत्** - 'एजृ कम्पने' (पा.धा.234) अकम्पमानम्; **एकम्**-समानाधिकद्वितीयवस्तुरहितम्, **मनसो जवीयः** - वेगतो मनसोऽपि, जवीयः-वेगवत्तरम्, **एनत्** - एतत्, प्रस्तुतं परब्रह्म, **देवाः** - **नाप्नुवन्** - ब्रह्मरुद्रादयः न लेभिरे इति भावः । यद्वा, एतत्परब्रह्म **देवान्** - ब्रह्मरुद्रादीन् **पूर्वमेव प्राप्नुवदित्यर्थः** । सर्वत्र **तिष्ठत्**, **तत्** - ब्रह्म, **धावतो** - गरुडादीन्, **अत्येति** - 'नैवान्तं कारणस्येयाद्यद्यपि स्यान्मनोजवः' (अहिर्बु.सं.2-43) इत्युक्तम् । **तस्मिन्** - वासुदेवे मातरिश्वा अवस्थितः; **मातरिश्वा** - मातरि - आकाशे, श्वयति गच्छतीति मातरिश्वा-वायुः, **अपः** - उदकादिकं **दधाति** - बिभर्ति इत्यर्थः ।

'द्यौस्सचन्द्रार्कनक्षत्रं खं दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः' ॥ (म.भा.अनु.156)

इत्यादिषु प्रसिद्धमेतत् ॥

## वेदान्ताचार्यभाष्यम्

### ब्रह्मणि विचित्रशक्तियोगनिरूपणम्

सर्वावासत्वेन प्रस्तुतमीश्वरतत्त्वं विरुद्धवदभिलापव्यंजितेन विचित्रशक्तियोगेन विशदयति - **अनेजदेकं मनसो जवीय इति । अनेजत्** - अकम्पमानम्, **एकम्** - प्रधानभूतम्, [1]स्वानधीन स्वसमानद्वितीयरहितम् वा, **मनसो जवीयः** वेगवत्तरमनसोऽपि अतिशयितजवम् ।

1. स्वाधीन - क, ग ।

ननु इदं न जाघटीति निष्कम्पत्वं वेगवत्तरत्वं चेति ; मैवम्, तात्पर्यवृत्त्या सुघटितत्वात् ; सर्वस्य स्वेन नित्यव्याप्तत्वात् अनेजत्, सर्वदा मनसो गोचरदेशम् अतिक्रम्य वृत्तेः मनसो जवीयः इति उपचर्यते । एवम् उत्तरेष्वपि वाक्येषु भाव्यम् ।

नैनद्देवा आप्नुवन् पूर्वमर्षत् - प्रागेव सर्वान् प्राप्नुवत् देवाः - हिरण्यगर्भादयः नाप्नुवन् - एतावन्तं कालं न लेभिरे, विभुत्वेन नित्यप्राप्तमपि कर्मप्रतिबद्धज्ञानाः क्षेत्रज्ञाः विद्याभिगमात्पूर्वं स्वबुद्ध्या न प्राप्नुवन्तीति, न विरोधः । यथोक्तं छान्दोग्ये [1]'तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुः एवमेवेमास्सर्वाः प्रजाः अहरहर्गच्छन्त्यः एतं ब्रह्मलोकं न विन्दन्ति अनृतेन हि प्रत्यूढाः' (छां.उ.8-3-2) इति ।

तद्धावतोऽन्यानत्येति तिष्ठत् - 'यः पृथिव्यां तिष्ठन्' (बृ.उ.5-7-7), 'य आत्मनि तिष्ठन्' (बृ.उ.मा.पा.3-7-30) इत्यादिक्रमेण तत्सर्वत्र तिष्ठदेव धावतो गरुडादीनपि अत्येति यावद्यावद्धावन्ति जविनः तावतः परस्तादपि वर्तत इत्यर्थः । यथोच्यते -

'वर्षायुतशतेनापि पक्षिराडिव सम्पतन् ।
नैवान्तं कारणस्येयाद्यद्यपि स्यान्मनोजवः' ।। (अहिर्बु.सं.2-43) इति ।

अन्येषां क्वचित्तिष्ठतां धावदतिक्रमणं नास्तीति वैचित्री ।

वायुवादीनां भगवदाहितशक्तिमत्वम्

अन्यदपि किंचिदाश्चर्यम् इत्याह - तस्मिन्नपो मातरिश्वा दधाति इति । तस्मिन्नवस्थितः [2]अप्रतिबन्धानुगुणकाठिन्यादिरहितोऽपि वायुः अपो बिभर्ति । सर्वाधारभूतेन सर्वेश्वरेण विधृतः स मातरिश्वा तच्छक्त्यैव पाथःपयोधरनक्षत्रग्रह-तारकादिकं बिभर्ति इत्युक्तं भवति । स्मर्यते हि -

---

1. 'तद्यथा हिरण्यनिधिं' अस्यायमर्थः । अक्षेत्रज्ञाः - निधिमत्क्षेत्रस्यभायानभिज्ञाः निधेरुपर्युपरि संचरन्तोऽपि अधस्तान्निहितं हिरण्यनिधिं न लभन्ते - एवमेव इमाः सर्वाः प्रजाः सुषुप्तिकाले 'सतिसम्पद्य न विदुः' इत्युक्तरीत्या नित्यं दहराकाशस्थं अन्तर्यामिणं विश्रमाय आश्रयन्तोऽपि नित्यसन्निहितं तं न विन्दन्ति - न जानन्तीत्यर्थः । लोक्यत इति लोकः । ब्रह्मैव लोक इति कर्मधारयः । न तु षष्ठीसमासः । निरतिशयसुखरूपतया प्राप्यं ब्रह्म सन्निहितमपि न जानन्तीति, तत्र हेतुः अनृतेन कर्मणा प्रत्यूढाः आवृताः - इति । 'गतिशब्दाभ्यां तथा हि दृष्टं लिंगं च' इत्यत्र भाष्ये इदं स्पष्टम् ।

2. प्रतिबन्धानुगुणेति पाठो युक्तः । प्रतिबन्धो धारणम् । अप्रतिबन्धेति अकारोऽपि स्थितश्चेत्, पकारस्य द्वित्वसम्पादनेन 'अप्प्रतिबन्धे'ति शोध्यम् । जलप्रतिबन्धानुगुणेति तदर्थः । 'पतनप्रतिबन्धानुगुणे'ति पाठोऽपि दृष्टः।

द्यौस्सचन्द्रार्कनक्षत्रं खं दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः ।। (म.भा.अनु.156) इति ।

## ईशावास्यप्रकाशिका

### भगवतो विचित्रशक्तियोगः

एवं तृतीयेन मन्त्रेण विद्यायां शीघ्रप्रवृत्तिसिद्ध्यर्थम् अविदुषामनर्थ उक्तः, अथ आचार्यः सर्वावासत्वेन प्रस्तुतस्य परस्य ब्रह्मणः अनन्तविचित्रशक्तियोगं विरुद्धवदभिलापेन व्यंजयन् उपदिशति - **अनेजदेकम्** इति ।

**अनेजत्** - 'एजृ कम्पने' (पा.धा.234) अकम्पमानम्, **एकम्** - प्रधानतमं, [1]शास्त्रविदुषां स्वानधीनस्वसमानाधिकद्वितीयरहितमिति वा, 'न तत्समश्चाभ्यधिकश्च दृश्यते' (श्वे.उ.6-8) इति श्रुतेः । परमसाम्यमापन्ना अपि मुक्ताः ब्रह्माधीना एवेति भावः । **मनसो जवीयः** - वेगवतो मनसोऽपि जवीयः वेगवत्तरम्, प्रकृत्त्यतिक्रान्तमपि देशं क्षणमात्रात् [2]मनस्संकल्पेन गच्छति चेत् ततः पूर्वमेव तत्र गच्छतीति भावः । निष्कम्पं वेगवत्तरं चेति विरोधप्रतीतिः, परिहारस्तु - विभुत्वात् वस्तुतोऽनेजत्, तत एव मनसोऽप्यगोचरदेशे सर्वदैव वृत्तेः मनसो जवीय इत्युपचर्यत इति ।

किंच - **देवाः** - ब्रह्मरुद्रादयोऽपि, **पूर्वमर्षत्** - प्रागेव सर्वान् देवान्प्राप्नुवदित्यर्थः । **एनत्** - प्रस्तुतं सर्वावास्यं परं ब्रह्म, **नाप्नुवन्** - एतावन्तं कालं न लेभिरे इति भावः । पूर्वमेव प्राप्तं न लेभिरे इति विरोधभानं, विभुतया प्राप्तमपि कर्मसंकुचितज्ञानाः क्षेत्रज्ञाः आचार्योपदेशादिना स्वबुद्ध्या नाप्नुवन् इति परिहारः । यथोक्तं छान्दोग्ये - 'तद्यथा

1. 'शास्त्रविदुषां' इतीदं केषुचित् पुस्तकेषु नास्ति । तत्सत्त्वे तु 'स्वाधीनस्वं' इति तदुत्तरवर्तिसमस्तपदं विभजनीयम् । तदा तथैव पाठो दृष्टः । एवं च एकशब्दनिर्दिष्टं प्रधानतमत्वं शास्त्रविदुषां स्वाधीनस्वत्वेनेति योज्यम् । स्वचेलाचलगतरत्नादिधनवत् ब्रह्म शास्त्रज्ञानां अतिप्रियं सत् स्वाधीनं भवतीति यावत् । अथ 'शास्त्रविदुषां' इत्येतदभावे तु, 'स्वानधीनस्वसमानाधिक' इत्यादिपाठ एव श्रेयान् । तदनधीनं तत्समानं तदधिकं च द्वितीयं नास्तीति एकशब्दार्थविवरणं भवति । नित्यमुक्तानां समानभोगशालित्वेन अपहतपाप्मत्वादिगुणाष्टकेन च स्वसमानत्वेऽपि, तेषां स्वाधीनत्वाद्वा तद्व्युदास इति बोध्यम् ।

2. 'मनः' इत्येतत् कर्तृवाचि पृथक्पदम् । अस्य 'गच्छति चेत्' इत्यत्र अन्वयः ।

हिरण्यनिधिं निहितमक्षेत्रज्ञाः उपर्युपरि संचरन्तो न विन्देयुः एवमेवेमाः सर्वाः प्रजाः अहरहर्गच्छन्त्यः एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः' (छां.उ.8-3-2) इति । अपि च - तद्धावतोऽन्यानत्येति तिष्ठत् - 'यः पृथिव्यां तिष्ठन्' (बृ.उ.5-7-7) 'य आत्मनि तिष्ठन्' (बृ.उ.मा.पा.3-7-30) 'यस्सर्वेषु भूतेषु तिष्ठन्' (बृ.उ.5-7-19) इत्यादिक्रमेण सर्वत्र तिष्ठदेव, तत् - ब्रह्म, धावतोऽन्यान्-'गरुडादीनपि' अत्येति । तिष्ठतः पुरुषस्य धावदतिक्रमणं न घटते इति विरोधप्रतिभानम्, जविनो यावद्यावद्धावन्ति तावतस्तावतः परस्तादपि वर्तते इति तात्पर्यात् अविरोधः । यथोच्यते -

'वर्षायुतशतैर्वापि पक्षिराडिव सम्पतन् ।
नैवान्तं कारणस्येयाद्यद्यपि स्यान्मनोजवः ।।' (अहिर्बु.सं.2-43) इति ।

अन्यदपि किंचिदाश्चर्यमित्याह - तस्मिन्नपो मातरिश्वा दधाति - तस्मिन् वासुदेवे अवस्थितो मातरिश्वा । अप इत्युपलक्षणम् । पाथःपयोधरग्रहनक्षत्रतारकादिकं बिभर्तीत्यर्थः । धारणानुगुणकाठिन्यरहितोऽपि वायुः पाथःप्रभृतिकं बिभर्तीत्यद्भुतम् । सर्वाधारभूतेन सर्वेश्वरेण विधृतो वायुः तच्छक्त्या एवं बिभर्तीत्यभिप्रायः । 'एष सेतुर्विधरण एषां लोकानामसंभेदाय' (बृ.उ.6-4-22) 'एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः' (बृ.उ.5-8-8)

'द्यौस्सचन्द्रार्कनक्षत्रं खं दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः' ।। (म.भा.अनु.156)

इत्यादिषु प्रसिद्धमेतत् ।।

## श्रीरंगाचार्यभाष्यम्

### विचित्रशक्तियोगमुखेन परमात्मनः इतरवैलक्षण्यम्

आत्मनां बहुत्वस्य तत्रैकस्य परं सकलेतरातिशायिशक्तिमत्त्वस्य च प्रतिपादनेन, 'ईट्' शब्दनिर्दिष्टपरमात्मनः अन्येषां च प्राक्प्रस्तुतम् ईशेशितव्यभाव-शेषशेषिभावादिकं दृढीकर्तुं सर्वेश्वरं सकलेतरेभ्य आत्मभ्यो विशिनष्टि - अनेजत् इत्यादिना चतुर्थेन मन्त्रेण ।

अस्य पदविवरणम् - एकम् - परमात्मशब्दितमात्मतत्त्वम्, अनेजत् 'एजृ कम्पने' (पा.धा.234) इति भौवादिकाद्धातोश्शत्रन्तरूपम् एजदिति । एजत् न भवतीति

**अनेजत्** - स्वस्थानात् स्वयमचलदेव, **मनसः** - वेगकाष्ठापन्नतया लोके प्रसिद्धात् मनसोऽपि, **जवीयः** - अतिशयेन जववत् वेगवत्तरम्, जववच्छब्दात् 'ईयसुनि', 'विन्मतोर्लुक्' (पा.सू.5-3-65) इत्यनुशासनेन मतुपो लुक् । यद्वा, 'तरस्वी त्वरितो वेगी प्रजवी जवनो जवः' (अ.को.2-8-73) इति कोशेन जवशब्दस्यापि वेगवत्पर्याय-पाठात् तत एव 'ईयसुनि' जवीय इति भवति ।

### परमात्मनः मनसो जवीयस्त्वप्रतिपादनम्

चलनरहितस्य कथं जवीयस्त्वम् इति चेत्, एकत्रावस्थितस्य अल्पकालेऽपेक्षितकार्यार्थातिदूरदेशसन्निधानयोग्यतावत्त्वाभिप्रायेण इह परमात्मनो जवीयस्त्वव्यपदेशः । यथा अन्यत्रापि 'अपाणिपादो जवनो ग्रहीता' (श्वे.उ.3-19) इति; 'आसीनो दूरं व्रजति शयानो याति सर्वतः' (क.उ.2-21) इति च ।

एकत्र एककार्यानुगुणाकारेणावस्थितस्यैव सत्यसंकल्पस्य विभोः परमात्मनः स्वरूपतः सदा सर्वत्र व्याप्तत्वेन अतिदूरदेशेऽप्यतिशीघ्रमेव संकल्पमात्रेण स्वेष्टानुगुणाकारेण स्फुरणसम्भवेन चिन्तिततत्रत्यकार्यानुगुणाकारेण तत्र सन्निधानं हि नानुपपन्नम्, प्रसिद्धं च वैकुण्ठदुग्धाब्धिप्रभृतिस्थानेषु अचंचलं तिष्ठत एव भगवतः ततोऽतिविप्रकृष्टस्थले प्रह्लादचिन्तासमकालम् अतिक्षिप्रमेव स्तम्भे स्फुरणत-स्तद्रक्षणानुगुणाकारेण सन्निधानम् । तथा च मनोजवगतिभ्योऽपि अन्येभ्यस्सर्वेभ्यः अतिक्षिप्रमेव चिन्ताप्रदेशात् चिन्तितप्रदेशे कार्यानुगुणसन्निधानयोग्यतावत्त्वमेव मनसो जवीयस्त्वम् इह विवक्षितम् ।

[1]यद्वा - एकाकारेण क्वचित्तिष्ठत एव भगवत आकारान्तरेण [2]अतिक्षिप्रमतिवेगगमनेनाऽपि अतिविप्रकृष्टस्थले चिन्तितकार्यार्थसन्निधानयोग्यत्व-

---

1. **यद्वेति** - पूर्वयोजनाया 'अकार्यचिन्तासमकालमेव प्रादुर्भवन् चापधरः पुरस्तात्' इति रघुवंशोक्तरीत्या कार्तयीर्यायिर्भाययत् भगयतोऽपि चिन्तितसमकालं चिन्तितदेशे नृसिंहादिरूपेण सद्यः स्फुरणमेय जवीयस्त्यमिति सिद्धम्। अत्र तु यिग्रहयिशिष्टयेषेण अतियेगगमनेन तत्र सन्निधानं जवीयस्त्वमिति भेदो भाव्यः ।
2. 'अतिक्षिप्रमतियेगगमनेनापि' - अत्र अतिक्षिप्रगमनेति या अतियेगगमनेति या अन्यतरेणालं अर्थाविशेषात्।

रूपमेव [1]जवीयस्त्वम् इह विवक्षितम् । दृश्यते हि भगवतः तादृशमपि सन्निधानं ग्राहग्रस्तगजेन्द्ररक्षणादौ । तथा च चिन्तासमकालमेव अतिदूरदेशेऽपि संकल्पमात्रेण अतिवेगेन सन्निधानयोग्यतावत्तया प्रसिद्धात् मनसोऽपि अतिवेगेन तादृशसन्निधान-योग्यतावत् परमात्मवस्तु इति पक्षद्वयेऽपि फलितोऽर्थः ।

जवीयस्त्वं [2]विवृणोति - **नैनद्देवाः** इत्यादिना तिष्ठत् इत्यन्तेन वाक्यद्वयेन । **देवाः**- चिन्तासमकालं मनोजवगत्या चिन्तितस्थानसन्निधानयोग्यतावत्परमयोगिव्यास-जामदग्न्यादिभ्यो मनुष्येभ्योऽपि अधिकशक्तिमत्तया प्रसिद्धा ब्रह्मादयोऽपि देवाः ; स्वयं धावन्तोऽपीति शेषः, वक्ष्यमाणवाक्यानुरोधात् ।

**पूर्वम्** - तद्धावनारम्भात्किंचित्पूर्वम्, **अर्षत्** - गच्छत्, न तु धावत्, 'ऋषी गतौ' (पा.धा.1288) इति धातोः शत्रन्तरूपमेतत् । यद्यपि तौदादिकोऽयं धातुः; तथाऽपि छान्दसो गुणः । यद्वा धातुपाठे 'बहुलमेतन्निदर्शनम्' (पा.ग.सू.208) इत्यस्य 'दशगणीपाठो बहुलम्' इत्येतदर्थपरत्वमाश्रित्यापठितलौकिकवैदिकधातूनामपि यथाप्रयोगम् एष्टव्यताया अपि स्वीकारात् प्रयोगदर्शनाच्च भौवादिकोऽप्येवंभूतो वैदिकः कश्चिद्धातुः अस्तीत्यभ्युपगम्यत इति न दोषः। एवमेव माध्यन्दिनपाठे दृश्यमानस्य 'अर्शत्' इति रूपस्यापि 'ऋशी गतौ' इति भौवादिकधातुसद्भावमाश्रित्य निर्वाहो बोध्यः । **एनत्** - पूर्वोक्तं परमात्माख्यमेकमात्मवस्तु, **नाप्नुवन्** - न प्राप्नुवन्ति प्राप्तुं न शक्नुवन्तीत्यर्थः । 'छन्दसि लुङ् लङ् लिटः' (पा.सू.3-4-6) इत्यनुशासनेन लडर्थे लङ् । **तत्** - पूर्वोक्तमेकमात्मवस्तु, **धावतः** - प्रागेव धावतः, **अन्यान्** - प्रागुक्तान् ब्रह्मादिदेवान्, **तिष्ठत्** - तद्धावनानन्तरं चिरं तिष्ठदपि, **अत्येति** - पश्चात्क्षणेनैव स्ववेगशक्त्या अतिक्रामति ।

---

1. 'जवीयस्त्वमिह विवक्षितं'मिति । एतेन 'मनसो जवीयः इत्युपचर्यते' इति पूर्वभाष्योक्त औपचारिकत्वपक्षं विसृज्य मुख्यमेव जवीयस्त्वं एतद्भाष्यकृता दर्शितं भवति । ननु सर्वव्यापिनो निष्क्रियस्य भगवदात्मस्वरूपस्य कथं मुख्यं जवीयस्त्वम्? इत्यत्र 'एकाकारेण क्वचित्तिष्ठत एव आकारान्तरेण अतिवेगगमनेन' इत्यादिना विग्रहविशिष्टवेषेणेति समाहितिः अभिप्रेता । मन्त्रे विभोः भगवदात्मस्वरूपस्यैव - ग्रहणमिति न चोद्यम् । उपरि 16 मन्त्रे 'पूषन्नेकर्षे !यत्ते रूपं कल्याणतमं - - - -' इति प्रार्थितकल्याणतमविग्रहवैशिष्ट्यस्य अत्रापि अनुसन्धाने क्षत्यभावात् । एतन्मन्त्रवत् विचित्रशक्तियोगप्रतिपादके कठवल्ली श्रुते 'आसीनो दूरं व्रजति शयानो याति सर्वतः' इत्यादि मन्त्रे आसनशयनादेः स्पष्टमेव विग्रहविशिष्टपरतास्फोरकत्वाच्च । ईदृश- जवीयस्त्वं नित्यमुक्तादिष्वपि दृष्टमिति चेत् अस्तु भगवत्प्रत्तेन सत्यसंकल्पत्वादि- गुणाष्टकसाम्येन तेष्वपि प्रमाणसिद्धः तादृशप्रभावः । स्वाभाविकं तु तथात्वं परमात्मन एवेति वैशिष्ट्यबोधने तात्पर्यात् ।

2.विवृणोतीति - 'धावतः' इत्यादि दर्शनात् उत्तरपादद्वयमपि जवीयस्त्वविवरणमेवेति एतद्भाष्याशयः।।

तथा चेदमुक्तं भवति - आत्मानः अनन्तास्सन्ति ; तत्रैकस्तावदात्मा सकलेतर-व्यावृत्तनिरतिशयवेगशक्तिशाली ; यतः, इतर आत्मानस्स्वदेशात्किंचित्पूर्वं गच्छन्तमेतं स्वयं पश्चाद्धावन्तोऽपि प्राप्तुमेव न शक्नुवन्ति ; किमुत अतिक्रमितुम् !अयं पुनरात्मा स्वदेशात्पूर्वमेव धावतः अन्यांस्तदगमनात्पश्चात् स्वयं स्वदेशे चिरं तिष्ठन्नपि ततः क्षणेनैव स्ववेगशक्त्या अतिक्रम्य गच्छति इति ।

### परमात्मनो निखिलजगद्धारकत्वशक्तिः

अथास्यात्मनो निखिलजगद्धारकत्वशक्तिं तन्मुखेन कारणत्वंचाह - तस्मिन्नप इत्यादिना । मातरिश्वा - मातरि अन्तरिक्षे श्वयति गच्छतीति मातरिश्वा ; निरालम्बे नभसि एकत्र अवस्थानरहितः सततगमनशीलः स्वयं स्थूलगुरुद्रव्यानात्मकतया स्थूलगुरुद्रव्यान्तरधारणशक्तिगन्धसम्भावनानर्हो वायुरपि इत्यर्थः ।

तस्मिन् - यथोक्तलक्षणैकात्मनि, अपः - निखिलजगदण्डमण्डलकारणत्वेन आदिसृष्टस्थूलगुरुद्रव्यरूपाणि तदाधारत्वेन समन्ततः तदावरणत्वेन च स्थूलगुरु-द्रव्यान्तरावष्टम्भलेशमन्तरेणैव अवतिष्ठमानानि कारणोदकानि; दधाति- धारयति। 'प्रासादशिखरे चैत्रो ध्वजं धारयति' इत्यत्र चैत्रः प्रासादशिखरोपष्टब्धस्सन्नेव ध्वजं धारयतीतिवत्, 'तस्मिन्नपो मातरिश्वा दधाति' इत्यत्र परमात्मोपष्टब्धस्सन्नेव मातरिश्वा कारणोदकानि दधातीत्यर्थः अनेन लभ्यत इति बोध्यम् । सविवरोदरतया स्वेषु प्लवमानानां निखिलजगदण्डमण्डलानाम् आधारभूतानि आदिसृष्टानि कारणजलानि स्थूलगुरुद्रव्यान्तरोपष्टम्भमन्तरेण निरालम्बे नभसि केवल-परमात्मशक्त्युपष्टब्धवातोत्तम्भितान्येव हि अवतिष्ठन्ते ।

### अप्सृष्टेः प्राथमिकत्वम्

उक्तं हि मनुना जगत्कारणतया स्थूलगुरुद्रव्यान्तरापेक्षया प्रथमसृष्टत्वमपामेव प्रथमाध्याये -

> 'सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः।
> अप एव ससर्जादौ तासु वीर्यमवासृजत्'।। (मनु.स्मृ.1-8)

'तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।

तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः' ।। इति । (म.स्मृ.1-9)

विष्णुपुराणे प्रथमांशे द्वितीयाध्याये -

'तत्क्रमेण विवृद्धं सज्जलबुद्बुदवत्समम् ।

भूतेभ्योऽण्डम्महाबुद्धे महत्तदुदकेशयम्' ।। (वि.पु.1-2-55)

इति कारणोदकाधारकत्वम् अण्डस्य उक्तम् ।

एवं तत्रैव -

'वारिवह्न्यनिलाकाशैस्ततो भूतादिना बहिः ।

वृतं दशगुणैरण्डं भूतादिर्महता तथा' ।। (वि.पु.1-2-59)

इति [1]कारणजलाद्यावरणावृतत्वम् अण्डस्याभिहितम् ।

---

1. 'कारणजलाद्यावरणे'ति । अत्रेदं बोध्यम् । 'तस्मिन्नप' इत्यादि चतुर्थपादविवरणे पूर्वव्याख्यानत्रयात् एतद्व्याख्यानगतिरन्यविधा। पूर्वत्र अप इत्यनेन ब्रह्माण्डान्तर्वर्ति जलं तदुपलक्षितं जलधरनक्षत्रग्रहादिकं च वायुना भगवदाहितशक्तिनाध्रियत इत्युक्तम् । अत्र तु ब्रह्माण्डाधारभूतं तदावरणं च कारणजलं तादृशवायुना ध्रियत इत्युच्यते। यद्यपिश्रीदेशिकभाष्येतदनुयायिकूरनारायणभाष्येचउदाहृतात् 'द्यौः सचन्द्रार्के'त्यादिमहाभारतवचनात् 'एष सेतुर्विधरणः' इत्याद्युपनिषद्वचनाच्च साक्षाद्ब्रह्मण एव सर्वधारकत्वलाभः, न तु तत्र वायुप्रसंगोक्तिः - तथापि शाकुन्तले सप्तमाङ्के 'त्रिस्रोतस - - - - वायोरिमं परिवहस्य वदन्ति मार्गं' इत्येतद्व्याख्याने वैखानस श्रीनिवासाचार्यप्रमाणितश्लोकोक्तरीत्या सप्तधा भिन्नस्य वायोः ब्रह्माण्डान्तराले संचरतः तत्तद्धारकत्वं यद् दृष्टं, तत् परमात्माहितशक्तिकत्वादेवेति एतन्मन्त्रलभ्यं इति श्रीदेशिकादीनां हृदयम्। शाकुन्तले सप्तमोऽङ्के व्याख्याया निर्दिष्टानि प्रमाणानि - यथा यथोक्तं ब्रह्माण्डपुराणे -

'आवहः प्रवहश्चैवसंवहश्चोद्वहस्ततः । विवहाख्यः परिवहः परावह इति क्रमात् ।

सप्तैते मरुतः स्कन्धाः महर्षिभिरुदीरिताः । आवहो वर्तयेद्वायुः मेघोल्कावृष्टिविद्युतः ।

वर्तयेत् प्रवहश्चाथ तथा मार्ताण्डमण्डलम् । वर्तयेदुद्वहश्चापि तथा नक्षत्रमण्डलम् ।

संवहो मरुतः स्कन्धः तथा शीतांशुमण्डलम् । पंचमोऽपि विवाहाख्यः तथैव ग्रहमण्डलम् ।

सप्तर्षिचक्रं स्वर्गंगां षष्ठः परिवहस्तथा । परावहस्तथा वायुः वर्तयेत् ध्रुवमण्डलम् ।।' इति ।

एतद्व्याख्यातृमते तु, न केवलं ब्रह्माण्डान्तर्वर्तिजलादेः किन्तु तुल्यन्यायेन ब्रह्माण्डाधारभूतानां आवरणजलानामपि गुरुद्रव्यत्वात् धारकापेक्षाणां निरालंबाकाशावरणवेष्टितस्स एव अग्न्यावरणभूतो वायुर्धारको भवतीति सिद्ध्यति। कारणजल - वायवावरणयोः अन्तराले अग्न्यावरणेन व्यवधानमस्तीति चेत् - अस्तु । अग्नेस्तु धारकत्वं न क्वचिददृष्टम्। अगुरुद्रव्यत्वाच्च न धारकान्तरापेक्षा तस्येति तत्प्रहाणेन कारणजलानां धारकोऽसौ वायुरेव भवतीति असावपि परमात्मोपष्टब्ध एवेति च एतदाशयः ।

तथा च, अनन्तेष्वात्मसु एक आत्मा स्वेतरसर्वातिशायिमहिमा जगत्कारणभूतश्चेति प्रतिपादयताऽनेन मन्त्रेण प्राक् 'ईट्' शब्देन निर्दिष्टस्य परमात्मनः स्वेतरसर्वनियन्तृत्वादिकम् उपपादितं भवति ।

#### शंकरादिव्याख्यायाः असंगतत्वम्

शंकरकृतमेतद्व्याख्यानम् अक्षराननुगुणम् आपण्डितपामरातिस्फुटप्रतीयमानार्थप्रहाणेन स्वमताभिनिवेशमात्रेण बलाद्यथेष्टविपरीतार्थकल्पनेन च असमंजसंचेति, अन्येषां केषांचिद्व्याख्यानमपि शब्दस्वारस्याननुगुणमिति च विलोकयतां विदुषां स्वत एव विशदं भवतीति तदुपपादनमुपेक्षामहे ग्रन्थगौरवभयात् ।।

## आनन्दभाष्यम्

सकलजगद्व्यापितया प्रकृतस्य ईश्वरस्य विरोधाभासान्वितविचित्रानेकशक्तिमत्त्वमुपदिशति शिष्यस्य ब्रह्मज्ञानाभिमुख्याय - अनेजदेकं ---- इति ।।

न एजते कम्पते इति **अनेजत्** - अकम्पनामं सर्वत्र व्यापकत्वेन गतत्वात् गन्तव्यो देश एव नास्तीति गत्यभावादेव न कम्पोऽपि तत्र ; तथापि **मनसो जवीयः** - जवो-वेगः अतिशयेन यत्रास्ति तत् जवीयः ; वेगवत्तरम् । मनो हि वेगवतां प्रथमं प्रसिद्धम् ; ततोऽपि ब्रह्म जवीयः ; मनोवेगस्यापि अविषयत्वात् । 'अनेजत्' 'जवीयः' इति विरोधोऽत्र भासते ; विभुत्वेन वस्तुतो नैजते इति तत्परिहारः । जवीयत्वं तूपचारादेव ब्रह्मणीति बोध्यम् । **एकम्** - स्वसमाभ्यधिकद्वितीयरहितमेव ब्रह्म **पूर्वम्** - प्रागेव, सर्वान् देवान् **अर्षत्** - प्राप्तवत् तथापि देवाः बहुत्वसंख्यावन्तोऽपि एकत्वसंख्यावत् एनत् - ब्रह्म **नाप्नुवन्** - न प्राप्तवन्तः एतावत्कालपर्यन्तमित्यर्थः । 'यो यं प्राप्नोति स तमपि प्राप्नोति' इति लोकप्रसिद्धनियमः, प्राप्तेः परस्परसंयोगरूपत्वात् ।

इह तु प्राप्तमपि ब्रह्म देवाः न प्राप्नुवन् इति विरोधः प्रतीयते कर्मसंज्ञिताऽविद्यासंकुचितज्ञाना देवाः अन्तर्यामितया प्राप्तमपि न प्राप्नुवन्तीति परिहारो अत्र बोध्यः । यथा हिरण्यनिधिं क्षेत्रे निहितमपि क्षेत्रज्ञानविधुराः उपर्युपरिसंचरन्तोऽपि न जानन्ति एवं गुरूपदेशमन्तरा स्वबुद्धिमात्रेण स्वान्तर्गतमपि ब्रह्म न जानन्ति इति भावः ।

तत् - ब्रह्म, तिष्ठत् - सर्वत्र वर्तमानं एव 'यः सर्वभूतेषु तिष्ठन्' (बृ.उ.5-7-19) 'य आत्मनि तिष्ठन्' (बृ.उ.मा.पा.5-7-22) इत्यादिश्रुतेः । **धावतः** - शीघ्रं गतिं कुर्वतः पवनगरुडादीनपि **अत्येति** अतिक्राम्यति । यतो यतो गरुडादयो धावन्ति तत्परस्तादपि ब्रह्म वर्तत एवेति भावः । अत्रापि तिष्ठतः धावदतिक्रमणं विरुद्धमिवाऽऽभाति, ब्रह्मणः व्यापित्वे न धावदतिक्रमणं विरुद्ध्यते इति प्ररिहर्तव्यम् । **तस्मिन्** - सर्वव्यापिनि ब्रह्मणि ; व्यवस्थित इति शेषः, **मातरिश्वा** - वायुः **अपः** - इदमुपलक्षणं तेन महीमहीधरपयोधरग्रहनक्षत्रादिकं सर्वं, **दधाति** - बिभर्ति ; ब्रह्मणि स्थितो वायुः ब्रह्माहितवीर्यतया सर्वं धर्तुं शक्नोति। न स्ववीर्यमात्रेण इत्यभिप्रायः ।

'एष सेतुर्विधरण एषां लोकानामसम्भेदाय'(बृ.उ.6-4-22) इत्यादि श्रुतेः ।

'द्यौस्सचन्द्रार्कनक्षत्रं खं दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः'।। ( म.भा.अनु.156)

इत्यादिस्मृतेश्च ब्रह्मण एव सर्वविधारकत्वावगमात् । अनेन विचित्रशक्तियोगः स्फुटमुक्तो भवति ।

**ब्रह्मणि सर्ववैलक्षण्यपरतया भङ्गयन्तरेण व्याख्यानम्**

अथवा 'ईशावास्यम्' (ई.उ.1) इति मन्त्रेण व्यापकतया वर्णितस्य परमात्मनः, व्याप्यतया वर्णितस्य चिदचिद्रूपस्य जगतश्च, परस्परविलक्षणताम् अनेन मन्त्रेण शिष्यं प्रति उपदिशति । व्याप्यभूतं चिदात्मकं जगत्, **एजत्** - कम्पमानं ज्ञानसंकोच-विकासरूपस्वभावच्युतिमत् । अचिद्रूपं जगत्तु, स्वरूपान्यथाभावरूपस्वरूपच्युतिमत् । ब्रह्म तु, तादृशो - भयच्युतिरहितम् अतः अकम्पमानम् इति द्वयोः वैलक्षण्यम् । ब्रह्म **एकम्** - स्वसमाभ्यधिकद्वितीयरहितम् । व्याप्यं तु न तथा ; किन्तु स्वसमानाधिक-द्वितीययुक्तं व्याप्यं जगत् सकलमेव मनोगोचरम् ; ब्रह्म तु व्यापकतया न मनोगोचरम् 'अवाङमनसगोचरम्' (नृ.उ.2-7) इति श्रुतेः । वैलक्षण्यं मनसो जवीय इत्यनेन दर्शितम् । व्यापकं ब्रह्म पूर्वं पूर्वकालत एवेति सर्वं वस्तु अर्षत्-प्राप्नुवदस्ति । देवा इति उपलक्षणम्, परिच्छिन्नं व्याप्यं जगत्, एतत् [1]ब्रह्म अधुनापि नाप्नुवत्, अतः सर्वप्राप्तिमत्ता न तत्रेति विलक्षणत्वं द्योतितं भवति ।

---

1. "एतत् ब्रह्म" - इदं द्वितीयान्तं कर्मवाचि ।

तत् व्यापकं ब्रह्म तिष्ठत् - गतिनिवृत्तिमदपि, 'ष्ठागति - निवृत्तौ' (पा.धा.928) इति धातुः, धावतः - अतिशयितगतिमतः, अन्यान् अत्येति - अतिक्रम्य वर्तते, व्यवहितविप्रकृष्टसर्वदेशवर्तित्वं ब्रह्मणि एतेन प्रतिपादितम् । परिच्छिन्नं जगत् प्रगतिशीलमपि व्यवहितविप्रकृष्टसर्वदेशवर्ति नास्त्येवेति तयोः वैलक्षण्यम् ।

मातरिश्वा - वायुः अप्प्रभृतीन् पदार्थान् यद्दधाति तत् तस्मिन् - सर्वात्मके ब्रह्मण्येव । अतः सर्वधारकत्वं ब्रह्मणः आयाति, व्याप्यं जगत् चिद्रूपमचिद्रूपं वा किमपि न सर्ववस्तुविधारकम् इति व्याप्यव्यापकयोरपरं वैलक्षण्यमुक्तम् ।।

## सुबोधिनी

विरोधाभासमुखेन ब्रह्मणो वैलक्षण्यं दर्शयति - अनेजत् इति । अनेजत् मनसो जवीयः, अत एवैकं, पूर्वमर्षत्, एनद्देवा नाप्नुवन्, तत्तिष्ठदेव धावतोऽन्यानत्येति, तस्मिन्नवस्थितो मातरिश्वा अपो दधाति ।

अनेजत् - 'एजृ कम्पने' (पा.धा.234) अकम्पमानमित्यर्थः । अकम्पमानमपि मनसो जवीयः - वेगवत्, न हि मनोवेगस्याप्यगोचरं नाम किमपि ; ब्रह्म तु तस्यापि अगोचरम्, तदुपचर्यते 'ततो जवीय' इति । अधिकजवो मन्दजवेन न खलु गृह्यते ।

यद्वा, वेगस्य प्रयोजनं हि प्राक्सन्निधिः, यावन्मनः संकल्पवेगेन क्वचित्सन्निधत्ते तत्र देशे प्रागेव ब्रह्मतत्त्वं सन्निहितं ; विभुत्वात्, तदुच्यते मनसो जवीयः इति ।

पूर्वमर्षत् - प्रागेव प्राप्तम्, एनत् - ब्रह्म, देवाः - ब्रह्मादयः, नाप्नुवन् नाधिगतवन्तः। प्रथमत एव देशविशेषप्राप्तं पश्चात् तं देशम् अभिगन्तारो हि लभन्ते, सर्वदैव अन्तर्यामिस्वरूपेण सन्निहितमेतद्ब्रह्म तु पश्चात्तना ब्रह्मादयो न जानन्त्य-विद्यान्धाः ; 'तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तः' इति भावः।

तत् - ब्रह्म धावतोऽन्यान् - गरुडादीनपि अत्येति- अतिक्रामति । यतो यतो धावेत्कश्चित् ततस्ततः परस्तादपि इदं ब्रह्मतत्त्वं व्यापृतमिति भावः तस्मिन्निति। तस्मिन् - ब्रह्मणि, अवस्थितः इति शेषः । मातरिश्वा - वायुः, अपः । इदमुपलक्षणम् ; महीमहार्णवादिकमखिलं दधाति - धत्ते ।

इदमप्याश्चर्यं यत् वायुः तस्मिन् ब्रह्मणि, स च धारणानुगुणकाठिन्यरहितोऽपि भुवनं धत्ते इति । ब्रह्मावधृतो वायुः तदाहितशक्तिको जगद्धत्ते इति भावः । तथा च वचनम् -

'द्यौस्सचन्द्रार्कनक्षत्रा खं दिशोभूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः' ।। इति ।। (म.भा.अनु.156)

अनेन विचित्रशक्तियोगो दर्शितः ।

यद्वा, प्रथममन्त्रे व्यापकतया वर्णितस्य ईशस्य व्याप्यात् वैलक्षण्यमाह - अनेजत् इति । व्याप्यमिदं जगत् कम्पमानं स्वरूपात् स्वभावाद्वा प्रच्ययत्, व्यापकं ब्रह्म तु स्वरूपतः स्वभावतो वा न कम्पते, न च्यवतीत्यर्थः, स्वरूपतः स्वभावतो वा न विकरोतीत्येतत् । व्याप्यमिदं जगत् नाना, व्यापकं तु ब्रह्म एकम् - सजातीय-द्वितीयरहितम् ।

न च व्याप्ये जगति मनसोऽप्यगोचरं नाम किंचित् ; व्यापकं तु ब्रह्म मनसोऽपि अगोचरम् - अपरिच्छिन्नत्वात्, तदिदमुच्यते - 'मनसो जवीयः' इति ।

पूर्वमर्षत् - वेगवतो मनसः पूर्वमेव, अर्षत् - गतम्, ततोऽपि वेगवत्, तस्याप्यगोचरम् इत्युक्तं भवति । एनत् - ईदृशं ब्रह्म, देवाः - इन्द्रियाणि, नाप्नुवन् - नाध्यगच्छन् । मनसोऽगोचरे तस्मिन् इन्द्रियाणां का वार्तेति भावः ।

तत् - ब्रह्म, तिष्ठत् - क्वचित् स्थितमेव, तद्देशे सम्बद्धं सदेवेति यावत् । ततो धावतोऽन्यात्येति - अतिक्रम्य वर्तते, व्यवहितदूरदेशसम्बन्धि भवतीति यावत् । इदं हि परिच्छिन्नस्य न घटते, तत् सर्वदेशसम्बन्धित्वरूपं विभुत्वं वैलक्षण्यमुक्तम् ।

मातरिश्वाऽपो दधाति इति यत् तदपि तस्मिन् निरवलम्बे आकाशे पाथःप्रभृति बिभर्ति इत्येतदपि बस्तुतः सर्वात्मनि तस्मिन्नेव । सर्वाऽपि विधरणशक्तिस्तस्मिन्नेवेति यावत् । एतेन व्याप्तेः फलं विधरणमुक्तम् ।

यद्वा, मातरिश्वोऽपो दधातीति यत् तदपि तस्मिन्नीश्वरे सति । ईशितुर्भयात् वायुः इदं ग्रहनक्षत्रादिकम् अप्रकीर्णं धत्ते, 'भीषास्माद्वातः पवते' (तै.आ.32) इति श्रुतेरिति भावः ।

## पंचमो मन्त्रः

**तदेजति तदु नैजति तद्दूरे तद्वन्तिके ।**
**तदन्तरस्य सर्वस्य तदु सर्वस्याऽस्य बाह्यतः ।। 5 ।।**

### प्रतिपदार्थदीपिका

अथ आचार्यः स्वोपदिष्टं विचित्रशक्तिमत्वं मुखान्तरेण उपदिशति - **तदेजति** इति ।

तत् - सर्वव्याप्तं परब्रह्म **एजति** - कम्पत इव वर्तते । **तदु नैजति** - न कम्पत इत्यर्थः । वस्तुतस्तु **तदु** - परब्रह्म **अन्तिके** - समीपे वर्तते, **तद्दूरे तद्वदन्तिके**- तत्तु परब्रह्म आसुरप्रकृतीनां दूरे वर्तते ; दैवप्रकृतीनाम् **अन्तिके** - समीपे वर्तते । अज्ञानिज्ञानिविषयभेदात् । **तदु** - परब्रह्म **अस्य सर्वस्य** - प्रपंचस्य अन्तः अन्तर्भवति । तदेव पुनः **अस्य सर्वस्य** - प्रपंचस्य **बाह्यतः** - बहिर्भवति इत्यर्थः ।।

### वेदान्ताचार्यभाष्यम्

भगवतो विचित्रशक्तियोगस्यैव विवरणम्

'अनेजदेकं मनसो जवीयः' (ई.उ.4) इत्युक्तमर्थमादरान्मुखान्तरेणानुशास्ति । **तदेजति तदु नैजति इति ।** तत् - व्याप्तं तत्त्वं पूर्वोक्तप्रकारेण जवीयस्त्वादिना **एजति** - कम्पते । कम्पत इवेत्यर्थः । **तदु नैजति** - तदेव वस्तुवृत्त्या न कम्पते । **तद्दूरे तद्वन्तिके** - तद्दूरेऽन्तिके च वर्तते । मूढप्रतिबुद्धपुरुषभेदापेक्षया विभोरेव दूरान्तिक-वर्तित्वव्यपदेशः । यथाह शौनकः -

> 'पराङ्मुखानां गोविन्दे विषयासक्तचेतसाम् ।
> तेषां तत्परमं ब्रह्म दूराद्दूरतरे स्थितम्' ।।
> 'तन्मयत्वेन गोविन्दे ये नराः न्यस्तचेतसः ।
> विषयत्यागिनस्तेषां विज्ञेयं च तदन्तिके ।।' इति ।। (वि.ध.99-13,14)

केचित्पदार्थाः कस्यचिदन्तर्भवन्ति, न बहिः । केचिद्बहिर्भवन्ति, नान्तः । तदु-भयव्यावृत्तिमाह - **तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यत इति ।** तत् - सर्वव्याप्तमुक्तं परं ब्रह्म । **अस्य** - विचित्रचिदचिद्रूपेण प्रमाणसिद्धस्य सर्वस्य वस्तुनः। **अन्तर्भवति** - अप्रतिघातादविभक्तदेशं वर्तत इत्यर्थः। तदेव सर्वस्यास्य बहिरपि

भवति। परिमितानां पदार्थानां भावदेश इवाभावदेशेऽपि वर्तत इति यावत्। तदेतद्-व्यक्तमुक्तं तैत्तिरीये सर्वपरविद्योपास्यविशेषनिर्धारणार्थे 'सहस्रशीर्षम्' (तै.ना.90) इत्यनुवाके ---

'यच्च किंचिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः'।। इति।। (तै.ना.94)

## ईशावास्यप्रकाशिका

अथ इदानीमाचार्यः स्वोपदिष्टं विचित्रशक्तिमत्यमेव आदरार्थं मुखान्तरेण पुनरनुशास्ति - तदेजति इति।

### तत्त्वनिर्धारणाय पुनः पुनः उपदेशः

भूयोभूयः प्रवचनं श्रवणं च कर्तव्यमिति च पुनरनुशासनस्याभिप्रायः। तथा च शास्त्रम् ---

'परीक्ष्य लोकान् कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन।
तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिश्श्रोत्रियं ब्रह्मनिष्ठम्।।
तस्मै स विद्वानुपसन्नाय सम्यक्प्रशान्तचित्ताय शमान्विताय।
येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्'।। (मु.उ.1-2-13)

इति। तत्त्वतः - अज्ञानसंशयविपर्ययनिरासो यथा भवति तथा, प्रोवाच - प्रकर्षेण ब्रूयात् - पुनः पुनः उपदिशेत् इत्यर्थः। अत एव 'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया' (भ.गी.4-34) इत्यादि भगवतोपदिष्टस्याप्यर्थस्य वैशद्याय तत्त्वदर्शि-सकाशात् प्रणिपातादिपुरस्सरं पुनः पुनः श्रवणं विहितम्। उपदिष्टा च पुनर[1]नुगीतेति आहुराचार्याः।

**तदेजति** तत् - सर्वव्याप्तं परब्रह्म। एजतीव - कम्पत इव, जवीय एवेति यावत्। तदु - तदेव नैजति - वस्तुतस्तु न कम्पते। तद्दूरे च तदेव अन्तिके च वर्तते।

1. अनुगीतेति - महाभारतयुद्धानन्तरं युधिष्ठिरे राज्यं पालयति, कदाचित् ययावकाशं उपविष्टयोः कृष्णार्जुनयोः, 'कृष्ण ! पुरा कुरुक्षेत्रयुद्धारम्भे मां युद्धोन्मुखीकर्तुं यस्त्वया विपुलमुपदिष्टः शास्त्रार्थः (गीतोपदेशेन), स मया व्याकुलचित्तेन तदा नावधानेन श्रुतः, अतः पुनरुपदिश्यताम्' इत्यर्जुनः कृष्णं प्रार्थयत। अथ च रुष्टेन कृष्णेन 'दुर्मेधाश्चासि पाण्डव !' इत्यादिना प्रथमं तमुद्दूष्य पश्चात् विपुलो गीतार्थः पुनरपि संग्रहेणोपदिष्ट इति, तस्यैवोपदेशस्य अनुगीतात्येन व्यवहार इति च महाभारते स्थितम्।

[1]असुरदैवप्रकृतिकपुरुषभेदापेक्षया विभोरेव दूरान्तिकवर्तित्वव्यपदेशः । आह च भगवान् शौनकः ----

'पराङ्मुखानां गोविन्दे विषयासक्तचेतसाम् ।
तेषां तत्परमं ब्रह्म दूराद्दूरतरे स्थितम् ।।
तन्मयत्वेन गोविन्दे ये नरा न्यस्तचेतसः ।
विषयत्यागिनस्तेषां विज्ञेयं च तदन्तिके' ।। (वि.ध.99-13,14) इति ।

इदमप्येकं वैचित्र्यमित्याह - तत् - सर्वव्याप्तं परं ब्रह्म **अस्य सर्वस्य** - विविध-विचित्ररूपतया प्रमाणप्रसिद्धस्य सर्वस्य वस्तुनोऽन्तर्भवति, तदेव पुनस्तदानीमेव सर्वस्य बहिरपि भवतीत्यर्थः । अन्येषां तु गृहान्तर्वर्तिपुरुषाणां तदानीमेव न बहिष्ठत्वं सम्भवति; बहिर्वसतां च न अन्तर्वर्तित्वमितीह वैचित्र्यमिति भावः ।

**अन्तर्बहिश्च परमात्मनो व्याप्तिप्रकारः**

यद्यप्यणुषु नान्तर्वर्तिता सम्भवति, तथाप्यप्रतिघातादविभक्तदेशतया वर्तित्व-मात्रेण अणुषु अन्तर्वर्तित्वोक्तिः । एवं बहिर्व्याप्तिरपि अविभुद्रव्यापेक्षयैव, न तु विभुद्रव्यापेक्षयापीति द्रष्टव्यम् । तदिदं वैचित्र्यं तैत्तिरीयकेऽप्युक्तम् 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' (तै.ना.94) इति ।।

## श्रीरंगाचार्यभाष्यम्

पुनरपि तस्यैव परमात्मनो विभुत्वादिलक्षणं महिमान्तरमाह - **तदेजति** इत्यादिना पंचमेन मन्त्रेण ।।

**एजतिनैजत्योर्विरोधः तत्परिहारश्च**

**अस्य पदविवरणम्** । **तत्** - पूर्वोक्तं परमात्मलक्षणमेकमात्मवस्तु, **एजति** - आश्रितकार्यार्थं तत इतो गमनेन चलत्यपि, **तद्** - तदेव । उकारोऽवधारणार्थः । माध्यन्दिनानान्तु 'तन्नैजति' इत्येव पाठो दृश्यते । **नैजति** - न चलत्यपि । कथमेकस्य विरुद्धधर्मद्वयसम्भव इति चेत्, विग्रहविशिष्टवेषेण चलनं स्वरूपतः चलनाभावश्च सम्भवतीति न विरोधः । परमात्मस्वरूपस्य विभुत्वेन तस्य चलनं हि न सम्भवति ; तथाऽपि 'कृष्णो बृन्दावनं गच्छति, मधुरां गमिष्यति' इत्यादिव्यवहाराणां विग्रह-विशिष्टवेषविषयाणां [1]दर्शनेन विशिष्टवेषेण चलनमपि सम्भवति ।

---

1. आसुर - क

### भगवतः परमकारुणिकत्वानन्याधीनत्वोक्तिः

यद्वा - आश्रितजनदुःखप्रसंगभयनिबन्धनं कम्पनम्, नियन्त्रन्तरदण्डभय-निबन्धन कम्पनाभावश्च विवक्षित इति न विरोधः । अनेन आश्रितजनपरम-कारुणिकत्वम् अनन्याधीनत्वं चेति गुणद्वयं प्रतिपादितं भवति । तत्, **दूरे** - अति-विप्रकृष्टदेशेऽप्यस्ति; तदु - तदेव अन्तिके - समीपेऽप्यस्ति ; तत्, अस्य सर्वस्य-चिदचिल्लक्षणस्य कृत्स्नस्य वस्तुजातस्य, अन्तः - अन्तरप्यस्ति ; तदु - तदेव, सर्वस्यास्य बाह्यतः - बहिः प्रदेशेऽप्यस्ति विभुत्वात्सर्वत्रास्तीत्यर्थः ।

### सौलभ्यदौर्लभ्यगुणाविष्कारः

'तद्दूरे तद्वन्तिके' इत्यनेन ----

'पराङ्मुखानां गोविन्दे विषयासक्तचेतसाम् ।
तेषां तत्परमं ब्रह्म दूराद्दूरतरे स्थितम्' ।।
'तन्मयत्वेन गोविन्दे ये नरा न्यस्तचेतसः ।
विषयत्यागिनस्तेषां विज्ञेयं च तदन्तिके' ।। (वि.ध.99-13, 14)

इति शौनकवचनोक्तम्, अनाश्रितजनानां दुर्ग्रहत्वलक्षणा दूरस्थितिः, आश्रित-जनानां सुग्रहत्वलक्षणा समीपस्थितिश्चेत्युभयं वा विवक्षितम् । अनेन च भक्तजन-सौलभ्यम् अभक्तजनदौर्लभ्यं चेति गुणद्वयं भगवतः प्रतिपादितं भवतीति बोध्यम् ।

### इवकाराध्याहारानावश्यता

'तदेजति' इत्यत्र, एजतीव इति इवकाराध्याहारगर्भम् अन्यैः कृतं व्याख्यानम् अनुपादेयम्, विभोः परमात्मनः स्वरूपतश्चलनाश्रयत्वासम्भवेऽपि विशेषणीभूतविग्रह-द्वारा गमनाभिप्रायेण, एजति इति व्यवहारस्य 'कृष्णो मधुरां गच्छति, द्वारकां गच्छति' इत्यादिव्यवहारवत् निर्वाहसम्भवेन इवकाराध्याहारस्य अनावश्यकत्वात् ।

### अन्तर्व्याप्ति-बहिर्व्याप्तिविषये पक्षान्तरम्

[1]यदप्याहुः अत्रोत्तरकलाख्याः -अणुद्रव्यविषयेऽन्तर्व्याप्तेर्विभुद्रव्यविषये बहि-

---

1.'यदप्याहुः अत्रोच्यते' अणुद्रव्येष्वेकविधा, तदभिन्नद्रव्येषु चान्यविधा अन्तर्व्याप्तिरिति कल्पनमसंबद्धमिति यदिदं दूषणम् - तदिदं न श्रीदेशिकभाष्योपरि प्रसरतीति ग्राह्यम् । तत्र एवं विभागाभावेन 'सर्वस्य वस्तुनः अन्तर्भवति अप्रतिघातादविभक्तादेश वर्तत इत्यर्थः' इति सर्वत्रैकरूपान्तर्भावस्यैव निरूपणात् ।।

व्याप्तेश्च दुर्वचतयाऽन्तर्व्याप्तिवचनमणुद्रव्यविषयेऽप्रतिघातादविभक्तदेश वर्त- -मानत्वमात्रविषयम् ; बहिर्व्याप्तिवचनन्तु विभुभिन्नपरिमितद्रव्यमात्रविषयम् - इति।

**पक्षान्तरे असामंजस्योपपादनम्**

अत्रोच्यते - इह तावत् अणुद्रव्यवाचकं पदम् एकम्, तदितरद्रव्यवाचकं पदम् अन्यदिति पदद्वयं नोपलभ्यते । यतोऽणुद्रव्यान्वितान्तःपदस्य एकार्थकत्वम्, इतरद्रव्यान्वितान्तःपदस्य अन्यार्थकत्वं च सुवचं स्यात् । किन्तु इह 'सर्वस्यास्य' इत्येकमेव पदं सर्वद्रव्यवाचकमन्तःपदान्वय्यस्ति। अतः तत्पदप्रतिपाद्यसर्वद्रव्यान्वय-योग्यैकविधार्थकताया एवान्तःपदस्य वक्तव्यत्वेन अन्तवर्तित्वोक्तेः अणुद्रव्यविषये परम् अप्रतिघातादविभक्तदेशतया वर्तमानत्वाभिप्रायकताया अन्यद्रव्यविषये अन्यादृशाभिप्रायकतायाश्च वर्णनम् असम्बद्धमेव ।

एवम् अप्रतिघातादविभक्तदेशतया वर्तमानत्वम् अनवच्छिन्नवृत्तिमत्त्व-पर्यवसन्नं तत्तद्वस्तुसम्बन्धिसर्वप्रदेशसम्बन्धित्वमेवेति तादृशस्य तस्याणु-तद्भिन्न-सर्वद्रव्यविषय एव परमात्मनि सम्भवादपि तथा वर्णनम् अनावश्यकम् ।

अपि च - अन्तर्वर्तित्वस्य उक्तलक्षणानवच्छिन्नवृत्तिमत्त्वरूपत्वे सर्वद्रव्यसर्व-प्रदेशसम्बन्धिताया इह वाक्यद्वयप्रतिपिपादयिषितायाः 'तदन्तरस्य सर्वस्य' इत्येक-वाक्येनैव सिद्ध्या 'तदु सर्वस्यास्य बाह्यतः' इति वाक्यान्तरं निरर्थकमेव स्यात् ।

**सर्वशब्दसंकोचे मानाभावः**

किंच 'तदु सर्वस्यास्य बाह्यतः' इति वाक्यस्य स्वरसतः प्रतीयमानस्वभिन्न-सर्वद्रव्यविषयकत्वभंगप्रसंगदोषम् अगणयित्वा विभुभिन्नसर्वद्रव्यविषयकत्वेन संकोचं सहमानैः 'तदन्तरस्य सर्वस्य' इति पूर्ववाक्यस्यापि अणुभिन्नसर्वद्रव्य-विषयकत्वेन संकोचस्वीकारसम्भवेन 'अन्तः' इत्यस्य यथाश्रुतार्थप्रहाणस्यैव अनावश्यकत्वेन वाक्यान्तरवैयर्थ्यापादकोऽन्यादृशार्थः किमर्थं कल्पित इति तु न जानीमः ।

---

किन्तु श्रीवत्सनारायणभाष्ये 'यद्यपि अणुषु नान्तर्वर्तिता - - - इत्यादिना अन्तर्बहिर्व्याप्तिविषये भेदप्रदर्शनात् तदुपरि एतद्दोषप्रसंजनमिति ध्येयम् ।।

### संकोचकल्पनस्य अयुक्तत्वम्

एवमत्र परमात्मनः स्वभिन्नयावद्द्रव्येषु अन्तर्व्याप्तेः बहिर्व्याप्तेश्च पृथक्पृथक्सर्वशब्दघटितेन वाक्यद्वयेन स्वरसतः प्रतिपाद्यमानत्वात्, श्रौतस्यार्थस्य यथाश्रुत्येव प्रतिपत्तव्यत्वात्, 'न हि वचनविरोधे न्यायः प्रभवति' इति न्यायेन प्रस्फुटार्थकवचनविरोधेन न्यायप्रचारायोगाच्च, कतिपयद्रव्येषु अन्तर्व्याप्तेः कतिपयद्रव्येषु बहिर्व्याप्तेश्च असम्भवं मत्वा श्रुतेः स्वतर्कानुरोधेन स्वैरं संकोच-कल्पनमपि एतेषाम् अयुक्तमेव ।

### 'यच्चकिंचित्' इति श्रुत्यर्थासंकोचप्रदर्शनम्

'यच्च किंचिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः'।। (तै.ना.94)

इति सम्प्रतिपन्नसमानार्थकनारायणानुवाकगतश्रुत्यन्तरमपि ईदृशसंकोच-कल्पनं निरुणद्धि ।

अत्र हि 'तत्सर्वम्' इत्येकशब्दप्रतिपन्नस्यैवार्थस्य अन्तर्बहिः व्याप्तिकर्मतया अन्वयात् 'तत्सर्वम्' इत्यस्य 'यच्च किंचित्' इत्यादि पूर्ववाक्यप्रतिपन्नसर्वार्थ-परामर्शिनः कतिपयद्रव्यभिन्नद्रव्यविषयकत्वेन संकोचकल्पनासम्भवात् ; तथा संकोचस्वीकारे च कतिपयद्रव्येषु व्याप्तेरेव परमात्मनः असिद्धिप्रसंगात्, द्वयोरेतयोश्श्रुत्योः सर्वसम्प्रतिपन्नसमानार्थकताव्याहतिप्रसंगाच्च दर्शितश्रुतेः यथोक्त-रीत्या संकोचकल्पनं नैव संजाघटीति ।

तस्मात्स्वरसतः प्रस्फुटं श्रुतिप्रतिपन्नं स्वभिन्नयावद्द्रव्येषु अन्तर्बहिर्व्याप्तिमत्वं परमात्मनः अस्तीत्येव अभ्युपगन्तव्यम् इति प्रागुक्तलक्षणार्थान्तरसंकोचादिकल्पनम् एतेषाम् अनुपपन्नमेव ।

### अन्तर्यामिब्राह्मणेन अणुषु अन्तर्व्याप्तिसमर्थनम्

'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मान-मन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः' (बृ.उ.मा.पा.3-7-30) इत्यन्तर्यामि-ब्राह्मणश्रुतिश्च अणुभूते प्रत्यगात्मनि अन्तःप्रविश्य नियन्तृतयाऽवस्थितं परमात्मानं प्रतिशरीरतांप्रतिपादयन्तीपरमात्मनःअणुषुअन्तर्व्याप्त्यसम्भववादम्असमंजसम्इति अतिस्फुटमेव आवेदयति ।

अत्र हि 'य आत्मनि तिष्ठन्' (बृ.उ.मा.पा.3-7-30) इति पूर्वमभिधाय पश्चात् 'आत्मनोऽन्तरः' (बृ.उ.मा.पा.3-7-30) इति पुनरभिधानं परमात्मनः प्रत्यगात्मनि बहिर्व्याप्तिमात्रशंकाव्युदासार्थम् इत्यापण्डितपामरं प्रस्फुटम् ।

अत्र परमात्मनः प्रत्यगात्मनि अन्तःप्रविश्य नियन्तृतयाऽवस्थितत्वं प्रतिपाद्य प्रत्यगात्मपरमात्मनोः शरीरशरीरिभावोपपादनादपि परमात्मनः अणुभूतप्रत्यगात्मनि अन्तर्व्याप्तिः दुरपह्नवा ।

न हि बहिरेवावस्थितं कंचित्प्रति किंचिद्द्रव्यं शरीरं भवितुमर्हति ; - तथा सति बहिरेवावस्थाय नियन्तारं राजानं प्रति राष्ट्रस्यापि शरीरत्वव्यपदेशप्रसंगात् ।

**जीवान्तर्व्याप्तौ व्यासार्याभिमतिप्रदर्शनम्**

तदिदं सर्वमभिसन्धाय उक्तं व्यासार्यैः एतां श्रुतिं व्याकुर्वद्भिः - 'आत्मनि तिष्ठन्' इत्युक्ते 'वेद्यामग्निस्तिष्ठति', 'तिले तैलं तिष्ठति' इतिवत् बहिरबहिस्स्थिति-साधारण्यात् तद्वैशद्यार्थमाह - आत्मनोऽन्तर इति ; 'अन्तरो यमयति' इत्यनेन शरीरलक्षणमुक्तम् इति ।

उक्तं च तैरेव 'अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा' (तै.ना.3-11-10) इति श्रुतिं व्याकुर्वद्भिः - 'अन्तः प्रविष्टश्शास्ता' इत्येतत् सर्वात्मशब्दव्याख्यानरूपम्, अनेन शरीरात्मभाव उक्तः, 'अन्तः प्रविश्य नियाम्यत्वं हि शरीरत्वम्' इति ।

एवं 'यच्च किंचित्' इत्याद्युदाहृतश्रुतिप्रतिपन्नां परमात्मनः स्वेतरसर्वद्रव्येषु अन्तर्बहिश्च व्याप्तिम् उपपादयितुं प्रवृत्तया 'अणोरणीयान्महतो महीयान्' (क.उ.2-20) इति श्रुत्या परमात्मनः स्वेतरसर्वसूक्ष्मद्रव्यापेक्षया सूक्ष्मतमत्वस्य तदन्तर्व्याप्ति-प्रयोजकस्य, स्वेतरमहाद्रव्यापेक्षया महत्तमत्वस्य च तद्बहिर्व्याप्तिप्रयोजकस्य, प्रतिपादनमुखेन स्वेतरेषु सर्वेषु सूक्ष्मेषु महत्सु च द्रव्येषु अन्तर्बहिर्व्याप्ति-योग्यताया एव प्रतिपादनात् परमात्मनः स्वेतरेषु सर्वेषु द्रव्येषु अन्तर्बहिर्व्याप्तिः निराबाधैव प्रतिपाद्यते ।

न च निरवयवेषु अणुद्रव्यभूतेषु प्रत्यगात्मसु कथम् अन्तर्व्याप्तिः परमात्मनस्सम्भवति ?, अन्तःप्रवेशप्रयोजकविवराभावात् इति वाच्यम् ; इतरवस्तु-प्रवेशप्रयोजकविवराऽभावेऽपि प्रमाणबलेन परमात्मप्रवेशप्रयोजकविवरस्वीकारे क्षत्यभावात् ।

अन्तःप्रवेशे प्रत्यक्षदृष्टान्तप्रतिपादनम्

यथा हि दर्पणादिस्वच्छद्रव्येषु पृथिवीजलादीतरवस्तुप्रवेशप्रयोजकविवरानंगीकारेऽपि सूर्याद्यालोकप्रवेशप्रयोजकविवरम्, अयः पिण्डे वस्त्वन्तरप्रवेशप्रयोजकविवरानंगीकारेऽपि अग्निप्रवेशप्रयोजकविवरंच प्रत्यक्षप्रमाणबलेनांगीक्रियते; तथैव प्रत्यगात्मस्वपि प्रमाणबलेन परमात्मप्रवेशप्रयोजकविवरस्वीकारे हि न काचिदस्ति क्षतिः।

न च एतावता प्रत्यगात्मनां छेदभेदादिप्रसंगः, दर्पणादिद्रव्येषु आलोकादिप्रवेशतः छेदाद्यसम्भववदेवोपपत्तेः।

तस्मात् सूर्याद्यालोकः स्वव्याप्त्यप्रतिघातेन स्वच्छद्रव्याणि अन्तर्बहिश्च व्याप्यावतिष्ठते ; न च तावता तेषां काचिदस्ति क्षतिरिति यथा प्रत्यक्षप्रमाणबलादंगीक्रियते ; तथैव परमात्मापि स्वव्याप्त्यप्रतिघातेन प्रत्यगात्मनः अन्तर्बहिश्च व्याप्यावतिष्ठते; न च तावता तेषां नित्यतादिक्षतिरिति श्रुतिबलादंगीक्रियत इति न कश्चिद्दोषः।

किं बहुना ; प्रत्यगात्मनां परमात्मव्याप्तिप्रतिघातकत्वस्वीकारे विभौ परमात्मनि छिद्रकरणं विना क्वचिदप्यवस्थानस्यैवासम्भवेन ते तस्मिन् प्रतिक्षणं छिद्रं कुर्वन्त एव तिष्ठन्ति तत इतस्संचरन्ति च इत्यभ्युपगमस्यावश्यकतया परमात्मस्वरूपस्य छेदभेदादिप्रसंगो हि दुर्निवारस्स्यात् इत्यवधीयताम्।

किंच, निरवयवत्वहेतुना प्रत्यगात्मनां परमात्मनः स्वान्तः प्रवेशप्रतिघातकत्वे तेनैव हेतुना परमात्मनोऽपि अन्येषां स्वान्तःप्रवेशप्रतिघातकताया दुर्वारतया परमात्मनि वा अन्येषां कथम् अन्तरवस्थानसम्भवः।

निरवयव आत्मनि अन्तःप्रवेशे दृष्टान्तः

तस्मात्, यथा मणिदीपादिप्रभाणां बहूनाम् एकत्र प्रवृत्तानां परस्परव्याप्त्यप्रतिघातकतया परस्परान्तःप्रवेशः प्रत्यक्षप्रमाणसिद्धः ; यथा च स्वाप्नास्वाप्नपदार्थानाम् एकत्र प्रसक्तानां परस्परान्तःप्रवेशो दुरपह्नवः ; यथा च कालदिगात्मनां विभुत्वेन अभ्युपगतानां परस्पराप्रतिघातेनैव सर्वत्र व्याप्तिः नैयायिकादिसिद्धा ; यथा च

अत्यल्पपरिमाणे वटपल्लवशायिनि भगवति निखिलजगदण्डमण्डलस्य अन्तः-स्थितिश्च प्रमाणसिद्धा ; तथैव प्रत्यगात्मान्तर्नियन्तृतया परमात्मनः स्थितिः परमात्मान्तरन्येषां तदायत्ततयैव स्थितिश्च श्रुत्यादिप्रमाणबलेनैव दुरपह्नवा सिद्ध्यतीति निरवयवत्वमात्रेण अन्तस्स्थित्यसम्भववर्णनम् अप्रतिष्ठितकेवलकुतर्कमात्रमूलमेव इति न किंचिदेतत् ।

### विभुद्रव्यापेक्षया बहिर्व्याप्तिसमर्थनम्

अथ एवमपि विभुद्रव्याणां देशपरिच्छेदरहितत्वेन तद्बहिर्देशसद्भावस्यैव दुर्वचतया कथं तद्बहिर्व्याप्तिः परमात्मनः सुवचा इति चेत्, न 'महतो महीयान्' (क.उ.2-20) इति श्रुत्या स्वेतरसर्वमहाद्रव्यापेक्षया परमात्मनो महीयस्त्वप्रतिपादनेन तद्विरोधेन कस्यापि द्रव्यस्य परमात्मसमानमहत्त्वासिद्धेस्तदपकृष्टमहत्त्वेभ्यो द्रव्येभ्यः परमात्मनो बहिर्व्याप्तिसम्भवे क्षतिविरहात् ।

अत एव गीतासु -

'अथवा बहुनैतेन किं ज्ञानेन तवार्जुन ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ।।' (भ.गी.10-42)

इति दशमाध्यायवचनेन,

'इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि' ।। (भ.गी.11-7)

'तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा' ।। (भ.गी.11-13)

इत्येकादशाध्यायवचनाभ्याम्,

'यस्यायुतायुतांशांशे विश्वशक्तिरियं स्थिता ।
परब्रह्मस्वरूपस्य प्रणमामस्तमव्ययम' ।। (वि.पु.1-9-53 )

इति श्रीविष्णुपुराणप्रथमांशनवमाध्यायवचनेन च सचराचरस्य कृत्स्नस्य जगतो भगवत्येकदेश एव परिसमाप्तत्वं प्रस्फुटमेवाभिहितम् ।

भगवतोऽपकृष्टपरिमाणानामेवकतिपयद्रव्याणांविभुत्वव्यवहारस्तुभगवदितर-कतिपयमहाद्रव्यापेक्षयापकृष्टपरिमाणराहित्यमात्रनिबन्धनः ।

### विभुद्रव्यविमर्शः

अथ - किं तावत् तादृशं विभुद्रव्यम् ? यद्बहिर्व्याप्तिर्ब्रह्मणो न सम्भवीत्युच्यत - इति विवेचयामः ।

न तावदाकाशस्तथा - वेदान्तसिद्धान्ते तस्य प्राकृततत्त्वरूपतया महदादिभ्योपि अपकृष्टपरिमाणस्यापरिच्छिन्नत्वशंकागन्धानवकाशात् । नापि शुद्धसत्त्वमिश्र-सत्त्वद्रव्ये तथा तयोः परस्परदेशव्यावृत्तत्वात् ।

नापि नित्यमुक्तधर्मभूतज्ञानानि तथा - तेषां संकोचविकासशीलतया कदाचित्संकोच्यावस्थापनस्यापि सम्भवेन तद्बहिःप्रदेशस्यापि सूपपादत्वात् ।

नापि कालस्तथा - सचराचरस्य कृत्स्नस्य जगतः भगवत्स्वरूपैकदेश एव परि-समाप्ततायाः प्रागुदाहृतप्रमाणसिद्धतया तदन्तःपातिकार्योपयोगितयैव क्लृप्तस्यास्य तद्बहिस्सद्भावे प्रमाणाभावेन परिच्छिन्नताया दुरपह्नवत्त्वात् ।

किंच - 'कालो लीलाविभूतौ अनित्यः, त्रिपाद्विभूतौ नित्यः' इत्यप्यंगीकार-दर्शनेन नित्यत्वानित्यत्वयोर्विरुद्धयोरेकत्रासम्भवेन परस्परविभिन्नयोर्द्वयोः कालयोः परस्परदेशव्यावृत्तयोरेव सिध्या तयोः परिच्छिन्नता हि दुरपह्नवा ।

### भगवत्समपरिमाणवस्त्वभावः

किं बहुना ! परमात्मनस्स्वेतरसर्वमहाद्रव्यापेक्षया महीयस्त्वस्य परमात्मैकदेश एव सचराचरस्य कृत्स्नस्य जगतः परिसमाप्ततायाश्च प्रागुदाहृतानन्यथासिद्ध-प्रमाणसिद्धतया तद्विरोधेन भगवदितरस्य कस्यापि द्रव्यस्य भगवत्समपरिमाणत्वं न सिद्ध्यत्येवेति स्वेतरसर्वद्रव्यापेक्षया परमात्मनो बहिर्व्याप्तिरपि सूपपादैव ।

एवमेव परमात्मनस्स्वेतरसर्वाणुद्रव्यापेक्षयाऽणीयस्त्वस्य प्रत्यगात्मान्तर्या-मित्वस्य च प्रागुदाहृतप्रमाणसिद्धतया तस्य प्रत्यगात्मान्तर्व्याप्तिरपि दुरपह्नवैव ।

न हि खलु कस्मिंश्चिद्वस्तुनि बहिर्मात्रसम्बद्धं किंचिद्वस्तु तदन्तर्यामित्वे-नानुन्मत्तः कश्चिद्व्यपदिशेत् ।

### सावयवत्वे अनित्यत्वप्रसंगपरिहारः

अथान्तःप्रदेशाभावेऽन्तर्व्याप्तिर्न सुवचा ; तत्स्वीकारे च प्रत्यगात्मनां सावयवत्वप्रसंगः ; तत्स्वीकारे च अनित्यत्वप्रसंगो दुर्वार इति चेत् । इदं चोद्यं

परमात्मन्यपि समानम् ; परमात्मन्यपि अन्तःप्रदेशसत्त्व एव तदन्तरितरेषां वस्तूनां स्थितिः सुवचा ; तत्स्वीकारे च तस्यापि सावयवत्वं प्रसज्यते ; तत्स्वीकारे च अनित्यत्वप्रसंगोऽपीति ।

### कृत्स्नप्रसक्त्यधिकरणवत् चोद्यपरिहारः

किं बहुना - कृत्स्नप्रसक्त्यधिकरणे ब्रह्मणो निरवयवत्वे बहुभवनं कार्यत्वानुपयुक्तांशस्थितिश्च नोपपद्यते ; सावयवत्वे च निरवयवत्वश्रुतिविरोध इति चोद्यं 'श्रुतेस्तु शब्दमूलत्वात्' (ब्र.सू.2-1-27) इति सूत्रे श्रुत्या ब्रह्मणो निरवयवत्वस्य तत एव विचित्रसर्गस्य च प्रतिपादनात्, श्रौतस्यार्थस्य यथाश्रुत्येव प्रतिपत्तव्यत्वाच्च, ब्रह्मणश्शब्दैकप्रमाणकत्वेन धर्मिग्राहकप्रमाणेन यादृशस्वभावं तत्प्रतिपद्यते, तादृशस्वभावमेव तत्स्वीकर्तव्यमिति न तत्र लोकदृष्टविरोधशंकावकाश इति सूत्रकारो यथा पर्यहार्षीत्, तथेहापि परमात्मप्रत्यगात्मना निरवयवत्वनित्यत्वयोः परमात्मनस्स्वेतरसर्वद्रव्यान्तर्बहिर्व्याप्ततायाः कृत्स्नस्य जगतः परमात्मान्तरेवावस्थितताया‌श्च श्रुत्यैव प्रतिपादनाच्छ्रुत्येकसमधिगतस्यार्थस्य यथाश्रुत्येव प्रतिपत्तव्यत्वाच्च लोकदृष्टन्यायेन न विरोधशंकावकाश इति चोद्यपरिहारः सुकर एव।

इह विपरीतार्थकरणेन श्रुतेरन्यथानयने च तत्रापि श्रुतेरन्यथानयनं प्रसज्यत इति सूत्रकारोक्तान्यादृशसमाधानं निरर्थकमेव स्यात् । स्पष्टार्थकश्रुतेः अन्यथानयनम् असंगतमिति सूत्रकारः तथा समादधौ इति चेत् ? इहापि तत्तुल्यम् । ब्रह्मणः स्वेतरसर्वद्रव्येषु अविशेषेण अन्तर्बहिर्व्याप्ततायाः समन्ततः प्रस्फुटमेव जोघुष्यमाणत्वात् ।

### स्वोक्तांशे श्रुतिसूत्रसम्मतिप्रदर्शनम्

इदं पुनरत्रावधेयम् - अन्तश्शब्दो हि नानांशमध्यावकाशपरः ।

इत्थंच परमात्मनो जीवात्मान्तःप्रवेशप्रतिपादकश्रुतिबलात् जीवात्मनाम् अणुस्वरूपाणामपि नानांशात्मकत्वं तन्मध्ये परमात्मप्रवेशयोग्यावकाशश्च अस्तीत्येव अभ्युपगन्तव्यं ; श्रौतस्यार्थस्य यथाश्रुत्येव प्रतिपत्तव्यत्वात् ।

न च तावता अनित्यत्वापादकसावयवत्त्वप्रसंगः, वस्तुस्वरूपारम्भकानेकांशात्मकत्वस्यैव तथाविधसावयवत्वरूपत्वेन अनादिसिद्धानेकांशात्मकत्वस्य

तथात्वासम्भवात् । ईदृशं विचित्रमनेकांशात्मकत्वमेव लोके क्वाप्यदृष्टमपि श्रुतिप्रमाणैकबलात् इह अंगीक्रियते ।

यथा निरवयवस्य एकस्य ब्रह्मणो बहुभवनं, चेतनाचेतनादिलक्षणविचित्रकार्योपादानत्वम्, कार्यत्वानुपयुक्तांशस्थितिः, जातिवादिपक्षे एकस्या एव जातिव्यक्तेरिव युगपदनेकत्र परिपूर्णस्थितिश्च इत्येवमादयोंशाः श्रुतिप्रामाण्यबलात् विचित्रशक्तियोगसम्भवाच्च सूत्रकारेण कृत्स्नप्रसक्त्यधिकरणे स्थापिताः ।

इत्थं च निरवयवत्वेन प्रतिपन्नस्य ब्रह्मणः कार्यत्वानुपयुक्तांशान्तरस्वीकारेऽपि प्रमाणप्रतिपन्ननित्यत्वभंगभिया अनादिसिद्धानेकांशात्मकत्वं यथा स्वीकृतं ; तथैव प्रत्यगात्मनामपि तत्स्वीकारे क्षतिविरहेण अणोरणीयसः परमात्मनः तदन्तर्व्याप्तिः निराबाधा ।

एवमत्र परमात्मनस्सर्वकार्यबहिर्भूतकार्यत्वानुपयुक्तांशान्तरसद्भावांगीकारेण महतो महीयसः तस्य विभ्वपेक्षया बहिर्व्याप्तिरपि निराबाधैव ।

न च - विभुद्रव्यापेक्षया बहिर्भूतांशान्तरसद्भावः प्रमाणाप्रतिपन्न इति वाच्यं ; प्रागुदाहृतगीताविष्णुपुराणवचनैः कृत्स्नस्य जगतः परमात्मनि अत्यल्पतमैकांश एव पर्याप्तता प्रतिपादयद्भिः तत्सिद्धेः दुरपह्नवत्वात् ।

**जीवपरयोः सांशत्वनिरवयवत्वनिरूपणम्**

इत्थं च परमात्मप्रत्यगात्मनां निरवयवत्वव्यवहारो वस्तुस्वरूपारम्भकानेकांशात्मकत्वाभावनिबन्धनः ; सांशत्वव्यवहारः अनादिसिद्धानेकांशात्मकत्वनिबन्धन इति न कश्चिद्विरोध इति ।

तस्मात् अणुद्रव्येषु अन्तर्व्याप्तिः, विभुद्रव्येषु बहिर्व्याप्तिश्च, परमात्मनो न सम्भवतीति वादः केवलकुतर्कमूलः असमंजस एवेति सिद्धं भवति इति [1]अलं बहुना ।

---

1. अत्रेदं बोध्यम् । अणुषु जीवादिषु अन्तर्व्याप्तिविषये योऽयं उभयकलानुबन्धिना अर्वाचीनानां वादः, स नूनं तत्तत्पूर्वाचार्यग्रन्थादर्शनमूलः दुरभिनिवेशैकनिदानश्चेति वयं प्रतीमः - तथाहि -

भगवतः तत्तद्वस्तुषु अन्तर्व्याप्तिः किं परिसमाप्यवृत्तित्वरूपा, उत व्यासज्यवृत्तित्वरूपा संयोगादिवत्, इति कश्चिद्विशयः । अथ जीवानामणूनां निरवयवत्वात् तेषु सा अन्तर्व्याप्तिः अन्तर्भागविरहात् अप्रतिघातेन तत्समदेशवर्तित्वमात्ररूपा वा, तत्रापि सूक्ष्मान्तर्भागसम्भवात् न तत्समदेशवर्तित्वम् किन्तु अन्तःप्रविश्यवर्तमानत्वरूपमेव वा? इति द्वितीयो विशयः ।। तत्र प्रतिविषयं विशयद्वये प्रथमः पक्ष उत्तरकलानां, द्वितीयो दक्षिणकलानामिति स्थितिः ।।

### जगतो ब्रह्मात्मकत्वनिगमनम्

तथा च अनेन मन्त्रद्वयेन 'ईट्'च्छब्दवाच्यस्य एकस्यात्मनो ब्रह्मणः स्वेतर-सर्वातिशायिशक्तिमत्त्व-सर्वान्तर्यामित्वपर्यवसन्नविभुत्वयोः प्रतिपादनात् जगतो ब्रह्मात्मकत्वमप्युक्तं भवति ।

i. तत्र - क्वचित्परिसमाप्य वर्तमानस्य कथमन्यत्रापि स्थितिसम्भवः ? इत्याक्षेपः न्यायसिद्धाञ्जने अद्रव्यपरिच्छेदे श्रीदेशिकैः यथा समाधीयत - तदेवम् -

यद्वा, यन्निरवयवं तत् नैयायिकाभिमतजातिवत् सर्वत्र संयोगिनि सम्पूर्णं वर्तताम् । तदेतत् सूत्रकारैरेव आशंक्य परिहृतम् -'कृत्स्नप्रसक्तिः निरवयवत्वशब्दकोपो वा' इत्यादिना । तत्र च दीपः - सकलेतरविसजातीयं श्रुत्येकसमधिगम्यं सर्वशक्तियुक्तं ब्रह्म निरवयवमपि कार्यं च भवति - अनन्तं च भवतीति परिमितशक्तिचोद्यं न तत्र प्रसज्यते, यथा जातिवादिनो जातिरेवामूर्ता खण्डमुण्डादिषु अत्यन्तविलक्षणेषु अनन्तेष्वपि परिसमाप्यैव वर्तते, न तत्र इतरवस्तुचोद्यमिति, जगत्कारणत्वं सम्भवति इति ।

एतेन न्यायसिद्धाञ्जनग्रन्थेन, तदुदाहृतवेदान्तदीपगतश्रीभाष्यकारसूक्त्या च जातिनिदर्शनेन परिसमाप्य-वृत्तित्वमपि पक्षान्तरत्वेन इष्टमेवेति - यथात्र इतोऽपि विवादवदर्थनम् - एतेन रहस्यत्रयसारगतमूलमन्त्राधिकार-स्थिता - 'वस्तुतोऽ परिसमाप्यवृत्ति ग्रन्क इतु कोक्किल बहिर्व्याप्तिक्कु विरुद्धमाम्' इत्यादिसूक्तिरपि केवलं पक्षान्तरस्यापि सद्भावमात्रप्रदर्शनपरा, अन्यारूह्यवादरूपायेति, न तत्र नैर्भर्यम् । तैरेव न्यायसिद्धाञ्जने यतः आक्षेपोऽयं श्रीभाष्यकारीयवेदान्तदीपसूक्तिनिदर्शनेनापि समाधायि ; ततः कानाम पक्षान्तरस्वीकरणप्रत्याशा ?

ii. अथ यद्यपि द्वितीयविषये श्रीवेदान्तदेशिकैः सर्वार्थसिद्धौ

"अन्तर्बहिश्च तद्व्याप्तिः तत्र यत्रोभयं भवेत् ।
विभोरणोश्च न बहिः नान्तः तस्मान्न सा तयोः ।।
विभोर्न छिद्रमणुना नाणूनां विभुना च तत् ।
यथा प्रमाणं सम्बन्ध मात्रमेव तयोर्भवेत् ।।"

इति वदद्भिः अणोरन्तर्भागाभावनिरूपणेन अन्तःप्रवेशासम्भवोऽगीकृत इति सम्भाव्यते तथापि - तैरेव वादेऽस्मिन् असंतृप्तवद्भिः वादमेनं विसृज्य यद्वेति पक्षान्तरमाश्रितं न्यायसिद्धाञ्जने - यथा -

"यद्वा - निरवयवेषु अभिदुरतया पृथङ्निर्देशायोग्यत्वात् स्वाभाविकांशभेदो भवतु । न चैवं सति एकत्वानेकत्वं अवयवित्वं संघातत्वं वा प्रसज्यत इति वाच्यम् । तादृशस्यांशभेदस्य भेदव्यपदेशहेतुत्वाभावात् । एतावदेकानेकत्वं प्रमाणबलात् दुरपह्नवं अभ्युपगतं भवतु" इति ।। एतेन अणुत्वान्निरवयवत्वेन कथितेषु जीवेष्वपि पृथग्व्यपदेशानर्हस्वाभाविकसूक्ष्मांशसद्भावः प्रमाणबलात् दुरपह्नव इति श्रीदेशिकैः अंगीकृतमेवेति च सिद्धम् । अणीयसो ब्रह्मणो युक्तमेव तदन्तःप्रवेशनमिति च "य आत्मनोऽन्तरः" इति श्रुतिप्रमाणतः स्थितमेवेति तदाशयः ।। अत्रेदमपि विमृश्यम् - कथं निरवयवत्वे सति स्वाभाविकांशशालित्वमपि अणौ जीवे सम्भवति ? व्याहतं खल्विदम् । एवं सांशत्वे वा कथं नित्यता जीवस्य ? सावयवानां अनित्यत्वदृष्टेः - इत्यादिराक्षेपः श्रीदेशिकसूक्तिगतैः पदैरेव विघटितः । तत्र हि अभिदुरतया-स्वाभाविकांश-इत्यादिपदानि तदितरकार्यारम्भकावयवानामिव पूर्वं विश्लिष्य स्थितानामेव कदाचित् संश्लिष्य अवयव्यारम्भकत्वं अत्र नेति, अतः पुनर्भिदुरताविरहात् अवयविनाशकत्वं नेति च ज्ञापयन्त्येव । निरवयवेष्विति कथयद्भिरेव "स्वाभाविकांशभेदो भवतु" इत्युक्तेः अवयवारब्धत्वमेव सावयवत्वं, तदभाव एव निरवयवत्वं (सांशत्वेऽपि) इति च ज्ञापितमेव । अतो नित्यत्वं च सिद्धमेव ।।

सावयवना भगवद्दिव्यमंगलविग्रहादीनां नित्यत्वमिति आक्षेपमुत्थाप्य तत्त्वत्रयव्याख्याने ईश्वरप्रकरणे श्रीवरवरमुनीन्द्रैः आच्चापिल्लैसूक्तित्वेन प्रमाणितं वाक्यजातं अत्र स्मरणार्हम् ।। तदेवम् - यथा -

# आनन्दभाष्यम्

पूर्वमन्त्रोपदिष्टमेव विचित्रशक्तिमत्त्वं व्यापिव्याप्ययोर्वैलक्षण्यं च प्रकारान्तरेण अज्ञानसंशयविपर्ययनिरासाय पुनरुपदिशति - ( तदेजति इति)

---

"एंगुमोक्क अवयवसंबन्धमात्रमल्ल अनित्यत्वहेतु । अवयवरब्धत्वम् अवयवसम्बन्धमात्रमे अनित्यत्वहेतुवामागिल् करचरणाद्यवयवसंबन्धमुडान आत्मावुक्कं विनाश वरवेणम् । अंगु अप्पडि अवयवारब्धत्वत्तिल् प्रमाणमिल्लामैयाले इतु करचरणाद्यवयवयोगि यागानिर्क चैदेयु नित्यमेयायिरुक्कुम् " ।। इति ।

पूर्वोदाहृत श्रीदेशिकसूक्तिसमानार्थकमेव इदं आच्चापिल्लैसूक्तिजातमपि इति निरूपकैः परिशीलनीयम् । अतश्च निरवयवत्वं नित्यत्वं च साशत्वेऽपि रक्षितं भवति ।।

एवं श्रीदेशिकनिरुक्तं अणु-तदभिन्न-सर्वसाधारणं "अप्रतिघातादविभक्तदेशवर्तित्वं" रूपं अन्तर्व्याप्तिलक्षणमपि अनाक्षेप्यमेवेति प्रतीमः ।। यत्तु इह श्रीरंगाचार्यैः

"अपि च अन्तर्वर्तित्वस्य उक्तलक्षणानवच्छिन्नवृत्तिमत्त्वरूपत्वे सर्वद्रव्यसर्वप्रदेशसम्बन्धितायाः इह वाक्यद्वय-प्रतिपिपादयिषितायाः 'तदन्तरस्य सर्वस्य' इत्येकवाक्येनैव सिद्ध्या, 'तदु सर्वस्यास्य बाह्यतः' इति वाक्यान्तरं निरर्थकमेव स्यात्" (74 पुटे) इति दोषोद्धाटनम् - तदपि अलग्नकमेव । अविभक्तदेशवर्तित्वं हि तत्समदेश-वर्तित्वम् । तस्य वस्तुनः स्वरूपेण यावत्प्रदेशाक्रमणं, तावति देशे अप्रतिघातेन ईश्वरस्यापि व्यापनमेव तदर्थः । एवं तत्तद्द्रव्याक्रान्ततावत्प्रदेशसम्बन्धित्वेऽपि ब्रह्मणः तदतिरिक्त-तद्विभक्त-देशान्तरस्य बहुत्वात्, तत्रापि व्याप्तिमत्त्वमेव बहिर्व्याप्तिशब्दार्थः, इति ग्रहणात् नैव द्वितीयवाक्यस्य नैरर्थक्यमपि इदमेव हि वाक्यद्वयप्रतिपादितं समासेन सर्वद्रव्यसर्वप्रदेशसम्बन्धित्वं नाम - यत् प्रतिद्रव्यं अविभक्तः (स्वाक्रान्तः) विभक्तश्च (अनाक्रान्तः) इति निरूप्यः यः प्रदेशः तत्र सर्वत्र वर्तमानत्वमिति । तत्र अविभक्तविभक्त-देशयोरेव तत्तत्पदार्थापेक्षया अन्तर्बहिश्शब्दाभ्यां व्यवहारात् तदुभयस्थलव्याप्तिः ब्रह्मणः अक्षतैवेति सिद्धम् । एवं च, वस्तुनः अन्तरवयवसम्बन्धित्वं अन्तर्व्याप्तिः - तस्यैव बाह्यावयवैः सम्बन्धित्वं बहिर्व्याप्तिः - इति नार्थः ।। किन्तु - प्रतिघातविरहेण तद्वस्तुसमदेशवर्तितं अन्तर्व्याप्तिः - तदभिन्नदेशवर्तिता बहिर्व्याप्तिः - इति निष्कर्षः ।। -

एवं गीताभाष्यतात्पर्यचन्द्रिकायां "अविनाशि तु तद्विद्धि" इत्यादिश्लोकव्याख्याने अन्ते, ईश्वरस्य जीवान्तर्भागप्रवेशेपि तदनाशकत्वं तत्संकल्पविरहादिति निर्णयद्भिः श्रीदेशिकैः यदुक्तम् - तदेवम् ।

"अतः इति - उक्तहेतुद्वयेन शस्त्रादेरनाशकत्वात् आत्मनोऽपि सूक्ष्मतरस्य तन्नाशकस्य अन्यस्यादर्शनात्, ईश्वरस्यापि तन्नाशसंकल्पाभावादिति भावः" । इति । अत्र "आत्मनोऽपि सूक्ष्मतरस्य तन्नाशकस्य अन्यस्यादर्शनात्" इत्युक्त्वा पुनरपि ईश्वरस्य तन्नाशसंकल्पाभावकथनात् सूक्ष्मतरस्येश्वरस्य श्रुत्युक्तरीत्या आत्मान्तःप्रवेशसम्भवेऽपि, तथा संकल्पाभावादेव तदविनाश इति स्पष्टीकृतम् ।।

तथा कठोपनिषद्भाष्ये श्रीरंगरामानुजमुनीन्द्रैः "अणोरणीयान्" इत्येतद्विवरणे, "अणोः - सर्वाचेतनापेक्षया सूक्ष्मात् चेतनात् - अणुतरः - ततोऽपि सूक्ष्मत्वात् तदन्तःप्रवेशयोग्य इत्यर्थः" - इत्युक्तमपीह स्मरणार्हम् ।

एवं न्यायसिद्धाञ्जन-तत्त्वत्रयव्याख्यानादिपरिशीलनेन उभयकलानुबन्धिना विवादं अत्रानुचितं मन्यामहे ।।

भगवतो विचित्रशक्तिः

तत् - प्रकृतं सर्वव्याप्तं ब्रह्म एजति - कम्पते चलतीव, चलनफलस्य देशान्तरप्राप्तेः तत्र सत्त्वात् । वस्तुतः तद् - ब्रह्म नैजति - न चलति विभुनि तस्मिन् क्रियायोगासम्भवात् ।

तद् - ब्रह्म दूरे - विप्रकृष्टदेशे वर्तते तदु तदेव ब्रह्म अन्तिके- सन्निकृष्टदेशे च वर्तते विभुत्वेन सर्वदेशवर्तित्वस्वभावत्वात् । यद्वा आसुर-प्रकृतिकजीवापेक्षया दूरे तद् ब्रह्म दैवप्रकृतिकजीवापेक्षया तु अन्तिके एव वर्तते ।

एवं वैलक्षण्यद्वयं पूर्वार्धेन प्रदर्श्य तृतीयं वैलक्षण्यं परार्धेन दर्शयति । तद्-सर्वव्यापकं ब्रह्म अस्य प्रत्यक्षादिप्रमाणगम्यस्य सर्वस्य - वस्तुनः अन्तः - अभ्यन्तरे वर्तते । तदैव च अस्य सर्वस्य बाह्यतः - बहिरपि वर्तते ।

'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' (तै.ना.94) इति तैत्तिरीयश्रुतेरपि अयमर्थः सिद्ध्यति । न हि युगपदेव किमपि कस्यचिदन्तर्बहिश्च भवति, ब्रह्म तु तथास्ति सर्वेषामिति विस्मयावहमिदं वैलक्षण्यमिति ध्येयम् ।।

## सुबोधिनी

उक्तमेवार्थं मुखान्तेणोपदिशति तदेजति इति ।

स्वयं चलति, न चलति च । विभुत्वात् न चलति चलनफलव्याप्तिमत्वात् चलतीत्युक्तिः । दूरे चान्तिके च - अन्तरात्मतया सर्वदेशव्यापित्वात् । तत् - ब्रह्म , सर्वस्यान्तर्बहिश्च । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' (तै.ना.94) इति श्रुतेः । इदमखिलं वैलक्षण्यज्ञापकम् । न हि लौकिकः कश्चिच्चलति न चलतीत्याद्युक्तस्वभावः ।

यद्वा - एजति - चलति स्वतनुभूतेन अनेन जंगमेन, नैजति - स्वरूपतो न चलति । एजति - स्वासाधारणदिव्यमंगलविग्रहेण चलति, नैजति - स्वरूपात् न च्यवतीति वा । तद्दूरे - अविदुषां दूरे, अगोचरमिति यावत् । तद्वन्तिके - तदेव विदुषां समीपे, गोचर इत्येतत् । अन्यद्यथाव्याख्यातम् ।

## षष्ठमन्त्रः

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ।।6।।

## प्रतिपदार्थदीपिका

**यः** - तत्त्वज्ञानी, **सर्वाणि भूतानि आत्मनि** - परमात्मनि विद्यमानानि पश्यति **आत्मानं च, सर्वभूतेषु** - ब्रह्मादिस्थावरान्तेषु च विद्यमानं पश्यति, तस्य सर्वव्यापकत्वात्, सर्वाधारत्वात् इत्यर्थः । सः ज्ञानी तु **ततः** - तेषु **न विजुगुप्सते** - तान् आत्मनः न निन्दतीति भावः। 'एतत् जगत् ब्रह्मात्मकम्' इत्यनुसन्धातुः अनुष्ठानमिदम् ।।

## वेदान्ताचार्यभाष्यम्

### सर्वस्य ब्रह्मात्मकत्वानुसन्धाने प्रयोजनम्

एवं सर्वस्य ब्रह्मात्मकत्वमुक्तकम् । अथ तद्विदः साम्प्रतिकं प्रयोजनमाह - **यस्तु— जुगुप्सत इति** । ब्रह्मविन्माहात्म्ये विशेषद्योतनाय 'तु' शब्दः । **सर्वाणि भूतानि**- ब्रह्मादिस्थावरान्तानि । अत्र आत्मशब्दः संकोचकाभावात् प्रकरणात् अर्थस्वभावाच्च सर्वान्तरात्मविषयः । पृथिव्यादिभिः ध्रियमाणमपि तन्मुखेन परमात्मनि एव स्थितम् इति एवकाराभिप्रायः । **अनुपश्यति** - अनुस्यूतं विशदं निध्यायति । **सर्वभूतेषु चात्मानम्** इति व्याप्तिमात्रपरम्, तस्य तैः धार्यत्वाभावात् । स इति प्रतिनिर्देशः अध्याहार्यः । **ततो न विजुगुप्सते** - ब्रह्मात्मकत्वेन अनुदृष्टेषु सर्वेषु [1]'स्वात्मविभूतिन्यायात्' कुतश्चिदपि न विजुगुप्सते । क्वचिदपि निन्दा न करोतीत्यर्थः ।।

---

1. **"स्वात्मविभूतिन्यायात्" इति आत्मविभूतिः - परमात्मशेषभूतविभूतिरित्यर्थः । स्वस्यैव सर्वस्यापि परमात्मविभूतौ अन्तर्भावानुसन्धानदार्ढ्यमिह विवक्षितम् । तथा च - "अद्वेष्टा सर्वभूतानां" (12-13) इत्यादि भगवद्गीताभाष्य-दर्शितरीत्यास्वप्रहर्तर्यपि पुरुषे "मदपराधानुगुणमीश्वरप्रेरित एवायं मह्यमपकरो"तीति अहमिव सोऽपि ईश्वरपरतन्त्र एवेति अनुसन्धानात् अद्वेषो हि भवति ब्रह्मात्मकत्वानुसन्धायिनः पुरुषस्य । यथा - राजा स्वभृत्य भृत्यान्तरेण प्रहारयति चेत्, प्रहृतो भृत्यः प्रहर्तति भृत्ये न द्वेषवान् भवति तस्यापि स्वाम्यायत्तत्वधिया - तद्वदिति स्वात्मविभूतिन्यायार्थोऽवधेयः।। श्रीरंगाचार्यभाष्ये इतोऽपि स्पष्टमिदम् ।।**

## ईशावास्यप्रकाशिका

एवं सर्वस्य ब्रह्मात्मकत्वमुक्तम् ; अथ 'सर्वं जगत् ब्रह्मात्मकम्' इत्यनु-[1]सन्दधानस्य प्रयोजनम् आह - **यस्तु सर्वाणि** इति ।

**यः** - तत्त्वज्ञानी, अधिकारिणो माहात्म्यज्ञापनाय 'तु' शब्दः । **सर्वाणि भूतानि**- ब्रह्मादिस्थावरान्तानि, **आत्मन्येव** - परमात्मन्येव, अनुस्यूतं **पश्यति** - निदिध्यासति इत्यर्थः। पृथिव्यादिभिः ध्रियमाणमपि तन्मुखेन परमात्मन्येव स्थितम् इत्येवकाराभिप्रायः । किंच, **सर्वभूतेषु चात्मानम्** - परमात्मानं यः पश्यति ; इदं व्याप्तिमात्रपरम् ; परमपुरुषस्य अनन्याधारत्वात् इति भावः । यच्छब्दस्य स इति प्रतिनिर्देशोऽध्याहार्यः । **सः** - उक्ततत्त्वज्ञानी, **ततः** - तेषु ; सप्तम्यर्थे तसिः । ब्रह्मात्मकतया दृष्टेषु सर्वेषु भूतेषु इत्यर्थः । **न विजुगुप्सते** - कुतश्चिदपि न बीभत्सते 'स्वात्मविभूतिन्यायात्' क्वचिदपि निन्दां न करोतीति भावः ।।

## श्रीरंगाचार्यभाष्यम्

**जगतो ब्रह्मात्मकतयाऽनुसन्धानस्य फलम्**

प्राक् मन्त्रद्वयेन ईट्छब्दवाच्यस्य आत्मनः स्वेतरसर्वातिशायिशक्तिमत्त्व-सर्वान्तरात्मत्वलक्षणस्वरूपकथनेन जगतः सर्वात्मना तन्नियाम्यत्वपर्यवसन्नं तदात्मकत्वम् उक्त्वा ब्रह्मविदः तदनुसन्धानावश्यकत्वज्ञापनाय तदनुसन्धान-फलम् अभ्युदयमपि आह - षष्ठेन मन्त्रेण ।

**अस्य पदविवरणम्** - **यस्तु** - ब्रह्मविन्मुमुक्षुस्तु, अत्र तुकारेण -

'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः'।। ( भ.गी.7-3)

इति गीतावचनोक्तरीत्या ज्ञानविशेषपरिपाकलक्षणवक्ष्यमाणमहिमा कस्यचिदेव सम्भवति; न तु सर्वस्य इति तादृशमहिमशालिनो दौर्लभ्यं ज्ञाप्यते । **सर्वाणि भूतानि**- ब्रह्मादीनि स्थावरान्तानि परमात्मव्यतिरिक्तसर्वभूतानि, **आत्मन्येव** पूर्वोक्तईट्छब्द-वाच्यपरमात्मलक्षणैकात्मन्येव, **अनुपश्यति** - अनुसन्धत्ते, तदायत्तस्थितिकान्येव अनुसन्धत्ते इत्यर्थः । तेषां पृथिव्यादिधार्यत्वेऽपि पृथिव्यादीनामपि आधारपर्यालोचने

1. सन्धानस्य - क.

अन्ततः परमात्मन एव प्रधानाधारत्वात् तदायत्तैव सर्वभूतस्थितिः; नान्यायत्ता, इत्यंशः एवकारेण इह विवक्षितः । किंच - **सर्वभूतेषु** - यथोक्तलक्षणेषु, **आत्मानम्**- यथोक्तलक्षणं परमात्मरूपम् एकात्मानम्, **अनुपश्यति** - अत्र परमात्मनो नियमनार्थ-सर्वान्तःस्थितिरूपान्तर्यामित्वमात्रमुच्यते; न तु परमात्मस्थितेः सर्वभूतायत्तत्वमुच्यते, अन्योन्याश्रयप्रसंगात् प्रमाणान्तरानुरोधाच्च । इदं च वैचित्र्यं गीताशास्त्रे -

'मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।

मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः' ।। (भ.गी.9-4) इत्यनेन,

'भूतभृन्न च भूतस्थो ममात्मा भूतभावनः'। (भ.गी.9-5) इत्यनेन च भगवता स्वयमेवोक्तम् ।

तथा च कृत्स्नं जगत् स्वान्तर्नियन्तृतया अवस्थितब्रह्मात्मकमिति योऽनुसन्धत्त इत्यर्थः । स इत्यध्याहार्यम् 'यत्तदोर्नित्यसम्बन्धात्' । **सः** - तादृशो ब्रह्मवित्, **ततः**- यथोक्तलक्षणब्रह्मात्मकतयाऽनुसंहितेभ्यः सर्वभूतेभ्यः, **न विजुगुप्सते** - खेद-जनकत्वानुसन्धानमूलमनोनिवृत्तिः जुगुप्सा, तां न भजते ।

ध्रुवमपायेऽपादानम्' (पा.सू.1-4-24) इति सूत्रभाष्योदाहृतेन 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' (वा.1079) इति वार्तिकेन अपादानसंज्ञया तत इत्यत्र पंचम्यर्थे तसिः । गुपधातोर्भौवादिकात् निन्दार्थे 'गुप्तिज्किद्भ्यस्सन्' (पा.सू.3-1-5) इत्यनुशासनेन 'गुपेः निन्दायाम्' (वा.1687) इति वार्तिकानुगृहीतेन सन् । 'गुप्तिज्कितमाना अनुदात्तेतः' इति भाष्येऽनुदात्तेत्त्वाभिधानात् आत्मनेपदमिति बोध्यम् ।

### जुगुप्सानुदयप्रकारस्य विवरणम्

अयमत्र भावः - भूतेषु स्वखेदजनकत्वानुसन्धानेन हि तेभ्यः कश्चिन्निवर्तते- तानि द्विषन्; सर्वभूतानां नियन्तृभूतब्रह्मात्मकत्वानुसन्धाने सति स्वखेदजनक-तच्चेष्टायाः स्वकर्मानुगुणफलदानायतदन्तर्यामिनियन्तृपरमात्मायत्तत्वानुसन्धाने सति तेषु स्वखेदजनकत्वानुसन्धाननिवृत्त्या तन्मूला तेभ्यो मनोनिवृत्तिरूपा जुगुप्सा

न जायत इति । ईदृशजुगुप्सानुदयेन किं प्रयोजनम् इति चेत् ? जुगुप्सायां सत्यां तत्प्रतियोगिषु भूतेषु द्वेषमूलोत्तरोत्तरसंसाराभिवृद्धिप्रसंगेन, [1]तदनुदये तदभावलक्षणं मुमुक्षोरपेक्षितं परमं फलं सिद्ध्यतीत्याशयः ।

तस्मात् ब्रह्मविदः मुमुक्षोः कृत्स्ने जगति ब्रह्मात्मकत्वानुसन्धानम् अत्यावश्यकम् इति मन्त्रतात्पर्यम् ।

### माध्यन्दिनपाठः, तदुपपादनं च

अस्मिन्मन्त्रे 'आत्मन्येवानुपश्यति' इत्यत्र, 'आत्मन्नेवानुपश्यति' इति, 'विजुगुप्सते' इत्यत्र 'विचिकित्सति' इति च माध्यन्दिनानां पाठः । तत्पक्षे 'आत्मन्नेव' इत्यत्र सप्तम्याः छान्दसो लुक् । 'न विचिकित्सति' इत्यस्य न संशेत इत्यर्थः । 'ततः' इत्यत्र सप्तम्यर्थे तसिः इति बोध्यम् । तत्रापि ब्रह्मात्मकत्वेन अनुसंहितेषु भूतेषु प्रागुक्तहेतुना स्वखेदजनकत्वसंशयं ब्रह्मवित् न प्राप्नोति । ततश्च तेषु द्वेषानुदयेन संसारवृद्धेर्नावकाश इति पूर्वोक्तभाव एव पर्यवसानं बोध्यम् ।

'कित-निवासे रोगापनये संशये च' (पा.धा.993) इति धातोर्भौवादिकात् 'कितेर्व्याधिप्रतीकारे निग्रहेऽपनयने नाशने संशये च' (वा.1689) इति वार्तिकानुगृहीतेन पूर्वोक्तानुशासनेन संशयार्थे सन् । 'गुप्तिज्किदभ्यः सन्' इत्यत्र 'अनुक्रमदर्शनाय कितिः पठितः, न तु अयमनुदात्तेत्' इति कैयटेन कितेः अनुदात्तेत्त्वे तात्पर्याभाववर्णनात् नात्र आत्मनेपदम् । अनुदात्तेत्त्वनिबन्धनस्य आत्मनेपदस्य क्वचित् ज्ञापकवशात् अनित्यत्वाश्रयणाद्वा नेह आत्मनेपदम् ।

### शांकरव्याख्याऽनुपपत्तिः

यत्पुनरत्र, आत्मपदस्य अनुसन्धातुर्मुमुक्षोः स्वात्मस्वरूपपरतामाश्रित्य 'यस्तु परिव्राट् मुमुक्षुः - सर्वाणि भूतानि अव्यक्तादीनि स्थावरान्तानि आत्मन्येव अनुपश्यति- आत्मव्यतिरिक्तानि न पश्यतीत्यर्थः । सर्वभूतेषु च तेष्वेव च - आत्मानं - तेषामपि

1. "तदनुदये --- परमं फलं'मिति - तच्छब्देन पूर्वोक्तद्वेषपरामर्शः। द्वेषानुदये - इत्यर्थः । "अद्वेष्टा - इत्यादिगीताश्लोकोक्तमेव "स मे प्रियः" इति भगवत्प्रियत्वं परमं फलमित्यर्थः । तत्र हि अद्वेषमैत्र्यादिगुणशालिन एव भगवता स्वप्रियत्वोक्तिः।।

भूतानां स्वम् आत्मानम् आत्मत्वेन, अनुपश्यति, सः ततः - तस्मादेव दर्शनात्, न विजुगुप्सते - जुगुप्सा-घृणा न करोति' इति शंकरकृतं व्याख्यानम् ; तदसमंजसम्, उदक्षरत्वात्, अर्थबाधात्, व्याघातात्, प्रकरणविरोधात् ; न विजुगुप्सते इत्युक्त-घृणानिवृत्तिं प्रति ततः पूर्वभागप्रतिपाद्यतया विवक्षितस्य अर्थस्य हेतुत्वासम्भवाच्च ।

यथा हि 'भूतल एव घटं पश्यति' इति वाक्येन घटस्य भूतलवृत्तित्वदर्शन-तदितरवृत्तित्वादर्शनैतदुभयविषयकबोध एव जायते, न तु घटस्य भूतल-व्यतिरिक्तत्वादर्शनविषयकबोधोऽपि ; तथैव - 'सर्वाणि भूतान्यात्मन्येवानुपश्यति' इति वाक्येनापि सर्वभूतानाम् आत्मवृत्तित्वदर्शनतदितरवृत्तित्वादर्शनैतदुभयविषयक-बोध एव भवितुमर्हति ; न तु सर्वभूतानाम् आत्मव्यतिरिक्तत्वादर्शनाभाव-विषयकबोधोऽपि इत्यतः - 'आत्मव्यतिरिक्तानि न पश्यतीत्यर्थः' इति व्याख्यानमक्षराननुगुणमेव ।

एवं सर्वभूतशब्दस्य अव्यक्तादिस्थावरान्तजडपदार्थजातमात्रस्य अर्थतया विवक्षितत्वेन दर्शितव्याख्याने जडाजडयोः परस्परव्यतिरिक्तत्वादर्शनस्य, देहात्मैक्यदर्शनलक्षणविपरीतज्ञानपर्यवसन्नस्यैव विवक्षितत्वलाभेन अर्थबाधस्य दुरपह्नवत्वात्, - ईदृशविपरीतज्ञानस्य प्रत्युत संसारदुःखाभिवृद्धिहेतोः घृणानि-वृत्तिहेतुत्वासम्भवाच्च असामंजस्यं दुर्वारम् ।

एवं 'सर्वभूतेषु चात्मानम्' इत्यत्र शरीरस्थानीय सर्वभूतानि प्रति स्वात्मस्वरूपस्य आत्मत्वेन दर्शनस्यैव विवक्षिततया सर्वभूतानाम् आत्मनश्च भेददर्शनस्यैव सिद्धेः ; पूर्ववाक्यार्थस्य अभेददर्शनपर्यवसायिन एव विवक्षितत्वाच्च परस्परव्याघातोऽपि भवति । यदि च भूतजातस्य आत्मन इह विवक्षितव्यतिरिक्तत्वादर्शनाभावो न तयोः स्वरूपैक्यदर्शनपर्यवसायी ; अपि तु अपृथक्सिद्धविशेषणविशेष्यभावनिबन्धन परस्पराविनाभावलक्षणाभेददर्शनपर्यवसाय्येव विवक्षितः ; अतो नात्र व्याघातप्रसंग इति मन्यते ; तदाऽपि, अजडस्य अतिनिर्मलस्य आत्मनः सर्वदोषाकरजडवस्तु-संसर्गदर्शनस्यैव विवक्षितत्वसिद्ध्या तस्य प्रत्युत जुगुप्साहेतुताया एव सम्भवेन

तन्निवृत्तिहेतुत्वासम्भवात् वाक्यार्थासंगतिः दुर्वारैव । स्वस्मिन्नमेध्यसंसर्गदर्शनस्य हि जुगुप्साहेतुता सर्वलोकसाक्षिका दृश्यते ।

एवम् - अत्रत्यात्मशब्दस्य मुमुक्षुचेतनस्वात्मस्वरूपपरतावर्णनमपि अयुक्तम् ; पूर्वं प्रथममन्त्रे, ईशेति 'ईट्'छब्देन ईश्वरत्वेन कंचिदात्मानं निर्दिश्य तदभिन्नस्य ईशितव्यस्य कृत्स्नस्य जगतः तच्छेषतां प्रतिपाद्य, ईश्वरत्वेन निर्दिष्टस्य आत्मनः शास्तृत्वरूपेश्वरत्वशालितया तच्छासनातिलंघने तदधीनदण्डप्रसंगपरिहाराय तदीशितव्यतच्छेषभूतजगदन्तर्गततदितरचेतनसामान्येन तच्छासनानुवर्तिना तदधीनेनैव वर्तितव्यमिति तच्छासनानुवृत्तिप्रकारं 'तेन त्यक्तेन भुंजीथाः' इति 'मा गृधः कस्यस्विद्धनम्' इति 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इति च प्रथमं मन्त्रद्वयेन ज्ञापयित्वा ; ईदृश ईशेशितव्य शेषशेषिभावज्ञानतदधीनेश्वर-शासनानुवर्तनविरहिणाम् महानर्थप्रसंगं तृतीयमन्त्रेण प्रदर्श्य, ततो बहुषु आत्मसु सत्सु कस्यचित् एकस्य आत्मनः परम् इतरैः सर्वैः अनुवर्तनीयशासनत्वं कुत इत्याकांक्षायाम् ईट्छब्दनिर्दिष्टस्य आत्मनः सकलेतरात्मातिशायिशक्तिमत्वसर्व-जगत्कारणत्वसर्वभूतान्तरात्मत्वलक्षणस्वरूपप्रतिपादनमुखेन नियन्तृतया अन्तर्यामि-भूतेश्वरात्मकत्वं सर्वप्रकारतन्नियाम्यत्वरूपं जगतः चतुर्थपंचममन्त्राभ्यां प्रतिपाद्य, स्वेष्टसाधनतया कृत्स्नस्य जगतः पूर्वमन्त्रोक्ताकारानुसन्धानं मुमुक्षोः ब्रह्मविदः आवश्यकमिति ज्ञापनाय प्रवृत्तत्वात् अस्य षष्ठमन्त्रस्य । अस्मिन् प्रकरणे ब्रह्मविदो मुमुक्षोः स्वात्मस्वरूपे सर्वभूतान्तरात्मत्वानुसन्धानस्य प्रसंगलेशाभावात् ; ईट्छब्द-निर्दिष्टस्यआत्मनःएकस्यैवसकलेतरातिशायिशक्तिमत्वस्वेतरचेतनाचेतनलक्षणसर्व-वस्त्वन्तरात्मत्वादिप्रतिपादनेन अन्यस्यात्मनः कस्यापि तथाविधाकारासम्भवाच्च ।

### आत्मैक्यप्रतिपादनपरत्वाऽसम्भवः

न च - आत्मतत्त्वस्य एकत्वेन तस्यैव स्वस्मिन् परेषु च वर्तमानत्वात् तस्यैव ईट्छब्दवाच्यात्मस्वरूपत्वाच्च आत्मभेदाभावेन मुमुक्षोः ब्रह्मविदः स्वात्मस्वरूपे

सर्वभूतशब्दिताव्यक्तादिस्थावरान्ताचेतनभागान्तर्वर्तित्वमात्रलक्षण-सर्वभूतान्तरात्मत्वाकारानुसन्धानम् इहाभिधीयते इति नात्र विरोध इति - वाच्यम् ; ईट्छब्देन ईश्वरत्वेन कस्यचिदात्मनो निर्देशेन अन्यस्य कृत्स्नस्य जगतः ईशितव्यत्वसिद्धेः ईशितव्यान्तर्गतेतरात्मनाम् ईट्छब्दवाच्यात्मशासनानुवर्तनविधानाच्च पूर्वमात्मभेदस्यैवास्मिन् प्रकरणे सुव्यक्तं प्रतिपादनदर्शनात् आत्मैक्यप्रतिपादनगन्धानुपलम्भाच्च ।

एतेन एतदनुसारिमहीधरादिव्याख्यानमपि निरस्तं वेदितव्यम् । तस्माद्यथोक्तरीत्यैव अर्थो बोध्यः ।।

## आनन्दभाष्यम्

पूर्वमन्त्रोक्तं सर्वस्य ब्रह्मात्मकत्वं योऽनुसन्धत्ते स क्वचिदपिनिन्दां न करोतीति ऐहिकं फलम् अस्याह - यस्तु इति ।

**यः** - उपासकः, **सर्वाणि भूतानि** - आब्रह्मस्तम्बपर्यन्तानि स्वतन्त्रतया प्रतीयमानानि **आत्मनि** - परमात्मनि एव - एकस्मिन् सूत्रे मणिगणानिव अनुस्यूतानि **अनुपश्यति** - अनुसन्धत्ते, किंच तेषु **सर्वभूतेषु आत्मानं** - परमात्मानं मणिगणेषु सूत्रमिवानुप्रविष्टम् अनुपश्यति । **स** एवंविधानुसन्धानकर्ता । **ततः** - सप्तम्यर्थे तसेर्विधानात् तेषु आब्रह्मस्तम्बपर्यन्तेषु भूतेषु ब्रह्मात्मकतया अवगतेषु ब्रह्मणः शरीरभूतेषु **न विजुगुप्सते** - नं निन्दां कुरुते ; स्वात्मविभूतित्याऽवगमात् इति भावः।

## सुबोधिनी

अखिलं ब्रह्मात्मकमनुसन्दधानस्य विशेषमाह -- **यस्तु** इति ।

**यः** - उपासकः, **सर्वाणि भूतानि** - स्वतन्त्रतया प्रतिभासमानानि विविधानि आब्रह्मस्तम्बपर्यन्तानि **आत्मन्येव** - परमात्मन्येकस्मिन्नेव **अनुपश्यति** - सूत्र इव मणीनिति यावत् । **सर्वभूतेषु चात्मानम्** - एकं परमात्मानं, पश्यति इति अनुषंगः । मणिषु सूत्रं प्रविष्टमिव इति यावत् । **सः** - एवमनुसन्दधानः **ततः** - ब्रह्मात्मकतयाऽवगतेषु तेषु **न विजुगुप्सते** - न निन्दां करोति ।

यः सर्वाणि भूतानि एकेन परमात्मना अन्तर्यामिस्वरूपेण अनुप्रविश्य अवधृततया तदेकात्मकानि पश्यति, न तस्य क्वचिदपि जुगुप्सावकाशः, स हि सर्वमेव ब्रह्मात्मकं ब्रह्मणः तनुभूतं मन्यते इति भावः ।

## सप्तमो मन्त्रः

**यस्मिन् सर्वाणि भूतानि आत्मैवाभूद्विजानतः ।
तत्र को मोहः कश्शोकः एकत्वमनुपश्यतः ।। 7 ।।**

### प्रतिपदार्थदीपिका

वैयधिकरण्येन उक्तं सर्वस्य ब्रह्मात्मकत्वं सामानाधिकरण्येन द्रढयन् तथानुध्याननिष्ठस्य शोकमोहनिवर्तनं भवतीत्याह - यस्मिन् इति ।

यस्मिन् उपदेशकाले विजानतः - स्वतन्त्रपरतन्त्ररूपभेदेन जीवेश्वरयोः स्वरूपं विजानतः, **सर्वाणि भूतानि** - चराचराणि, **आत्मैवाभूत्** - सर्वस्य भगवच्छरीरत्वेन परमात्मैवाभूत् । **तत्र** - अनुध्यानसमये, **एकत्वमनुपश्यतः**, एकत्वम्- 'रामसुग्रीवयोरैक्यम्' (रा.सु.35-52) इतिवत् जगद्ब्रह्मणोः विभागानर्हसम्बन्ध-विशेषवत्त्वम् अनुध्यायतः, **को मोहः** - स्वतन्त्रात्मभ्रमादिलक्षणो मोहः, **कः शोकः**- सर्वस्य परमात्मविभूतितया पुत्रमरणराज्यापहरणादिरूपश्शोकश्च न सम्भवतीति भावः ।

### वेदान्ताचार्यभाष्यम्

पुनरपि सर्वस्य ब्रह्मात्मकत्वं सामानाधिकरण्येन द्रढयन् तथानुदर्शनस्य सद्यश्शोकनिवर्तकत्वमाह - **यस्मिन् --------पश्यतः** इति ।

**जगतः ब्रह्मात्मकत्वेनानुसन्धानस्य फलम्**

**यस्मिन्** - प्रणिधानसमये । **विजानतः** - स्वतन्त्रपरतन्त्रवस्तुभेदं सम्यगुपदिष्टेन मार्गेण शास्त्रेण विविच्य जानतः । **आत्मैव सर्वाणि भूतानि अभूत्** - परमात्मैव सर्वविशिष्टः प्रतीत इत्यर्थः । 'देवोऽहम्' इत्यादिवत् लोकवेदमर्यादया शरीरात्म-भावेनजगद्ब्रह्मसामानाधिकरण्येसम्भवति[1]बाधोपचारस्वरूपैक्यादिपक्षाबहिष्कार्याः। **तत्र** - तदा, **को मोहः** - स्वतन्त्रात्मभ्रमादिलक्षणो मोहो न सम्भवति इत्यर्थः ।

---

1. 'बाधोपचारे'त्यादि - एतत्पक्षत्रयविवरणं यात्स्यनारायणमुनिभाष्ये ईशावास्यप्रकाशिकायां स्पष्टं भविष्यति । आदिपदेन तु 'पुरोहितोऽयं राजा संवृत्तः' इति साम्यपक्षो ग्राह्यः।

कश्शोकः - परविभूतिभूते सर्वस्मिन् निर्ममत्वसिद्ध्या पुत्रमरणराज्यहरणादावपि न कश्चिच्छोकः स्यादित्यर्थः । यथाह -

'अनन्तं बत मे वित्तं यस्य मे नास्ति किंचन ।

मिथिलायां प्रदीप्तायां न मे किंचित्प्रदह्यते' ।। इति । (म.भा.शां.17-223)

एकत्वमनुपश्यतः - सर्वविशिष्टैक्यम् अनुपश्यतः । न हि अयम् एकशब्दः एकव्यतिरिक्ताभावपरः, 'ईशावास्यमिदं सर्वम्' (ई.उ.1) इति ईश्वरव्याप्तत्वेन प्रक्रान्तस्य कस्यचित् केनचिदपि बाधाभावात्, सर्वभेदमिथ्यात्व[1]वेदनावेदनयोः कथंचिदपि तादृशैक्योपदेशादि प्रवृत्त्ययोगाच्च । [2]न चासौ परस्परविरुद्धानां स्वरूपैक्य प्रतिपादकः ; सर्वव्याघातोत्सादने स्वपरमतविवेकादिविप्लवप्रसंगात् ।

**सिद्धान्ते सामानाधिकरण्योपपत्तिः**

विशिष्टैकत्वविवक्षा तु सर्वप्रमाणानुगुण्यात् भाव्यते । ततोऽपि वरमत्र प्रकृत-सामानाधिकरण्यनिर्वाहानुगुणसम्बन्धविवक्षा । प्रयुज्यते हि सम्बन्धविशेषविवक्षया 'रामसुग्रीवयोरैक्यम्' (रा.सु.35-52) इत्यादिषु एकशब्दः । एतौ च श्लोकौ यद्यपि मुक्तविषयतया नेतुं शक्यौ, तथापि, पूर्वानुगुण्यात् मुमुक्षुप्रशंसार्थत्वम् उचितम् ।

**दर्शनशब्दार्थविवेचनम्**

ततश्च वैशद्यातिशयविवक्षया शास्त्रजन्यज्ञानेन तन्मूलोपासनात्मकज्ञानेन दर्शनवाचोयुक्तिः । समाधिविशेषफलभूतस्तु अद्यतनसाक्षात्कारः उपायत्वेन

---

1. "वेदनावेदनयोः" इति तयोः सतोः, इति सप्तमी । अयं भावः । गीताभाष्ये 'नत्वेवाहं जातु नासं' इति द्वितीयाध्यायगतश्लोकव्याख्यानावसरे जगन्मिथ्यात्ववादिनामद्वैतिनामुपरि उपदेशानुपपत्तिदोषं आपादयद्भिः श्रीभाष्यकारैरुक्तं इहानुसन्धेयम् । गुरोः सर्वभेदप्रपंचमिथ्यात्ववेदनमस्तिचेत् 'एकत्वमनुपश्यतः को मोहः' इत्यादिना शिष्यं प्रत्युपदेशप्रवृत्त्यसम्भवः । शिष्यस्य मिथ्यात्वात् । तादृशमिथ्यात्ववेदनाभावे गुरोरेव तत्त्ववेदनविरहात् न तरां ऐक्योपदेशप्रवृत्तिसम्भवः - इति भावः ।

2. 'न चासौ परस्परविरुद्धानां' इति परस्परविरुद्धधर्माश्रयतया भिन्नानामेव पदार्थानां केनचिदाकारान्तरेण स्वरूपैक्यं वदन्ति भेदाभेदवादिनः जैनाः भास्करयादवप्रकाशादयश्च । तन्मतदूषणं स्वपरमत-विवेकादिविप्लवप्रसंग इति । भिन्नयोरपि अभेदोक्तौ यथास्था, तर्हि इदं मम मतं - इदं च परमतमिति खण्डनमण्डनादिप्रवृत्तिरपि तत्र विलीयेतेत्यर्थः । अतः अपृथग्विशेषणतासम्बन्धेन जगतो ब्रह्मणा विशिष्टैक्यदर्शनमेव 'एकत्वमनुपश्यतः' इत्युक्तमिति प्रघट्टकार्थः ।।

अभिहितत्वात् [1]न अत्र प्रसंजनीयः । मोक्षोपायोपदेशपरेषु सर्वेषु वाक्येषु दर्शनशब्द उपासनविषय इति शारीरकभाष्ये प्रत्यपादि ।

## ईशावास्यप्रकाशिका

### अपृथक्सिद्धविशेषणतयानुसन्धानफलम्

एवं वैयधिकरण्येनोक्तं सर्वस्य ब्रह्मात्मकत्वं सामानाधिकरण्येनापि दृढयन् तथानुध्यानस्य सद्यश्शोकमोहनिवर्तकत्वम् आह -- **यस्मिन् सर्वाणि** इति ।

**यस्मिन्** - प्रणिधानसमये, **विजानतः** - 'ईशावास्यम्' (ई.उ.1) इत्यारभ्य 'ततो न विजुगुप्सते' (ई.उ.6) इत्येवमन्तेन उपदिष्टं स्वतन्त्रपरतन्त्रवस्तुभेदं यथोपदेशं विविच्य जानतः इत्यर्थः । नन्वेवं अत्यन्तभेदाभ्युपगमे 'सर्वभूतान्यात्मैवाभूत्' इति सामानाधिकरण्यं भज्येत इत्याशंक्य तन्निर्वाहाय 'यस्य पृथिवी शरीरम्-----' (बृ.उ.5-7-7) 'यस्यात्मा शरीरम्' (बृ.उ.मा.पा.3-7-30) इत्यादि घटकश्रुतिसिद्धं सम्बन्धविशेषमाह -- **एकत्वमनुपश्यत** इति । आकृतिव्यक्त्योरिव गुणगुणिनोरिव च अत्यन्तभिन्नयोरेव जगद्ब्रह्मणोः एकत्वं विभागानर्हसम्बन्धविशेषं पश्यतः विशदतममनुध्यायत इत्यर्थः । 'रामसुग्रीवयोरैक्यं देव्येवं समजायत'(रा.सु.35-52) इत्यादिष्विव इहापि एकशब्दस्य सम्बन्धविशेष एवार्थो विवक्षितु युक्त इति भावः ।

---

1. 'न अत्र प्रसंजनीयः' इति । अयमेय साधुपाठः । 'न अत्र संशयनीयः' इति, 'न अत्र प्रशंसनीयः' इति च अपपाठद्वयम् । न संशयनीय इति सर्यथाऽपि असंबद्धम् । यस्तुतः संशयोदयायकाशयिरहात् एय द्वितीयपाठे 'न प्रशंसनीयः' इत्यपेक्षया 'न प्रसंजनीयः' इत्येय शोधनं युक्तम् । अयं भायः ।'दर्शनं तु पराभक्तिः' इति भगयत्साक्षात्काररूपदर्शनस्य परभक्तित्यमुक्तम् । तच्च समाधियिशेषफलभूतम् । स चायमनुभयो न मुक्तिकालीनः। किन्तु अद्यतन एय । प्राकृतदेहेऽपि यर्तमानाय स्यभक्ताय ज्ञानिने समाधिदशायां भगयान् स्यसाक्षात्कारदानेन सुखस्पर्शसंलापादिभिः तं प्रमोदयतीति दृष्टश्रुतं पराङ्कुशपरकालनाथमुन्यादिषु । तादृशसाक्षात्कारोऽपि एकत्यानुदर्शनशब्दार्थतया नात्र प्रसंजनीयः । तस्य प्रसंगो नात्रेति भायः । कुतः? मन्त्रे 'अनुपश्यतः' इति शोकमोहाभायं प्रति उपायत्वेनाभिहितत्यात् । इदमनुदर्शनं शोकमोहनियृत्तिसाधनभूतम् । स तु साक्षात्कारः समाधिफलभूतः । तस्य का नामात्र प्रसक्तिरिति यायत् । हेत्यन्तरं चात्र 'मोक्षोपायोपदेशे'त्यादिना अनन्तरयाक्ये यियृतम् । प्रायः उपायोपदेशपरयाक्येषु सर्यत्र श्रुतो दर्शनशब्दः दर्शनसमानाकारोपासनपर एयेति भाष्ये प्रतिपादनाच्च प्रकृतेऽपि अस्मिन् उपासनपरे सन्दर्भे न समाधिफलभूतसाक्षात्कारयियक्षा 'अनुपश्य'च्छब्दस्येति सारम् । अतः तत्प्रसंगोऽत्र नेति । स्तुतिरूपप्रशंसाया अत्रानयाकाशात् 'न प्रशंसनीय' इति पाठोऽस्यरस एय ।।

एवं च सत्याह -- सर्वाणि भूतान्यात्मैवाभूत् इति । परमात्मैव सर्वभूतशरीरकः प्रतीतोऽभूत् इत्यर्थः । तत्र तदा प्रणिधानसमये, को मोहः - स्वतन्त्रात्मभ्रमादिलक्षणो मोहो न सम्भवति । कश्शोकः - परमात्मविभूतितयावगते सर्वस्मिन्निर्ममत्वसिद्ध्या पुत्रमरणराज्यहरणादेरपि न कश्चिच्छोकस्स्यात् इत्यर्थः ।

यथाह --- 'अनन्तं बत मे वित्तं यस्य मे नास्ति किंचन ।

मिथिलायां प्रदीप्तायां न मे किंचित्प्रदह्यते'।। (म.भा.शां.17-223) इति ।

### सामानाधिकरण्यनिर्वाहवैविध्यम्

अत्र केचित् 'सर्वाणि भूतान्यात्मैवाभूत्' इति बाधार्थं सामानाधिकरण्यम्, तथा च आत्मैव सर्वाणि भूतानि, आत्मव्यतिरिक्तानि सर्वाणि न सन्तीत्यर्थः, यथा 'चोरः स्थाणुः' इति ; 'स्थाणुरेवायं, न चोरः' इति हि तस्यार्थः ; तथा इहापीत्याहुः ।

अन्ये तु 'नरपतिरेव सर्वे लोकाः' इतिवत् औपचारिकमिदं सामानाधिकरण्यम्, 'नरपत्यधीनास्सर्वे जनाः' इति हि तत्र निर्वाहः, तद्वदिहापि परमात्माधीनानि सर्वाणि भूतानि इति भावं वर्णयन्ति ।

अपरे तु 'घटशरावादयः सर्वे मृत्पिण्ड एव' इतिवत् जगद्ब्रह्मणोः एकद्रव्यत्वं परिकल्प्यैव इदं सामानाधिकरण्यं निर्वाह्यम् इत्याचक्षते ।

सिद्धान्तस्तु - 'देवोऽहम्, मनुष्योऽहम्' इत्यादिवत् शरीरात्मभावसम्बन्धेनैव जगद्ब्रह्मसामानाधिकरण्यनिर्वाहे सम्भवति सति बाधोपचारस्वरूपैक्यपक्षा, वैदिकैर्बहिष्कार्याः इति ।।

## श्रीरंगाचार्यभाष्यम्

पूर्वमन्त्रोक्तमेव जगतो ब्रह्मात्मकत्वं तदनुसन्धानफलं च पुनर्भङ्यन्तरेण निर्दिश्य दृढीकरोति सप्तमेन मन्त्रेण, अनयोः अर्थयोः सकृदभिधानमात्रेण निश्शङ्कं दुरवधरत्वात् ।

अस्य मन्त्रस्य पदविवरणम् - विजानतः - शास्त्रतः शनैश्शनैः सर्वं तत्त्वं विविच्य जानतः, शास्त्रजन्यविशुद्धज्ञानपरिपाकविशेषवत इत्यर्थः। मुमुक्षोः, यस्मिन्-

दशाविशेषे आत्मैव - यथोक्तलक्षणः परमात्मैव, सर्वाणि भूतानि - शरीरशरीरि-भावरूपापृथक्सिद्धविशेषणविशेष्यभावलक्षणाविनाभावसम्बन्धेन सम्मिलिततयासर्व-भूतरूपः । अत्र असन्धिश्छान्दसः । अभूत् - निश्चयविषयो भवति, 'छन्दसि लुङ् लङ् लिटः' (पा.सू.3-4-6) इत्यनुशासनेन लडर्थे लुङ् । धात्वर्थसत्ताया निश्चय-विषयत्वस्वरूपाया इह विवक्षिततया धातुनाऽयमर्थस्सुलभः । तत्र - तस्मिन् दशाविशेषे, एकत्वम् - सर्वभूतैस्सह परमात्मन एकवस्तुत्वं यथोक्तं सर्वभूतशरीरकत्वमिति यावत्। अनुपश्यतः - सम्यङ् निध्यायतो मुमुक्षोः, मोहः कः, शोकः कः - मोहो वा शोको वा कथं भवति? न भवत्येव इत्यर्थ इति बोध्यम् ।

**मोहशोकनिर्वचनम् तन्निवृत्त्युपायश्च**

अत्र मोहः कथम्भूतः ? शोको वा कथम्भूतः? सर्वभूतानां परमात्मनश्चेह विवक्षितमेकत्वं वा कथम्भूतम्? तज्ज्ञानेन कथं वा मोहशोकनिवृत्तिर्भवतीति चेत् ; इदमत्रावधेयम् - मोहोऽत्र स्वसजातीयेष्वात्मान्तरेषु स्वातन्त्र्येण स्वखेदजनकत्व-ज्ञानरूपः। शोकश्चात्र परैस्स्वपरिभवे कृते कथं तूष्णीं स्थेयमिति चिन्तया तूष्णीमवस्थानासहिष्णुः परदुःखजननप्रवृत्तिहेतुर्दुःखविशेषः । सर्वभूतानां परमात्मनश्च इह विवक्षितमेकत्वं शरीरशरीरिभावरूपापृथक्सिद्धविशेषणविशेष्यभावलक्षणा-विनाभावसम्बन्धेन परस्परसम्मिलितैकवस्तुसंघातान्तःपातित्वरूपम् । तच्च सर्व-भूतानां नियन्तृतयाऽन्तर्यामिभूतपरमात्मात्मकत्वरूपमेव । तस्मिंश्च निश्चिते परेषु स्वातन्त्र्येण स्वखेदजनकत्वमोहो निवर्तते ---

'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया' ।। (भ.गी.18-61)

इत्युक्तरीत्या नियन्तृतया अन्तर्यामिभूतपरमात्मनैव प्रधानभूतेन नियाम्यभूतै-रात्मान्तरैः स्वापराधानुगुणफलभोगहेतुरयं दण्डो दाप्यते ; न तु स्वातन्त्र्येण तैरयं क्रियत इति निश्चयात् । निवृत्ते च तादृशमोहे तदधीनो यथोक्तलक्षणश्शोकोऽपि निवर्तते ;अस्मदपराधानुगुणदण्डस्य ईश्वरेणैव करस्थानीयैरन्यैः कार्यमाणतया न तेषु

कश्चिदपराध इति चित्तसमाधिसम्भवात् । इत्थं समाहितचित्तस्य तेषु प्रतिक्रियाकरणप्रवृत्तिरपिनिवर्ततइति।गीताभाष्ये'निर्वैरस्सर्वभूतेषु'(भ.गी.11-55)'अद्वेष्टा सर्वभूतानाम्' (भ.गी.12-13) इत्यादिवचनव्याख्यानावसरे भाष्यकारैरपि ईदृशानुसन्धानेनैव स्वापकारिपरप्रतिक्रियाप्रवृत्तिनिवृत्तिसिद्धिः मुमुक्षोः प्रतिपादिता । यथोक्तं तत्र - 'स्वदुःखस्य स्वापराधनिमित्तत्वानुसन्धानात् सर्वभूतानां परमपुरुषपरतन्त्रत्वाऽनुसन्धानाच्च सर्वभूतेषु वैरनिमित्ताभावात् तेषु निर्वैरः' इति 'अद्वेष्टा सर्वभूतानाम्' (भ.गी.12-13) 'द्विषतामपकुर्वतामपि सर्वेषां भूतानाम् अद्वेष्टा मदपराधानुगुणम् ईश्वरप्रेरितान्येतानि भूतानि द्विषन्ति अपकुर्वन्ति च इत्यनुसन्दधानः' इति च ।

### 'सर्वं खल्विदं ब्रह्म' इत्यादि श्रुतिसम्मतिः

सर्वस्य जगत इत्थं ब्रह्मात्मकत्वलक्षणैक्यज्ञानस्य ईदृशानुसन्धानद्वारा मोहशोकनिवृत्तिलक्षणशान्तिहेतुत्वादेव 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' (छां.उ.3-14-1) इति श्रुतिरपि जगतो ब्रह्मात्मकत्वानुसन्धानस्य शान्तिहेतुत्वमाह । शान्तिश्च दर्शितमोहशोकनिवृत्तिरेव ।

### सामानाधिकरण्यशब्दार्थनिष्कर्षः

'आत्मैव सर्वाणि भूतान्यभूत्' इत्यत्र सामानाधिकरण्यविवक्षितमैक्यं न स्वरूपैक्यरूपम्, जडाजडयोः स्वरूपैक्याभवात्; स्वरूपैक्यस्यैव अभिमतत्वे पूर्वमन्त्रे सर्वभूतानाम् आत्मवृत्तित्वस्य आत्मनस्सर्वभूतान्तर्व्याप्तत्वस्य च अभिधानेन तद्विरोधाच्च। स्वरूपैक्यलक्षणात्यन्ताभेदे सति आधाराधेयभावोऽपि हि न सम्भवति, आत्माश्रयदोषप्रसंगात् । न हि घटादयः पदार्थाः स्वस्मिन्नेव अवस्थातुं शक्नुवन्ति । अपि तु सर्वाणि भूतान्यन्तःप्रविश्य अपृथक्सिद्धविशेषणविशेष्यभावलक्षणसम्बन्धविशेषेण तद्विशिष्टत्वरूपमेवैकत्वम् इह आत्मनो विवक्षितम् । तथा सत्येव विशिष्टवेषेणैकत्वस्य स्वरूपभेदसत्त्वेन आधाराधेयभावस्य च द्वयोरंशयोः मन्त्रद्वयाभिहितयोः उपपत्तिः सम्भवति। ईदृशैक्येन हेतुना लोकवेदयोस्सामानाधिकरण्यनिर्देशो हि समन्ततः प्रसिद्धः । लोके 'देवोऽहम्', 'मनुष्योऽहम्', 'स्थूलोऽहम्', 'कृशोऽहम्'

इत्यादिसामानाधिकरण्यनिर्देशेषु अपृथक्सिद्धविशेषणविशेष्यभावसम्बन्धेन देह-विशिष्टत्वनिबन्धनमैक्यमेव निमित्तं दृश्यते, देहात्मनोः स्वरूपभेदं जानद्भिरपि तथा निर्देशकरणदर्शनेन तेषां केवलभ्रान्तवाक्यतायाः दुर्वचत्वात् ।

### अन्तःप्रविश्य स्थितेः सामानाधिकरण्यहेतुता

वेदेऽपि तैत्तिरीयकोपनिषद्यानन्दवल्ल्यां षष्ठानुवाके 'तत्सृष्ट्वा तदेवाऽनु-प्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत्' इति निर्देशेन, षष्ठप्रश्ने नारायणे दशमे नारायणानुवाके ---

'यच्च किंचिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा ।
अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' ।। (तै.ना.25)

इति निर्देशपूर्वकम्,

'स ब्रह्म स शिवस्सेन्द्रस्सोऽक्षरः परमस्वराट्' । (तै.ना.25)

इति निर्देशेन, तत्रैव पंचाशानुवाके - 'येन सर्वमिदं प्रोतं पृथिवी चान्तरिक्षंच द्यौश्च दिशश्चावान्तरदिशाश्च स वै सर्वमिदं जगत् । स च भूतं स च भव्यम्' (तै.ना.146) इति निर्देशेन च अन्तःप्रविश्य व्याप्तेः सामानाधिकरण्यनिर्देशहेतुता अवगम्यते । गीतासु एकादशाध्याये सर्वान्तःप्रविष्टं भगवत्स्वरूपं भगवद्दत्तदिव्य-चक्षुषा यथावत्साक्षात्कृत्य 'सर्वं समाप्नोषि ततोऽसि सर्वः' (भ.गी.11-40) इति वदता अर्जुनेन च परमात्मनः सर्वजगत्सामानाधिकरण्येन निर्देशस्य सर्वजगदन्तरात्मतया अवस्थाननिबन्धनम् एकसंघातान्तःपातित्वरूपं विशिष्टवस्त्वैक्यमेव हेतुः न तु स्वरूपैक्यमिति प्रस्फुटमेव अभिहितम् ।

### शांकरव्याख्यानासामंजस्यम्

यत्पुनरत्र शांकरव्याख्यानम् - पूर्वमन्त्रोक्तमेवार्थम् अयं मन्त्र आह - विजानतः - परमार्थवस्तु विजानतः, यस्मिन् - काले यथोक्तात्मनि वा, आत्मैव, सर्वाणि भूतानि पूर्वोक्तान्येव अव्यक्तादिस्थावरान्तभूतानि, अभूत् - संवृत्तः, एकत्वम् - आत्मैकत्वम्, अनुपश्यतः, तत्र - तस्मिन्काले तस्मिन्नात्मनि वा, कश्शोकः, को मोहः । अनेन शोकमोहयोः अविद्याकार्ययोः असम्भवप्रदर्शनेन

सकारणस्य संसारस्य अत्यन्तमेवोच्छेदः प्रदर्शितो भवति इति ; तदसमंजसम् - अत्र विवक्षितस्य अर्थस्य अनुवर्तमानप्रकरणविरूद्धत्वात् अप्रामाणिकत्वात्, शब्देन कथंचिदपि अलाभात्, विवेचनासहत्वात् संसारात्यन्तोच्छेदहेतुत्वासम्भवाच्च ।

इदं तावदत्र प्रष्टव्यम् ; कस्तावदर्थोऽत्र भवतो विवक्षित इति ? 'आत्मैक एव परमार्थः अन्यत्सर्वं मिथ्या' इत्येवंरूपेण आत्मैकत्वविज्ञानेन संसारनिश्शेषनिवृत्तिः भवति इत्ययमेवार्थ इति चेत् ; न 'ईशावास्यम्' इत्यारभ्य पूर्वमन्त्रपर्यन्त[1]ग्रन्थे प्रथमम् 'ईट्'छब्देन ।ईश्वरत्वेन कंचिदात्मानं निर्दिश्य तदितरस्य कृत्स्नस्य चेतनाचेतनात्मकस्य जगतः तदीशितव्यरूपतां ज्ञापयित्वा पश्चात्, ईशितव्य-जगदन्तर्गतस्य चेतनजातस्य तदाज्ञापरिपालननैयत्यं च विधाय ईश्वरत्वेन निर्दिष्टस्य आत्मनः स्वेतरसर्वचेतनातिशायिशक्तिमत्वं च निरूप्य तत एव तस्येश्वरत्वसिद्धिं च ज्ञापयति सति, प्रस्फुटमीशेशितव्यभावेन परमात्मनः तदितरस्य चेतनाचेतनात्मकस्य कृत्स्नस्य जगतश्च सत्यतां भेदं च प्रतिपादयता अनेन प्रकरणेन विरुद्धत्वात् ।

न च ईदृशोऽर्थः क्वापि अनन्यथासिद्धेन प्रमाणेन प्रतिपद्यते । न च शब्देन वाऽत्र अयमर्थो लभ्यते । 'आत्मैक एव परमार्थः' इति परमार्थशब्दघटितस्य आत्मैकपारमार्थ्यप्रतिपादकस्य वा, 'अन्यत्सर्वम्मिथ्या' इति मिथ्याशब्दघटितस्य इतरमिथ्यात्वप्रतिपादकस्य वा वाक्यस्य अत्र अनुपलम्भात् । न च - 'आत्मैव सर्वाणि भूतान्यभूत्' इति निर्देशेनैव आत्मन एव सत्यत्वम् ; अन्येषां सर्वभूतानां मिथ्यात्वं च लभ्यत इति - वाच्यम् ; समानाधिकरणपदद्वयनिर्देशेन पदद्वयप्रतिपन्नयोरर्थयोः ऐक्यस्यैव लाभेन तत्रैकपदप्रतिपन्नार्थस्य सत्यताया अपरपदप्रतिपन्नार्थस्य असत्यतायाश्च कथंचिदपि अलाभात् ; भिन्नप्रवृत्तिनिमित्तानां शब्दानाम् एकस्मिन्नर्थे 'वृत्तिस्सामानाधिकरण्यम्' इतिवदद्भिः शाब्दिकैरपि नानापद-प्रतिपन्नार्थानाम् ऐक्यप्रतिपत्तेरेव समानाधिकरणशब्दनिर्देशायत्ततायाः प्रतिपादनात् । सामानाधिकरण्यस्य हि ऐक्य एव तात्पर्यमिति सर्वसम्मतमिति समानाधिकरण-निर्देशस्य पदद्वयप्रतिपन्नार्थयोः ऐक्य एव तात्पर्यमंगीकुर्वाणैः भवद्भिरपि 'तत्त्वमसि' (छां.उ.6-8-7) इत्यादौ 'तत्-त्वं' पदप्रतिपन्नयोरर्थयोः ऐक्य-प्रतिपादनांगीकारेण इह सामानाधिकरण्यस्य अन्यार्थपरताकथनायोगाच्च ।

1. ग्रन्थे - इति सप्तम्यन्तस्य उत्तरत्र 'ज्ञापयति सति' इत्यनेनान्वयः बोध्यः ।

एवम् अत्र 'पूर्वमन्त्रोक्तमर्थमेव अयमपि मन्त्र आह' इति वदद्भिर्भवद्भिः, सर्वभूतानाम् आत्मेतरावृत्तित्वविशिष्टात्मवृत्तित्वे, आत्मनस्सर्वभूतवृत्तित्वे च, आधाराधेयसर्वपदार्थसत्यतामंगीकृत्यैव पूर्वमन्त्रेण प्रतिपाद्यमाने ; आत्मन एकस्यैव परमार्थत्वम् अन्यस्य कृत्स्नस्य मिथ्यात्वं च प्रतिपादयति अयम्मन्त्र इति कथन्नु वा वक्तुं शक्यम् । आत्मव्यतिरिक्तानि सर्वभूतानि न पश्यतीति भवदुक्तार्थपरत्वं पूर्वमन्त्रस्य न कथंचिदपि सम्भवतीति तु प्रागेव अवोचाम ।

**बाधार्थसामानाधिकरण्यशंका तत्परिहारश्च**

न च - रज्जुसर्पभ्रमवता स्थाणुचोरभ्रमवता च भ्रमनिवृत्यनन्तरं भ्रमस्थले सर्पचोराभावज्ञापनतात्पर्येण प्रयुक्तयोः 'इह रज्जुस्सर्पः, इह स्थाणुश्चोरः' इति वाक्ययोः रज्जुस्थाणुसत्यत्वसर्पचोराभावप्रतिपादनपरत्वदर्शनात् बाधार्थमपि सामानाधिकरण्यमस्ति । तद्वत् इदमपि सामानाधिकरण्यं सर्वभूतानाम् अभाव-प्रतिपादनमुखेन असत्यताम् आत्मसत्यतां च प्रतिपादयितुं क्षमत इति वाच्यम् ; नानापदप्रतिपन्नार्थैक्यप्रतिपादकत्वस्यैव सामानाधिकरण्यलक्षणरूपतायाः प्रागेवोक्तत्वात्, सामानाधिकरण्यनिर्देशेषु सर्वत्र नानापदप्रतिपन्नार्थैक्यप्रतिपत्तेरेव सर्वानुभवसिद्धत्वाच्च सामानाधिकरण्यस्य बाधार्थकतायाः अप्रामाणिकत्वात् ; दर्शितसामानाधिकरण्यनिर्देशयोरपि तात्पर्यवशेन अवधारणगर्भत्वेन, 'इह रज्जुरेव सर्पः, इह स्थाणुरेव चोरः' इत्येवंरूपयोः सर्पचोरशब्दाभ्यां स्वारसिकलक्षणया सर्पचोरप्रतीतिविषयपराभ्यां रज्जुस्थाणुरूपाधिष्ठानयोः सर्पचोरप्रतीतिविषयैक्य-प्रतिपत्तेः एवकारबलेनैव इतरव्यवच्छेदप्रतिपत्तेश्च दर्शनेन सामानाधिकरण्य-निर्देशस्य बाधार्थत्वादर्शनाच्च ।

सामानाधिकरण्यस्य बाधार्थत्ववादिन इदं तावत्प्रष्टव्याः, दर्शितनिर्देशयोः सर्पचोरशब्दयोः कोऽर्थः? इति । सर्पत्वचोरत्वयोर्वा सर्पचोरयोर्वाऽभाववन्तावर्थ इति चेत् किं तत्र शक्तिः? उत निरूढलक्षणा? पक्षद्वयमप्यसंगतम् ; [1]तथा सति 'घटस्सर्पः', 'पटस्सर्पः', 'घटश्चोरः', 'पटश्चोरः', इत्यादेः प्रयोगस्य सर्वत्रैव स्वरसतः सम्भवापत्तेः ।

---

1. 'तथासति --- सम्भवापत्तेः' इति । उक्तस्थलद्वये सर्प-चोरशब्दयोः सर्पत्वाभाववत्ता-चोरत्वाभाववत्तापरत्वे अंगीक्रियमाणे 'घटस्सर्पः' 'पटश्चोरः' इत्यादिव्यवहारापत्तिः । घटपटयोरपि सर्पत्वाभाव-चोरत्वाभाववयोः स्थितेः - इति भावः ।

### सिद्धान्ते स्वारसिकलक्षणाऽङ्गीकारः

अस्माकं तु स्थलविशेषेष्वेव पूर्वोत्पन्नभ्रान्त्यनुरोधेन स्वारसिकलक्षणाबलेनैव यथोक्तरीत्या 'इह रज्जुस्सर्पः' 'इह स्थाणुश्चोरः' इत्यादि स्वारसिकप्रयोगसम्भवात् । अन्यत्र तथाविधभ्रान्त्यभावेनैव दर्शितविरुद्धप्रयोगासम्भवाच्च न दोषः ।

### बाधार्थत्वस्वीकारेऽपि मिथ्यात्वासिद्धिः

तस्मात् सामानाधिकरण्यस्य बाधार्थत्वमेवाप्रामाणिकम् । अपि च इह सामानाधिकरण्यस्य बाधार्थत्वस्वीकारेऽपि वा, परमात्मनि सर्वभूतत्वाद्यभाव-प्रतिपादनमात्रेण सर्वभूतानामेवासद्भावो मिथ्यात्वम्, परमात्मन एकस्य परं परमार्थत्वम् इत्येते अंशाः कथमिव प्रतीयेरन्? न हि रज्ज्वादौ सर्पत्वाद्यभावप्रतीतिमात्रेण सर्पादिपदार्थस्यैव क्वाप्यसद्भावम्मिथ्यात्वं रज्ज्वादि-मात्रस्य सत्यत्वं च, 'इह रज्जुस्सर्पः' इत्यादिनिर्देशात् कश्चित्प्रत्येति । प्रत्युत पूर्व-मन्त्रे सर्वभूतानां परमात्मनि वृत्तेरेव प्रतिपन्नतया तद्विरोधेन न अस्मिन्मन्त्रे सामानाधिकरण्यनिर्देशेन तदसत्यत्वं कश्चित्प्रतीयात् । [1]एतेन भवन्मतेऽपि, 'इह रज्जुस्सर्पः' 'इह स्थाणुश्चोरः' इत्यादौ रज्ज्वादीनां सर्पादिधीविषयैक्य-प्रतीतिरूपशाब्दबोधे सर्पाद्यभावभानाभावेऽपि उदीच्यमानसबोधे वा सर्पाद्यभाव-भानस्वीकारेण, तद्वदेवेहापि 'आत्मैव सर्वाणि भूतान्यभूत्' इति सामानाधिकरण्य-निर्देशवशादुदीच्यमानसबोधे वाऽऽत्मनि सर्वभूताभावभावनं दुर्वारमिति शंकापि

---

1. 'एतेन --- दूरोत्सारिता' - इति - पूर्वं रज्जुस्सर्पः इत्यादौ सिद्धान्तिना स्वारसिकलक्षणया सर्पशब्दस्य सर्पत्वेन विषयो यः पदार्थः, इत्यर्थमंगीकृत्य, तथा प्रतीविषयो रज्जुरेवेति सामानाधिकरण्यसिद्धं अर्थैक्यं निर्व्यूढम् । 'रज्जुस्सर्पः' इति वाक्येन तादृशशाब्दबोधानन्तरं (उदीच्यः) उत्तरकालिकस्तु मानसबोधः सर्पाभावविषयकः उदेतीति च स्वीकृतम् । तदुपरि प्रतिवादिना प्रतिबन्दीत्वेन कृता प्रत्याक्षेपरूपा आशंका 'एतेन भवन्मतेऽपि' इत्यादिना अनूद्य, 'दूरोत्सारिता' इत्यनन्तरं परिह्रियत इति भाव्यम् भवन्मतेऽपि-सिद्धान्तमतेऽपि इत्यर्थः। 'सर्पादिधीविषयैक्य' इत्यादेः अयमर्थः सर्पत्वेन धीविषयो यः पदार्थः, तदभिन्नारज्जुः - इतिशाब्दबोधे - इति । तत्र प्राथमिकशाब्दबोधे सर्पाद्यभावभानविरहेऽपि उत्तरकालीनमानसबोधे हि तद्भान सिद्धान्तिनोऽपि इष्टमेवेति, प्रकृते 'सर्वभूतान्यात्मैवाभूत्' इत्यत्र च सर्वभूताभावबोधनपरता पश्चात् कुतो नेष्यते? इत्याक्षेप्तुराशयः । तत्रोत्तरम् - किंचिद्देशविशेषेत्यादिना अनन्तरमुक्तं वेद्यम् । रज्जुस्सर्प इत्यादौ तद्देशकालावच्छेदेन सर्पाभावप्रतीतावपि देशान्तरे कालान्तरे च तन्मिथ्यात्वासिद्धेः, प्रकृतेऽपि सर्वजगन्मिथ्यात्वबोधनं असम्बद्धमिति प्रतिवचनसारम् ।

दूरोत्सारिता। किंचिद्देशविशेषकालविशेषावच्छेदेन भूताभावज्ञानमात्रेण सर्वेषु देश-कालेषु तदभावनिश्चयासिद्ध्या भवदभिमततन्मिथ्यात्वात्मैकपरमार्थत्वयोरसिद्धेः ; प्रतियोग्यप्रसिद्धौ अभावप्रतीतेः क्वाप्युदयादर्शनेन क्वचित्प्रसिद्धस्यैव अन्यत्राभाव-ज्ञानोदयस्य वक्तव्यतया सर्वेषु देशकालेषु कस्यापि वस्तुनः अभावज्ञानस्य क्वाप्युदयासम्भवात् ; 'इह रज्जुस्सर्पः', 'इह स्थाणुश्चोरः' इत्यादि-दृष्टान्तभूतवाक्यादपि पूर्वसंजातसर्पचोरभ्रमस्थल एव तदभावप्रतीतेः अन्यत्र तदभावाप्रतीतेश्च सर्वानुभवसाक्षिकत्वाच्च।

एवम् आत्मन एकत्वज्ञानात् सर्वसंसार बन्धगन्धनिवृत्तिपर्यवसन्न-मोहशोकनिवृत्तिसिद्ध्यभिधानमप्यसमंजसम्। क्वचिदपि ईदृशैकत्वज्ञानमात्रेण दर्शितलक्षणमोहशोकनिवृत्त्यदर्शनेन तस्य तन्निवृत्तिप्रयोजकताया एवासम्भवात्।

#### आत्मैकत्वस्य विकल्पेन दूषणम्

एवं भवदभिमतमात्मन एकत्वं किंरूपमिति विवेचयामः। न तावदेकत्व-संख्यारूपं तत्, तस्य सर्वसाधारण्येन भवदभिमतवस्त्वन्तरसद्भावव्यावर्तकत्वा-योगात्; तज्ज्ञानस्य भवदभिमतमोहशोकनिवृत्तिप्रयोजकत्वसम्भावनागन्धानर्हत्वाच्च। नापि द्वैतशून्यत्वरूपं तत्, द्वैतस्य प्रसिद्धौ तदभावस्य आत्मन्यसम्भवात्; अप्रसिद्धौ च प्रतियोग्यप्रसिद्ध्या सुतरामेव तदभावसम्भवाच्च। नहि खलु क्वचिदप्यप्रसिद्धस्य कस्यचिद्वस्तुनोऽभावं क्वचित्कश्चित्पश्यन् दृश्यते। पश्यति च - 'तत्र स्थितमिदं वस्त्विह नास्ति; अत्र स्थितमिदं वस्तु तत्र नास्ति' इत्येव च।

#### पराऽभिमतयोजनायां आत्माश्रयदोषदुष्टता

एवम् 'आत्मन्यात्मैव सर्वाणि भूतान्यभूत्' इति या योजना कृता; सा चात्यन्तासम्बद्धा, आत्माश्रयदोषप्रसंगेन आत्मनः आत्माधारत्वायोगात्। तस्मात्सर्वथैवासम्बद्धं शांकरव्याख्यानमिति सिद्धम्।

#### अन्यप्रकारेण ऐक्यनिर्वाहस्यायुक्ततताप्रदर्शनम्

एवं घटशरावादीनां मृत्पिण्डस्य च ऐक्यवत् जगद्ब्रह्मणोः स्वरूपैक्यमाश्रित्य कैश्चित्क्रियमाणस्सामानाधिकरण्यनिर्वाहोऽपि असमंजस एव, विकारादिसर्वदोष-

रहितत्वेन सर्वतश्श्रुतिस्मृत्यादिप्रमाणप्रतिपन्नस्य ब्रह्मणः सर्वदोषाकरत्वप्रसंगात् । 'राजैव प्रजाः' इतिवत्, 'आत्मैव सर्वाणि भूतानि' इत्यपि सामानाधिकरण्य-निर्देशः तादधीन्यमात्रतात्पर्येण औपचारिक इति निर्वाहोऽप्ययुक्तः, मुख्यवृत्त्यैव निर्वाहे सम्भवत्युपचाराश्रयणायोगात् ।

ऐक्योक्तेः मुख्यवृत्त्या निर्वाहः

सिद्धान्ते तु 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छा.उ.6-3-2) इति 'सेयं देवतेमास्तिस्रो देवता अनेनैव जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत्' (छा.उ.6-3-3) इति च छान्दोग्यश्रुत्या परेण ब्रह्मणा स्वात्मकजीवस्वरूपेण अचित्तत्वानुप्रवेशं कृत्वा तत्तद्वस्तूनां नामानि रूपाणि च करवाणीति संकल्प-पूर्वकम् अचित्तत्वविशिष्टजीवविशिष्टस्वस्वरूपपर्यन्तसंघातात्मकानां तत्तद्वस्तूनां नामरूपव्याकरणप्रतिपादनात्, प्रागुदाहृतश्रुत्यन्तरैरपि सर्वभूतेषु परमात्मानुप्रवेशस्य तेषां परमात्मनश्च सामानाधिकरण्यव्यपदेशहेतुताप्रतिपादनाच्च, सर्वभूत-याचिशब्दानां तद्विशिष्टे शक्तेरेव सद्भावोपगमेन 'आत्मैव सर्वाणि भूतान्यभूत्' इति सामानाधिकरण्यनिर्देशो मुख्य एव निर्वहति । नापि च सर्वभूतविशिष्टैक्यस्य ततः प्रतीयमानस्य परमात्मनि बाधः । तादृशैक्यमेव च 'एकत्वमनुपश्यतः' इत्यत्रैकत्वशब्देनापि विवक्षितम् । अतः सर्वं समंजसम् ॥

## आनन्दभाष्यम्

### जीवब्रह्मणोरैक्योपासनस्य फलम्

उक्तमेव सर्वस्य ब्रह्मात्मकत्वं सामानाधिकरण्येन ब्रुवाणः तादृशोपासनस्य मोहनिवर्तकत्वपूर्वकं सद्यः शोकनिवर्तकत्वरूपं फलं प्रदर्शयति---

**यस्मिन्** - सर्वस्य ब्रह्मात्मकत्वानुसन्धानसमये, प्रणिधानकाले इति यावत् । **सर्वाणि भूतानि आत्मैव** - ब्रह्मैव **अभूत्** - तस्मिन् समये सर्वभूतशरीरकतया

ब्रह्मणः प्रतीतत्वात् । कस्यैवं प्रतीतिः इत्याशंकायामाह - विजानतः - विविच्य जानतः । ब्रह्म स्वतन्त्रम् अन्यत्सर्वं परतन्त्रम् इति विवेकेन ब्रह्म जानतः इत्यर्थः, तस्यैव ब्रह्मणि शारीरकत्वप्रतीतिरिति भावः ।

ननु स्वतन्त्रपरतन्त्रवस्तुभेदज्ञाने कथमेवं प्रतीतिः घटते इत्यत्र आह **एकत्वमनुपश्यतः । एकत्वम्** - जातिव्यक्त्योरिव जगद्ब्रह्मणोः विभागानर्हसम्बन्ध-विशेष तदेकधार्यत्वादिरूपम् **अनुपश्यतः** - विशदतया अनुसन्दधानस्य इत्यर्थः । 'रामसुग्रीवयोरैक्यं देव्यैवं समजायत' (रा.सु.35-52) इत्यादौ रामसुग्रीवयोः अत्यन्तभेदेऽपि एकत्वस्य अविभाज्यसम्बन्धरूपस्यैव दर्शनात्, इहापि तादृशै-कत्वस्य ग्रहीतुं योग्यत्वात्, तादृशस्य च सम्बन्धस्य 'यस्यात्मा शरीरम्' (बृ.उ.3-7-30) 'यस्य पृथिवीशरीरम्' (बृ.उ.5-7-7) इत्यादि श्रुतिसिद्धत्वात् ।

**तत्र** - एवम् एकत्वानुसन्धानकाले **को मोहः** - शरीरादौ आत्मत्वभ्रमलक्षणः आत्मनि स्वतन्त्रत्वभ्रमलक्षणः पुत्रादौ ममत्वग्रहलक्षणो वा **मोहः** - अविवेकः **कः** - न कोऽपि मोहः तदा भवति इति भावः ।

तथा सर्वमेतत्परमात्मविभूतिरेव इत्येवं रूपेण ज्ञाते सर्ववस्तुनि **कः शोकः** - शरीरनाशजन्यः, पुत्रादिमरणजन्यः, सर्वस्वापहरणप्रभवो वा शोकः कः ? न कोऽपि भवति इत्यर्थः । 'अहं मम' इत्यादिभ्रमप्रसक्त्यभावात् तन्मूलकमोहशोकादेः तत्र नावसरो भवति इति भावः ।

**सामानाधिकरण्यविचारः**

केचित् सर्वाणि भूतान्यात्मैवाभूत् इत्यस्य आत्मव्यतिरिक्तानि सर्वाणि भूतानि न भवन्ति 'एकमेवाऽद्वितीयं ब्रह्म' इति ज्ञाने ब्रह्मातिरिक्तस्य सर्वस्य मिथ्यात्वेन बाधितत्वात् । रज्जौ रज्जुत्वज्ञाने पूर्वं प्रतीतस्य सर्पस्य रज्जुव्यति-रिक्तत्वाभाववत् इत्यर्थं वर्णयन्ति । तन्न युक्तम् । 'य आत्मनि तिष्ठन् य आत्मानमन्तरो यमयति, यस्यात्मा शरीरम्' (बृ. उ. मा. पा. 5-7-26) 'यस्य पृथिवी शरीरम्' (बृ. उ. मा. पा. 5-7-7) इत्यादि श्रुतिसिद्धं जगद्ब्रह्मणोः

शरीरात्मभावसम्बन्धमादाय सामानाधिकरण्यप्रतिपादनसम्भवे बाधायां सामानाधिकरण्यमिति पक्षस्य अनादेयत्वात् ।

## सुबोधिनी

### शरीरात्मविवेकपूर्वकं क्रियमाणध्यानस्य फलम्

उक्तब्रह्मात्मकत्वोपासनस्य सद्यः शोकापनोदकत्वमाह - **यस्मिन्** इति ।

**विजानतः** - विविच्य वस्तुतत्त्वं जानतः, **यस्मिन्** - उपासनसमये, **आत्मैव सर्वमभूत्** - नहि सर्वे विविच्य वस्तु जानन्ति ; केचन देहमेवात्मानं जानन्ति ; केचन देहादिविलक्षणं कर्तारं भोक्तारं प्रतिशरीरमप्यन्योन्यं केवलं प्रत्यगात्मानं स्वतन्त्रम् ; यस्तु तानप्याविश्य सर्वात्मना धत्ते नियमयति च, तमेकमखिलस्याप्यात्मानं सर्वतः स्वतन्त्रं न जानन्ति ; अखिलं चेदं सचेतनं तदेकधार्यं तच्छरीरमिति च न जानन्ति ; कश्चिदेव तु जानातीदृशं शरीरात्मविवेकं शास्त्रतः, यदा च विजानाति तदा तमेवाद्वितीयं स्वतन्त्रम् आत्मानं सर्वभूतप्रकारमुपासीत, सर्वेषामेव तच्छरीरतया प्रकारत्वेनावगमात् । एवमनुध्यायतो नहि परमात्मनः अन्यत् स्वतन्त्रं प्रतीयेत ।

यस्मिन् समय एवं विदितमभूत् । **तत्र** - तस्मिन्समय उक्तरीत्या शरीरिण **एकत्वमनुपश्यतः को मोहः, कः शोकः** - अहं ममेति स्वतन्त्रात्मभ्रमाप्रसक्त्या तन्मूलमोहशोकादेरनवकाश इति भावः ।

* * * * *

## अष्टमो मन्त्रः

**स पर्यगाच्छुक्रमकायमव्रणमस्नाविरँ शुद्धमपापविद्धम् ।**
**कविर्मनीषी परिभूस्स्वयम्भूर्याथातथ्यतोऽर्थान्**
**व्यदधाच्छाश्वतीभ्यस्समाभ्यः ।। 8 ।।**

## प्रतिपदार्थदीपिका

पूर्वोक्तेश्वरज्ञानवतः अनुभावप्रकारमाह - **स पर्यगात्** इति ।

**सः** - सर्वभूतान्तरात्मपरब्रह्मज्ञानवान् **शुक्रम्** - शुभ्रम् **अकायम्** - हेयशरीररहितम् **अव्रणम्** - अक्षतम् **अस्नाविरम्** - स्नायुमज्जास्थिरहितम् - **शुद्धम्**-दोषरहितम् **अपापविद्धम्** - पाप्मभिः अस्पृष्टम् - अशेषहेयप्रत्यनीकं परमात्मानं **पर्यगात्** - प्राप्नुयादित्यर्थः ।

एतादृशब्रह्मविदं विशिनष्टि - **कविः** इति । **कविः** - व्यासपराशरादिवत् भगवत्स्वरूपरूपकल्याणगुणप्रतिपादकप्रबन्धकर्ता । **मनीषी** - निगृहीतान्तःकरण इत्यर्थः । **परिभूः** - परतत्त्वविरोधिनः नास्तिककुदृष्टीन् ; परिभवतीति परिभूः । **स्वयम्भूः** - अन्यनिरपेक्षकः देवतान्तराद्यन्यनिरपेक्षकः **याथातथ्यतोऽर्थान् व्यदधात्** - यथार्थतः अर्थान् - प्रणवार्थान् शेषत्वपारतन्त्र्याद्यर्थान् **शाश्वतीभ्यस्समाभ्यः** - यावद्ब्रह्मप्राप्ति **व्यदधात्** - विविच्य हृदये दधार । यद्वा, शिष्येभ्यः अर्थान् स्वरूपोपायपुरुषार्थान् व्यदधात् उपदिष्टवान् ।।

## वेदान्ताचार्यभाष्यम्

### वेदितव्यब्रह्मस्वरूपकथनम्

पुनरप्येनम् ईशेशितव्यतत्त्ववेदिनं वेदितव्यविशेषबोधनेन च विशिनष्टि **स पर्यगात् ---- समाभ्यः** इति । **सः** - सर्वभूतान्तरात्मभूतब्रह्मदर्शी [1]**पर्यगात्**-

---

1. पर्यगादिति - परिपूर्यकात् - इण्-धातोः 'इणो गालुङि' इति सूत्रेण पर्यगादिति रूपं लुङि भूतार्थे । इह तु भूतत्वायियक्षया मोक्षदशायां प्राप्नुयादिति भयिष्यद्वियक्षा - यथा ब्रह्मयिदाप्नोतीत्यत्र लटः यर्तमानार्थत्येपि भयिष्यद्वियक्षेति भायः । अथ 'समाधिलब्धे' त्यादिना पक्षान्तरकथनम् । अत्र पक्षे पर्यगादिति भूतार्थकमेय । अत्र ब्रह्म समश्नुते इति कठयल्लीरीत्या जीयन्नेय समाधिदशायां अनुभयतीति सिद्धोक्तिः।

प्राप्नुयादित्यर्थः ; 'ब्रह्मविदाप्नोति परम्' (तै.आ.25) इति न्यायात् । समाधि-लब्धेनानुभवेन प्राप्तवानिति सिद्धानुवादो वा, 'अत्र ब्रह्म समश्नुते' (क.उ.6-14) इतिवत् । **शुक्रम्** - [1]अवकाशप्रदातृरूपम् । **अकायम्** - सर्वशरीरकमपि कर्मकृत-शरीररहितम् । **अत एव** - **अव्रणम्-अस्नाविरं च** । **शुद्धम्** - अनाघ्राताज्ञानादि दोषम् । **अपापविद्धम्** - अज्ञानादिकार्यकारणभूतपुण्यापुण्यरूपकर्मानालीढम् इत्यर्थः । 'न सुकृतं न दुष्कृतम्' (छा.उ.8-4-1) इत्यारभ्य 'सर्वे पाप्मानोऽतो निवर्तन्ते' (छा.उ.8-4-1) इति हि निगम्यते । एवम् अशेषहेयप्रत्यनीकः परमात्मा मुमुक्षोः प्राप्यः प्रापकः उपास्यश्च इत्युक्तं भवति । 'सः' इत्युक्तं ब्रह्मविदं सर्वार्थ-दर्शित्वादिना विशिनष्टि **कविः** - क्रान्तदर्शी । व्यासादिवत् परतत्त्व-तद्गुणबोधनानुगुणप्रबन्धनिर्मातेति वार्थः । मनस ईशित्री बुद्धिः - मनीषा तद्वान् - **मनीषी** । अभ्यासवैराग्याभ्यां निगृहीतान्तःकरण इत्यर्थः। परितो भवतीति **परिभूः**-विद्यान्तरवतः सर्वानतिक्रम्य वर्तते । कामक्रोधलोभादीन् दुर्जयान् अरातीन् अभिभवतीति वा । **स्वयम्भूः** - अन्यनिरपेक्षसत्ताकः, नित्यात्मस्वरूपदर्शीति यावत् । **याथातथ्यतोऽर्थान् व्यदधात्** । परमपुरुषार्थ-तदुपाय-तद्विरोधिप्रभृतीन् सर्वान् पदार्थान् यथावद्विविच्य हृदयेन धृतवान् । **शाश्वतीभ्यस्समाभ्यः**-यावद्ब्रह्मप्राप्ति सर्वप्रत्यूहशमनार्थमिति भावः ।

### योजनान्तरम्

यद्वा - प्रथमान्तं च द्वितीयान्तं च पदजातं क्रमात्परावरात्मविषयतया व्याख्येयम् । तदा 'शुक्रम्' इत्यादिकं सर्वोपाधिविनिर्मुक्तपरिशुद्धजीवपरम् । तमपि च, **सः**-परमात्मा, **पर्यगात्** - परितो व्याप्य स्थितः । 'कविः' इत्यादिकं सुगमम् । **याथातथ्यत** इत्यादि । **अर्थान्** - कार्यपदार्थान्, **शाश्वतीभ्यस्समाभ्यः**-यावद्विलयमवस्थातुम्, याथातथ्यतो व्यदधात् ; न पुनः ऐन्द्रजालिकवत् केवलं प्रकाशितवान् ।

1. अवदातं स्वप्रकाशरूपम् - क.,ख.

## ईशावास्यप्रकाशिका

पुनरप्येनम् ईशेशितव्यतत्त्ववेदिनं वेदितव्येश्वरस्वरूपशोधनेन च विशिंषन् ध्यानयोगादिकमपि उपदिशति - **स पर्यगात्** इति।

**सः** - सर्वभूतान्तरात्मभूतब्रह्मदर्शी, **पर्यगात्** - पर्यगच्छत्, प्राप्नुयादित्यर्थः, 'ब्रह्मविदाप्नोति परम्' (तै.आन.1-2) इति न्यायात्। यद्वा, समाधिलब्धेन अनुभवेन 'उपलब्धवान्' इति सिद्धानुवादः। 'अत्र ब्रह्म समश्नुते' (क.उ.6-14) इतिवत्। **शुक्रम्** - अवदातम्, स्वप्रकाशरूपमित्यर्थः। **अकायम्** - सर्वशरीरकमपि कर्मकृतहेयशरीररहितमित्यर्थः। 'न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसम्भवा' (वरा.पु.75-41) इति हेयशरीरस्यैवान्यत्र प्रतिषेधदर्शनात्, न तु दिव्यमंगल-विग्रहरहितमित्यर्थः। 'यत्ते रूपं कल्याणतमं तत्ते पश्यामि' (ई.उ.16) 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' (छां.उ.1-6-6) 'आदित्यवर्णं तमसः परस्तात्' (श्वे.उ.3-8) इत्यादिना उपनिषत्प्रसिद्धस्य अप्राकृतदिव्यविग्रहस्य इह निषेधायोगात् इति भावः। **अव्रणम्** - कर्मायत्तशरीराभावादेव अक्षतम्, **अस्नाविरम्** - स्नायुः सिरा यस्मिन् विद्यते तत् स्नाविरम्, स्नाविरं न भवति इति अस्नाविरम्, **शुद्धम्** - अनाघाताज्ञानादिदोषगन्धम् अशनायादिषडूर्मिरहितं च, **अपापविद्धम्** - अज्ञानादेः कार्यभूतैः कारणभूतैश्च पुण्यपापरूपकर्मभिः अनालीढमित्यर्थः। 'न शोको न सुकृतं न दुष्कृतम्' इत्यारभ्य 'सर्वे पाप्मानोऽतो निवर्तन्ते' (छां.उ.8-4-1) इति पापशब्देन उपसंहारदर्शनात् स्वर्गादिहेतुभूत-पुण्यविशेषस्यापि इह पापशब्देन संग्रहणम् इति भावः। एवम् अशेषहेयप्रत्यनीकं परमात्मानं स विद्वान्पर्यगादिति पूर्वेण सम्बन्धः।

एवं रूपः परमात्मा प्राप्यः प्रापकः [1]उपास्यश्च यस्य तं ब्रह्मविदं विशिनष्टि **कविः** - व्यासादिवत्परमपुरुषतत्स्वरूपतद्विभूतितत्कल्याणगुणादिप्रकाशकप्रबन्ध-रूपाणां निर्माता इत्यर्थः। अथवा **कविः** - क्रान्तदर्शी, योगाभ्यासविधुरमनसा दुर्दर्शे परिशुद्धजीवात्मस्वरूपे अतिविशदाविच्छिन्नधारास्मृतिरूपज्ञानयोगनिष्ठ

1. उपायश्च - क,ग.

इत्यर्थः। कर्मयोगस्तु 'कुर्वन्नेवेह कर्माणि' (ई.उ.2) इति श्लोकेन पुरस्तादेवोक्तः। अथ ज्ञानयोगसाध्यप्रत्यगात्मसाक्षात्कारहेतुभूत जीवात्मयोगमाह - **मनीषी इति।** मनस ईशित्री बुद्धिर्मनीषा, तद्वान् मनीषी, सौन्दर्यसौशील्यादिभगवद्गुणानां स्मृत्यभ्यासेन अन्यविषयवैराग्येण च निगृहीतान्तःकरण इत्यर्थः। तथा च गीयते -

'असंशयं महाबाहो मनो दुर्निग्रहं चलम्।

अभ्यासेन च कौन्तेय वैराग्येण च गृह्यते' ।। (भ.गी.6-35)

इति । निरतिशयसुखरूपस्यात्मसाक्षात्काराय स्वात्मनि मनः प्रणिधानक्रियारूप-योगाभ्यासपरः इति भावः। **परिभूः** - कामक्रोधादीन् दुर्जयान् अरातीन् परिभवतीति परिभूः । अनेन विरोधिनिवृत्तिरूपयोगांगसेवनमुक्तम् । योगाभ्यासफलमाह - **स्वयम्भूः** - अन्यनिरपेक्षसत्ताकः, नित्यनिरतिशयसुखरूपतया स्वात्मदर्शीति यावत्। **याथातथ्यतोऽर्थान्व्यदधात्** - यथावद्विविच्य **अर्थान्** - प्रणवार्थान् 'तस्य वाचकः प्रणवः' (पा.यो.सू.1-27) 'तज्जपस्तदर्थभावनम्' (पा.यो.सू.28) इति सूत्रोक्तान्, **व्यदधात्** - हृदयेन धृतवान् इत्यर्थः । **अर्थान्** - मोक्षतदुपायतद्विरोधिप्रभृतीन्-सर्वान्पदार्थान्, **शाश्वतीभ्यस्समाभ्यः** - यावद्ब्रह्मप्राप्तीत्यर्थः । **याथातथ्यतः**- यथावत्, **व्यदधात्** - विविच्य हृदयेन धृतवान्, सर्वप्रत्यूहशमनार्थमिति भावः।

अथवा - 'शुक्रम्' इत्यादि द्वितीयान्तपदजातं परिशुद्धजीवपरम्। तमपि स परमात्मा पर्यगात् परितो व्याप्य स्थित इति प्रथमान्तपदजातं परमात्मपरं योजनीयम्। तथा हि **कविः** - स्वतस्सर्वदर्शी श्रीपांचरात्रादिप्रणेता वा, **मनीषी** - मनःप्रभृतीनां जीवकरणानां नियन्ता, परितो भवतीति **परिभूः** - सर्वव्यापी, स्वयमेव भवति उद्भवतीति **स्वयम्भूः** - 'बहुधा विजायते' (पु.सू.) इत्यादि प्रसिद्धावतारशालीत्यर्थः। अत्र 'कविः' इत्यादिना कल्याणगुणविधानात् छान्दोग्ये 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः' (छा.उ.8-1-5) इति कल्याणगुणविधानाच्च, 'निर्गुणम्' (आत्मोपनिषत्) 'निरंजनम्' (श्वे.उ.6-19) इत्यादि सामान्यनिषेधस्य

हेयगुणनिषेधपरत्वं सुगमम् । याथातथ्यत इत्यादि । **अर्थान्** - कार्यपदार्थान्, **शाश्वतीभ्यस्समाभ्यः** - यावद्विलयमवस्थातुम् **याथातथ्यतः** - यथावत् **व्यदधात्**- विविच्य उत्पादितवान्, न पुनरैन्द्रजालिकवत् केवलं प्रकाशितवान् इति भावः।

## श्रीरंगाचार्यभाष्यम्

### मुमुक्षोरवश्यानुसन्धेयाकारान्तराणामुपदेशः

जगद्ब्रह्मणोः ईशेशितव्यभावं ब्रह्मणः सकलजगदन्तरात्मत्वं सकलेतरातिशायिशक्तिमत्वं च पूर्वोक्तरीत्या जानतो मुमुक्षोः पुनरपि तादृशज्ञानस्य ब्रह्मप्राप्त्यादिलक्षणफलप्रतिपादनेन आवश्यकताम्, अन्येषामपि अवश्यानुसन्धेयानां ब्रह्मगतानाम् आकाराणाम् अनुसन्धानार्थं तानाकारांश्च दर्शयति अष्टमेन मन्त्रेण ।

अस्य पदविवरणम् - **सः** - पूर्वोक्तलक्षणसर्वभूतान्तरत्वादिपरमात्म-प्रत्यगात्माद्याकारपरिज्ञानवान् मुमुक्षुः, **अपापविद्धम्** - पापैःसुकृतदुष्कृतलक्षणैः कर्मभिः, विद्धम् - व्याप्तं न भवति इति तथोक्तम्, अपहतपाप्मतया कर्मवश्यतागन्धरहितम् इत्यर्थः । अत एव **शुद्धम्** - सुखदुःखरूपकर्मफलभोगहेतु-रहितम्, अत एव **अकायम्** - सर्वशरीरमप्यशरीरम् ।

### ब्रह्मणोऽशरीरत्वशोधनम्

अत्र अशरीरत्वं न सामान्यतः शरीरशून्यत्वम् ; नापि प्राकृतशरीरशून्यत्वं ; 'यस्य सर्वाणि भूतानि शरीरम्' (बृ.उ.5-7-19) 'जगत्सर्वं शरीरं ते' (रा.यु.120-27) इत्यादि श्रुतिस्मृतिभिः ब्रह्मणः प्राकृताप्राकृतसर्वतत्त्वशरीरत्वप्रतिपत्तेः, नापि कर्माधीनशरीरशून्यत्वम्, कर्माधीनसंसारिशरीराणामपि जगदन्तःपातिनां दर्शित-प्रमाणैरेव ब्रह्मशरीरताप्रतीतेः ; अपि तु - [1]स्वप्रयोज्यकर्मफलसुखदुःख-भोगाश्रयत्वसम्बन्धेन शरीरशून्यत्वं । नियमनार्थमन्तःप्रविष्टं परं ब्रह्म प्रति प्राकृताप्राकृतसर्वतत्त्वानां शरीररूपत्वेऽपि तदधीनकर्मफलभूतसुखदुःख-भोगाश्रयत्वस्य ब्रह्मणि अभावेनैव अत्र अशरीरत्वनिर्देश इति न विरोधः।

---

1. अत्र स्वशब्देन शरीरग्रहणम् । तत्प्रयोज्यं यत् कर्म पुण्यपापरूपं, तत्फलभूतसुखदुःखयोः भोगस्य आश्रयत्वं - इत्यर्थो बोध्यः ।।

अत एव - अव्रणम् - व्रणरहितम्, व्रणशब्दः सर्वव्याध्युपलक्षकः, अत्रापि व्रणरहितत्वं न सम्बन्धान्तरेण । बाधात् ; अपि तु - स्वजन्यदुःखाश्रयत्वसम्बन्धेन व्रणशून्यत्वम् । अस्नाविरम् - सिराः - 'ष्णु-प्रस्रवणे' (पा.धा.1038) इति धातुना स्नावयन्ति एकदेशस्थमपि कल्मषं कृत्स्नशरीरे प्रस्रावयन्ति इति व्युत्पत्त्या निष्पन्नः स्नावशब्दो नाडीपरः ; तैत्तिरीयोपनिषदि शिक्षावल्ल्यां सप्तमानुवाके - 'चर्म मांसँस्नावास्थि मज्जा' इत्यत्र स्नावशब्दस्य नाडीपरतया प्रयोगात् । 'तुन्दादिभ्य इलच्च' (पा.सू.5-2-117) इति सूत्रानुसारिणा 'स्वाङ्गाद्विवृद्धौ च' (पा.ग.सू.124) इति वार्तिकानुशासनेन विवृद्धाः स्नावा अस्मिन् सन्तीति मत्वर्थीयेलच्प्रत्यये रलयोरभेदेन लकारस्थाने रेफे च सति स्नाविरम् इति भवति । तन्न भवतीत्य-स्नाविरं स्वप्रसार्यमाणकलुषप्रयोज्यदुःखभोगाश्रयत्वसम्बन्धेन नाडीयुक्तं न भवतीति यावत् । शरीरव्यापिन्यो हि नाड्यः शरीरैकदेशवर्तिनो व्रणादेः सम्बन्धि-दुःखहेतुभूतम्मलं शरीरे प्रदेशान्तरावच्छेदेनापि सम्बन्धयन्त्यः प्रत्यगात्मनि दुःखं जनयन्ति ; न तु तथा परमात्मनि, तद्धेतुकर्माभावात् इत्यर्थः ।

अत एव - शुक्रम् - शुक्लं, रलयोरभेदात् ; निष्कलङ्कं परं ब्रह्म ; पर्यगात्-परितः प्राप्नोति, सर्वप्रकारेण अनुभवति । 'ब्रह्मविदाप्नोति परम्' (तै.आ.25) इत्युक्तफलनिर्देशोऽयम् । 'छन्दसि लुङ् लङ् लिटः' (पा.सू.3-4-6) इत्यनुशासनेन लडर्थे लुङ् ।

एवं सः - मुमुक्षुर्ब्रह्मवित् मनीषी - यथोक्तलक्षणब्रह्मवेदनमहिम्ना निरतिशयबुद्धिमान्, अत एव - कविः - कवयिता, स्वावगततत्त्वार्थानाम् अन्येभ्योऽपि ज्ञापनाय ग्रन्थग्रथनेऽपि कुशलः, अत एव परिभूः - विपरीतार्थवादिनः परिभवतीति परिभूः, कुमतिविरुद्धवादनिरसनकुशलः, अत एव स्वयम्भूः - स्वयम्भवति इति स्वयम्भूः - स्वयं सत्तावानेव सन् - 'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुः' (तै.आन.6-1) इति श्रुत्युक्त-परावरतत्त्वयाथात्म्यज्ञानलक्षणां सत्तां कुमतिविरुद्धवादाविचाल्यामेव स्वयं भजमानस्सन्नित्यर्थः ।

**शाश्वतीभ्यस्समाभ्यः** - चतुर्थ्यन्तमिदम् । बहुभ्यस्संवत्सरेभ्यः, भाविसुचिरकालोपयोगायेत्यर्थः । **अर्थान्** - परमपुरुषार्थहेतुशास्त्रार्थान्, **याथातथ्यतः** - यथातथाभावः याथातथ्यम्, ततः - वस्तुतो यथाभूताश्शास्त्रार्थाः तथात्वेनैव - पारमार्थिकाकारेणैव, न तु कुमतिपरिगृहीतविपरीताकारेणेति यावत् । **व्यदधात्** - स्वकृतग्रन्थैर्लोकेभ्यो विदधाति, ज्ञातव्यत्वेन उपादेयत्वेन च प्रतिपादनलक्षणं विधानमिह विपूर्वकदधात्यर्थः; प्रसिद्धो ह्ययमंशो ब्रह्ममीमांसातद्वृत्त्यादिग्रन्थकृत्सु भगवद्बादरायणबोधायनादिषु ब्रह्मविदग्रेसरेषु महात्मसु । अत्रापि पूर्ववत् लडर्थे लङ् इति । तथा च-स्वोज्जीवनपरोज्जीवनहेतुतया यथोक्तलक्षणं परावरतत्त्वयाथात्मज्ञानं मुमुक्षोः ब्रह्मविदोऽवश्यमुपादेयमिति भावः ।

यद्वा - 'सः' इत्यादि प्रथमान्तं सर्वं परमात्मपरं, द्वितीयान्तं सर्वं प्रकृतिविनिर्मुक्तपरिशुद्धप्रत्यगात्मस्वरूपपरमित्यपि अस्य मन्त्रस्य योजना सम्भवति । तदानी तु **शुद्धम्** - प्रकृतिविनिर्मुक्तम् । अत एव **अपापविद्धम्** - अर्थः प्राग्वत्; विशेषणान्तराणामपि तथा । **शुक्रम्** - निष्कलंकं प्रत्यगात्मानमपि, **कविः** - सर्वज्ञः, **मनीषी** - मनसैव सर्वपदार्थसंकल्पनशीलः, सहकार्यन्तरापेक्षामन्तरेण संकल्पमात्रेण जगत्सृष्ट्यादिनिर्वहणशील इति यावत्; **परिभूः** - परितो भवतीति परिभूः- - समन्ततो व्याप्तः, सर्वव्यापक इति यावत् । **स्वयम्भूः** - स्वयं भवतीति स्वयम्भूः - अकर्मायत्तस्वेच्छामात्राधीनलोकरक्षार्थनानावतार इति यावत् । **सः**-परमात्मा, **पर्यगात्** - परितो व्याप्नोति, अन्तर्बहिश्च व्याप्नोतीत्यर्थः । **अपि च** - **शाश्वतीभ्यस्समाभ्यः** - अनादिकालात् इति यावत् । **अर्थान्** - सर्वानप्यर्थान्, **याथातथ्यतः** - 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' (तै.ना.1-44) इत्यादि श्रुत्युक्तरीत्या पूर्वपूर्वकल्पानुगुण्येनैव, **व्यदधात्** - सृजति इति विवरणं बोध्यम् । परमात्मनः परिशुद्धप्रत्यगात्मसु अपि व्याप्तत्वम् अनादिकालात् यथापूर्वमेव सृष्ट्यादिकर्तृत्वं च अस्यां योजनायाम् अभिहितं भवति । लकारव्यत्ययस्तु प्राग्वदेव बोध्यः ।।

## आनन्दभाष्यम्

एवं सर्वशरीरकपरमात्मानं य उपास्ते तस्य अशेषहेयप्रतिभटपरमात्म-स्वरूपानुभवो भवतीति वदति - स पर्यगात् इति ।

सर्वभूतान्तरात्मभूतं ब्रह्म यः पश्यति, सः - तादृशब्रह्मदर्शी पर्यगात्-इत्यनेनान्वयः। किं पर्यगात्? इत्याकांक्षायामाह - शुक्रम् - रलयोरैक्यात् शुक्लम् सर्वदाऽवदातं स्वप्रकाशस्वरूपमित्यर्थः ; अकायम् - प्राकृतमांसमेदोऽस्थियुक्तशरीर-रहितम्, प्राकृतशरीरस्य कर्मजन्यत्वेन परमात्मनि असम्भवात् । एतेन दिव्यमंगल-विग्रहवत्त्वं तु तस्य अस्त्येवेति सूचितम् । अग्रे 'यत्ते रूपं कल्याणतमं तत्ते पश्यामि' (ई.उ.16) इत्यनेन तादृशमंगलविग्रहवत्त्वस्य स्वकण्ठतः अभिधास्यमानत्वात् । अव्रणम् - व्रणरहितम् कर्मजन्यशरीरे एव व्रणसम्भवात्, अक्षतं तु सर्वदैव तदीयदिव्यमंगलशरीरमिति भावः । अस्नाविरम् - स्नावाः शिरा (सिरा) यत्र सन्ति तत् स्नाविरं प्राकृतं शरीरं तदभिन्नम् अस्य शरीरं दिव्यमिति ब्रह्म 'अस्नाविरम्' उच्यते इत्यर्थः । शुद्धम् - अज्ञानादिदोषशून्यम् अशनायापिपासादिषडूर्मिरूप-दोषरहितं च । अपापविद्धम् - पुण्यपापसम्पर्कशून्यम् अज्ञानाद्यभावेन तन्मूलक-कर्मजन्यपुण्यपापयोः परमात्मनि अत्यन्तमसम्भवात् । 'न शोको न सुकृतं न दुष्कृतम्' (छां.उ.8-4-1) इत्यादिश्रुत्या पुण्यस्यापि परमात्मनि निषेधात् तस्यापि बन्धकत्वेन पापशब्देन निर्देशस्य सम्भवात् । अतः स्वर्गादिकारणीभूतपुण्य-विशेषोऽपि नात्र वर्तते इति भावः । 'एवम्भूतं परमात्मानं पर्यगात् प्राप्नुयात्' 'अत्र ब्रह्म समश्नुते' (क.उ.6-14) इति रीत्या स उपासकः ईदृशं ब्रह्म अनुभवति इत्यर्थः ।

ईदृशं ब्रह्म समाधौ यः अनुभवति सः सर्वान्तरात्मभूतब्रह्मानुभवी कीदृश इत्यपेक्षायामाह -- कविः - क्रान्तदर्शी क्रान्तपदस्य अतीतवाचकस्यापि वर्तमानभविष्यतोरपि उपलक्षणतया भूतवर्तमानभविष्यत्सर्ववस्तुद्रष्टा भवति इत्यर्थः । यद्वा ब्रह्मस्वरूपदिव्यमंगलगुणादिबोधकग्रन्थनिर्माता भवति इत्यर्थः । मनीषी - मनीषा बुद्धिः मनसः ईशितृत्वात् साऽस्यास्तीति मनीषी

भगवत्स्वरूपगुणाद्यनुसन्धानपरिपाकेन प्रतिष्ठितप्रज्ञाशाली भवतीत्यर्थः । अनेन प्रत्यगात्मसाक्षात्कारनिदानं जीवात्मयोगं प्रदर्शितवानाचार्यः । **परिभूः** - परिभवति कामक्रोधादिरूपम् आन्तरं शत्रुवर्गं यः, स परिभूः विजितान्तररिपुषड्वर्ग इत्यर्थः । एतेन योगविरोधिनिवृत्तिरूपं योगांगमपि अस्य सम्पद्यते इत्युक्तं भवति । **स्वयम्भूः** - स्वयं भवति प्रभवति सुखरूपस्वात्मदर्शने न कमपि अपेक्षते इति स्वयम्भूः - इतराननपेक्ष्य स्वात्मदर्शी । एतेन जीवात्मयोगस्य सुखरूपतया स्वात्मदर्शनरूपं फलं प्रतिपादितं भवति । **अर्थान्** - उपनिषत्प्रतिपादितान् भगवतः स्वरूपगुणसर्वशेषित्वसर्वान्तर्यामित्वादिरूपानर्थान् **याथातथ्यतः** - यथा तथा भावः याथातथ्यं तेन रूपेण योऽर्थः यादृशोऽस्ति तमर्थं तेनैव रूपेण व्यदधात् - विविच्य स्वहृदये धृतवान् । **शाश्वतीभ्यः** - नित्याभ्यः, समाभ्यः- वर्षेभ्यः, चिरकालपर्यन्तमित्यर्थः । सकलकल्याणगुणगणविशिष्टं परमात्मानं साक्षात्कृत्य चिरकालपर्यन्तं तदनुभवसुखं भुंक्ते स ब्रह्मदर्शीति भावः ।

यद्वा - पूर्वार्धगतानि शुक्रमित्यादीनि सर्वाणि द्वितीयान्तपदानि परिशुद्धे जीवे योजनीयानि, उत्तरार्धगतानि कविः इत्यादीनि सर्वाणि प्रथमान्तानि पदानि च परमात्मनि योजनीयानि । तथा च सर्वान्तरात्मभूतः स परमात्मा शुक्रादिपदजातप्रतिपाद्यजीवं पर्यगात् । स एव कविरित्यादिपदबोधितः अर्थान् व्यदधादिति वाक्ययोजना कार्या । द्वितीयान्तपदानामर्थस्तु पूर्ववर्णित एव जीवपक्षेऽपि । परिशुद्धतादशायां जीवस्यापि स्वयंप्रकाशत्वादिसद्भावात् तादृशं जीवमपि व्याप्य परमात्मा स्थितः इति पर्यगात् इत्यस्यार्थः । प्रथमान्तपदानां परमात्मपरत्वे तु अर्थभेदोऽस्ति । स यथा - कविः सर्वद्रष्टा, अथवा पंचरात्रादि-ग्रन्थनिर्माता मनीषी मनसः ईशिता, उपलक्षणमेतत् सर्वजीवकरणानाम् । तेन जीवानां यानि बाह्यानि आभ्यन्तराणि च करणानि तेषां सर्वेषां प्रेरिता इत्यर्थः । **परिभूः** - परितो भवति सर्वत्र वर्तते इति परिभूः - सर्वव्यापकः, **स्वयम्भूः** - स्वयमेव भवति इति स्वयम्भूः - स्वेच्छयैव तत्तदवतारधर्ता, न तु कर्मवशात् तादृशशरीरं धत्ते इत्यर्थः । **अर्थान्** स्रष्टव्यान् वियदादिपदार्थान् **याथातथ्यतः** - यथार्थभावेन

सत्यरूपानेवन तु मिथ्याभूतान् शाश्वतीभ्यः समाभ्यः - अगणितेभ्यः वर्षेभ्यः प्रलयकालपर्यन्तमवस्थातुं व्यदधात् विविच्य उत्पादितवान् न तु मायाविवत् केवलं प्रकाशितवान् इत्यर्थः। एतेन प्रपंचस्य सत्यत्वं प्रतिपादितं भवति, प्रपंचस्य मिथ्यात्वं वदतामद्वैतिनां मतं च निरस्तं भवति ।।

## सुबोधिनी

एवं सर्वप्रकारं परंब्रह्म परमात्मनमुपासीनस्य ब्रह्मानुभवविशेषमाह - स इति ।

**सः** - सर्वभूतान्तरात्मभूतब्रह्मदर्शी **शुक्रम्** - स्वप्रकाशरूपम् **अकायम्** - प्राकृत-कायशून्यम्, अत एव **अव्रणम्** - व्रणशून्यम्, अक्षतमिति यावत् । **अस्नाविरम्**-स्नायुशून्यम्, **शुद्धम्** - अशनायादिदोषरहितम्, **अपापविद्धम्** - पुण्यपापरूप-कर्मभिरनालीढम्, एवम्भूतं परं ब्रह्म **पर्यगात्** - समाधिदशायां परितः प्राप्तवान्, सर्वतः तमेवान्तर्यामिणमनुबभूवेति यावत् । 'अत्र ब्रह्म समश्नुते' (क.उ.6-64) इतिवत् सिद्धानुवादः । स ब्रह्मविदेवम्भूतश्चेत्याह - उत्तरार्धेन ।

**कविः** - क्रान्तदर्शी, **मनीषी** - मनसः ईशित्री बुद्धिर्मनीषोच्यते तद्वान् । निगृहीतान्तःकरणः इत्येतत् । **परिभूः** - परिभवत्यरिषड्वर्गमिति परिभूः विजितारि-षड्वर्गः। **स्वयम्भूः** - इतरनिरपेक्षः । **शाश्वतीभ्यस्समाभ्यः** - यावत् विद्यानिष्पत्तिः तावत् चिरकालपर्यन्तम् **अर्थान्** - उपनिषदर्थान् **व्यदधात्** - मनसि विविच्य रक्षितवान् ।

एवम्भूतोपनिषदर्थचिन्तकः सर्वभूतान्तरात्मब्रह्मोपासकः उपासनवेलायां निखिलहेयप्रतिभटम् अखिलान्तर्यामिणं सकलकल्याणगुणाकरं ब्रह्म सर्वतः साक्षात्कृत्य अनुभवतीति भावः ।

यद्वा - प्रसक्तं परमात्मानमनुवर्णयति - स इति । **सः** - यः सर्वान्तरात्मा अकायम् अव्रणम् अस्नाविरं शुद्धम् अपापविद्धम् अक्षरस्वरूपमपि व्याप्य तिष्ठतीत्यर्थः । सः **याथातथ्यतः** - सत्यतया **अर्थान्** - जगद्रूपान् **शाश्वतीभ्य-स्समाभ्यः** - बहुसंवत्सरेभ्यः, चिरकालस्थायितयेति भावः । **व्यदधात्** - सृष्टवान् ।

याथातथ्यतः इति प्रातिभासिकत्वव्यावृत्तिः । शाश्वतीभ्यः समाभ्यः इति स्वाप्नव्यावृत्तिः । ते हि सत्यभूता अपि कतिपयक्षणावस्थायिनः ।

## नवमो मन्त्रः

**अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।**
**ततो भूय इव ते तमो य उ विद्यायां रताः ।। 9 ।।**

## प्रतिपदार्थदीपिका

### केवलविद्यायाः केवलकर्मणश्च अनर्थफलत्वम्

एवं विचित्रशक्तिकपरमात्मविषयां कर्मयोगांगिकां ब्रह्मविद्यामुपदिश्य अनन्तरं त्रिभिः श्लोकैः केवलकर्मावलम्बिनः केवलविद्यावलम्बिनश्च पुरुषान्विनिन्दन्, वर्णाश्रमधर्मानुगृहीतया ब्रह्मविद्ययैव निश्श्रेयसावाप्तिः इत्याह - **अन्धं तमः प्रविशन्ति** इत्यादि ।

**ये अविद्याम्** - कर्मयोगं, ब्रह्मविद्यारहितं कर्म **उपासत** - एकान्तमनसः अनुतिष्ठन्ति, **ते अन्धं तमः** - नरकं विशन्ति । **ये विद्यायां रताः** - ये स्ववर्णाश्रमोचितकर्मपरित्यागेन विद्यायामेवरताः ते **ततः** - कर्मनिष्ठ-लब्धान्धंतमसनरकात् **भूय इव** - अधिकं नरकं प्राप्नुवन्ति । इवशब्दः नरकस्येयत्तारहितत्वं द्योतयति ।।

## वेदान्ताचार्यभाष्यम्

एवं विचित्रशक्तिकपरमात्मविषयां कर्मांगिकां विद्याम् उपदिश्य अनन्तरं केवलकर्मावलम्बिनः केवलविद्यावलम्बिनश्च निन्दन् वर्णाश्रमधर्मानुगृहीतया विद्ययैव निश्श्रेयसावाप्तिं आह - **अन्धं तमः प्रविशन्ति येऽविद्यामुपासत** [1]इत्यादिना ।

### केवलकर्मनिष्ठस्य प्राप्यं फलम्

**ये** - भोगैश्वर्यप्रसक्ताः, **अविद्याम्** - कर्म, ज्ञानविधुरकर्ममात्रम् । 'अविद्या [2]कर्मसंज्ञान्या तृतीया शक्तिरिष्यते' (वि.पु.6-7-61) इति हि स्मर्यते । **उपासते** -

---

1. एव च इयं मन्त्रत्रयस्य (9-10-11 मन्त्राणां) सम्भूयायतारिकेति भाव्यम् ।
2. "विष्णुशक्तिः परा प्रोक्ता-क्षेत्रज्ञाख्या तथाऽपरा । अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते ।।
   यया क्षेत्रज्ञशक्तिस्सा वेष्टिता नृप ! सर्वगा । संसारतापानखिलान्-अवाप्नोत्यतिसन्ततान् ।। "
इत्यादिविष्णुपुराणश्लोकेषु जीवस्य क्षेत्रज्ञाख्यस्य संसारतापहेतुभूतं पुण्यपापरूपं कर्मैव अविद्याशब्दनिर्दिष्टमिति भावः ।। कर्मणः अविद्याशब्दवाच्यत्वे हेतुः अत्रैव श्रीरंगाचार्यभाष्ये श्रीदेशिकभाष्ये च 11 मन्त्रे माह्यः ।

एकान्तमनसोऽनुतिष्ठन्ति इत्यर्थः । अन्धम् अतिगाढम् । तमः - अज्ञानं, त्रिवर्गाभिषंगात् नान्तरीयकं नारकं तमो वा । केवलकर्मनिरतानां दुःखानुवृत्तिमधीयते च आथर्वणिकाः

'प्लवा ह्येते अदृढा यज्ञरूपा [1]अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढाः जरामृत्यू ते पुनरेवापियन्ति'।। (मु.उ.1-2-7)

**केवलब्रह्मविद्यानिष्ठस्य प्राप्यं फलम्**

**ततो भूय इव ते तमो य उ विद्यायां रताः** - कर्ममात्रनिष्ठप्राप्यात् अन्धतमसात् अधिकं तमः स्वाधिकारोचितकर्मपरित्यागेन विद्यामात्रे रताः प्रविशन्ति । इवशब्दः तमस इयत्ताया दुर्महत्वं द्योतयति । उकार उत्तरपदेनान्वेतव्यः - विद्यायामेव रताः' इति ।

## ईशावास्यप्रकाशिका

एवं विचित्रशक्तिकपरमात्मविषया कर्मयोगाद्यंगिकां विद्यामुपदिश्य अनन्तरं त्रिभिश्श्लोकैः केवलकर्मावलम्बिनः केवलविद्यावलम्बिनश्च पुरुषान्विनिन्दन् वर्णाश्रमधर्मानुगृहीतया विद्ययैव निश्श्रेयसावाप्तिमाह - **अन्धं तमः प्रविशन्ति** इत्यादिना ।।

बृहदारण्यके चायं मन्त्रः पठितः । **ये** - भोगैश्वर्यप्रसक्ताः, **अविद्याम्** - विद्यान्या क्रिया केवलकर्म इत्यर्थः । विद्याविधुरं कर्मेति यावत् । 'अविद्या कर्मसंज्ञान्या तृतीया शक्तिरिष्यते' (वि.पु.6-7-61) इति स्मृतेः । **उपासते** - एकान्तमनसोऽनुतिष्ठन्ति; **ते अन्धं तमः** - अतिगाढं तमः अज्ञानमित्यर्थः । त्रिवर्गाभिषङ्गान्नान्तरीयं नारकं तमो वा । अधीयते च आथर्वणिकाः

---

1. षोडशऋत्विजः पत्नीसहितो यजमानश्चेति अष्टादशकर्तृकत्येनोक्तं यज्ञादिकर्म । अल्पफलत्वाच्च तदवरं कर्म । तत् येषु पुरुषेषु अनुष्ठीयमानमस्ति एते यज्ञरूपाः यज्ञप्रधानाः पुरुषाः, अदृढप्लवसदृशाः । संसारार्णवपारं न गन्तुं प्रभवन्तीति, इदमेव कर्म श्रेयोदायीति मोदमाना मूढाः जरामृत्युवशाः एवेति रंगरामानुजीयभाष्योक्तम् ।। श्रुतप्रकाशिकायां तु अष्टादशपशुहिंसापूर्वकं तद्रूपाहविष्कं कर्म किंचित् यज्ञरूपं इत्युक्त्वा "नव ग्राम्यान् पशूनालभते-नवारण्यान्-उभयान् पशूनालभते" इति वैदिकवाक्यं प्रमाणितम् ।

'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ।

एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यू ते पुनरेवापि यन्ति'।। ( मु.उ.1-2-7)

इति ।

य उ विद्यायां रताः - उकार उत्तरपदेनान्वेतव्यः । ये - स्वाधिकारोचित-कर्मपरित्यागेन विद्यायामेव रताः - ते ततः - कर्ममात्रनिष्ठप्राप्य अन्धतमसात्, भूय इव तमः - अधिकम् अज्ञानं विशन्ति । 'इव' शब्दः तमसः इयत्ताया दुर्ग्रहत्वं द्योतयति ।।

## श्रीरंगाचार्यभाष्यम्

### केवलयोः कर्म-ब्रह्मविद्ययोः अनर्थफलत्वम्

अयं मन्त्रः अस्यामुपनिषदि काण्वैः नवममन्त्रतया माध्यन्दिनैः द्वादशमन्त्रतया च पठ्यते । इतः प्राचीनेन भागेन कर्मयोगांगिका यथोक्तलक्षणज्ञानविशेषरूपां परविद्यां परमनिश्श्रेयसलक्षणमोक्षसाधनम् अभिधाय अंगांगिभावेन समुच्चयेनैव कर्मयोग-परविद्ययोः अनुष्ठानावश्यकतां ज्ञापयितुं प्रत्येकं स्वातन्त्र्येण तयोरनुष्ठाने सम्भवद्विपरीतफलमाह नवमेन मन्त्रेण ।

*अस्य पदविवरणम्* - ये - पुरुषाः, अविद्याम् - विद्येतरत् विहितं कर्मैव, अस्मिन् प्रकरणे अविद्याशब्दो विद्येतरवर्णाश्रमविहितकर्मपर एव, उत्तरत्र एकादशमन्त्रे 'अविद्यया मृत्युं तीर्त्वा' (ई.उ.11) [1]इत्यत्रत्याविद्याशब्दसमानविषयविद्याशब्द-निर्दिष्टस्य मृत्युतरणोपायताप्रतीतेः, अज्ञानरूपतच्छब्दार्थस्य तथात्वासम्भवाच्च । उत्तरार्धस्थ उकारः अत्राप्याकर्षणीयः, उत्तरार्धानुरोधात् एकमात्रानुष्ठानस्यैव अत्रापि प्रतिपिपादयिषितत्वात् । स च एवकारार्थकः । न च - अविद्याशब्दस्य विद्येतर-विषयत्वे कर्मपरत्वनिर्बन्धो हि न सुवचः, विद्येतरत्वस्य विद्यातिरिक्त-सर्वसाधारणत्वादिति वाच्यम् ; नञा सादृश्यस्यापि बोधेन मनुष्यत्वादिसादृश्येन अब्राह्मणादिशब्दस्य ब्राह्मणभिन्नक्षत्रियादिमात्रबोधकत्ववत् अत्राविद्याशब्दस्यापि

1. अत्र पूर्वमुद्रणेऽपि..."इत्यत्रत्याविद्याशब्दसमानविषयविद्याशब्दनिर्दिष्टस्य" इत्येव मुद्रितपाठः । इदमनन्वितम् । एवं तु स्यात् । "इत्यत्रत्याविद्याशब्दस्य उपासनविषयविद्याशब्देन सहनिर्दिष्टस्य मृत्युतरणोपायताप्रतीतेः" इत्यादि ।।

अदृष्टोपकारकत्वादिसादृश्येन विद्यासहचरितवर्णाश्रमादिकर्ममात्रबोधकत्व-सम्भवात् । उपासते - पुरुषार्थसाधकतया अनुतिष्ठन्ति । विद्यामन्तरेण केवलकर्मैव पुरुषार्थसाधकत्वाभिमानेन अनुतिष्ठन्ति इत्यर्थः । अत्र यच्छब्दानुरोधात् तच्छब्दोऽध्याहार्यः । ते - पुरुषाः, अन्धम् - अन्धयतीत्यन्धम् - अतिगाढम् इति यावत् । तमः - 'असुर्या नाम ते लोका अन्धेन तमसा वृता' (ई.उ.3) इति प्रागुक्तं तमोलोकमेव, प्रविशन्ति - क्रमेण प्राप्नुवन्ति, केवलकर्मणा राजसतामसप्राकृतैश्वर्यभोगमात्रहेतुतया क्रमेणतदधीनरजस्तमोगुणाभिवृद्धेः तदधीनायथावज्ज्ञानान्यथाज्ञानमूलविपरीतकर्मप्रवृत्तेरपि प्रसंगाच्च प्रागुक्तरीत्या तादृशलोकप्राप्तिप्रसंगोऽप्यवर्जनीय एवेति भावः ।

ये - पुरुषाः, विद्यायाम् उ - केवलज्ञान एव, रताः - निरताः, कात्स्न्येंन कर्मयोगं त्यक्त्वा ज्ञानयोगमात्रं पुरुषार्थसाधकत्वाभिमानेन अनुतिष्ठन्तीत्यर्थः । ते - पुरुषाः, ततः - केवलकर्मयोगमात्रानुष्ठायिपुरुषेभ्यः, भूय इव - भूय एव अधिकमेव इवकारोऽत्र एवकारार्थकः, निपातानामनेकार्थत्वात् । 'अन्धं तमः प्रविशन्ति' इत्यन्वय इति बोध्यम् । केवलकर्मानुष्ठायिना नित्यनैमित्तिककर्म-प्रहाणाभावेन तदधीनप्रत्यवायप्रसंगाभावात् शनैश्शनैरेव भूयसा कालेन रजस्तमोगुणाभिवृद्धिमूलविपरीतकर्मप्रवृत्तिनिबन्धनपातकप्रसंगसम्भवात्, प्रथमत एव कात्स्न्येंन कर्मप्रहाणपूर्वकं केवलविद्यानुष्ठायिना प्राथमिकपादप्रक्षेप-प्रभृत्यवश्यकर्तव्यनित्यनैमित्तिक-कर्मप्रहाणनिबन्धन-पापपरम्पराप्रसंगसम्भवाच्च तेभ्योपि एतेषाम् अचिरेणैव विपरीतफलप्राप्तिरिति भावः । अन्यदत्र वक्तव्यं सर्वम् एकादशमन्त्रव्याख्याने वक्ष्यामः ।।

## आनन्दभाष्यम्

कर्मयोगानुगृहीतेनैव ज्ञानयोगेन निश्श्रेयसप्राप्तिर्भवतीति विवक्षुः केवल-कर्मावलम्बिना केवलज्ञानावलम्बिना च यः अनर्थो भवति तं प्रदर्शयति ।

**ये** - भोगैश्वर्यप्रसक्तमानसाः **अविद्याम्** - विद्याभिन्ना क्रिया विद्यारहितं कर्ममात्रमुपासते तत्फलाकांक्षया अनुतिष्ठन्ति **ते अन्धं तमः**- अतिगहनमज्ञानम्आलोकसम्पर्कहीनं नरकादिलोकं वा **प्रविशन्ति** - प्राप्नुवन्ति न च स्वर्गादिसाधनकर्म कुर्वाणस्य विद्यारहितस्यापि कथं नरकप्राप्तिः ? इति - शंकनीयम् । संसारचक्रात् तस्य अनिर्मुक्तेः नरकपातस्यापि सम्भावितत्वात् ।

**य उ** - विद्यायां रताः इत्यत्र 'उ' शब्दः अवधारणार्थः विद्यायाम् इत्यनेन अन्वेति । तथा च ये विद्यायामेव रताः - 'मुमुक्षूणामस्माकं कर्मणा किं प्रयोजनम्' ? इति मन्वानाः स्ववर्णाश्रमोचितं कर्म त्यक्त्वा विद्यामेव **उपासते ते ततः** केवलकर्मावलम्बिप्राप्यतमसोऽपेक्षया **भूय इव तमः** - अधिकमज्ञानं प्रविशन्ति- प्राप्नुवन्ति कियदधिकमज्ञानम् इति अज्ञानेयत्ता न ज्ञातुं शक्यते इति 'इव' इत्यनेन द्योत्यते । कर्मायधीरणेन ज्ञानमात्रे यतमानाः सर्वथा अनर्थमुपयान्ति, कर्मणः त्यागात् ज्ञानस्य च असिद्धेः इति भावः ।।

## सुबोधिनी

केवलकर्मावलम्बिनां केवलज्ञानावलम्बिनां च अनर्थमाह - **अन्धं तमः** इति ।

**ये** - भोगैश्वर्यप्रसक्ताः । **अविद्याम्** - केवलं कर्म । **उपासते**- एकान्तमनसाऽनुतिष्ठन्ति । **ते अन्धं तमः** - गाढमज्ञानं **प्रविशन्ति** - संसारं प्रविशन्ति इति यावत् । **ये विद्यायाम् उ** - विद्यायामेव, केवलविद्यायामेव **रताः** । **ते ततः** - कर्मनिष्ठतः **भूयस्तमो विशन्ति** - अधिकं तमः प्राप्नुवन्ति ।

ये कर्मणा नः किं मुमुक्षूणाम् ? इति सर्वथा कर्मायधीर्य ज्ञानयोगे यतन्ते । ते सर्वथा अनर्थभागिनो भवन्ति कर्मणस्त्यागात् ज्ञानस्य च असिद्धेरिति भावः

* * * * *

## दशमो मन्त्रः

**अन्यदेवाहुर्विद्ययाऽन्यदाहुरविद्यया ।**
**इति शुश्रुम धीराणां ये नस्त[1]द्विचचक्षिरे ।। 10 ।।**

### प्रतिपदार्थदीपिका

किं तर्हि मोक्षसाधनम् इत्यत्राह - **अन्यदेवाहुरिति ।**

**विद्यया** - पंचम्यर्थे तृतीया । विद्यायाः कर्मरहितविद्यातः **अन्यत्** - मोक्षसाधनम् इति उपनिषदः आहुः । **अविद्यया** - अविद्यातः ब्रह्मज्ञानरहितकर्मणश्च अन्यदेव मोक्षसाधनम् इत्याहुः - उपनिषदः । एतत् सम्प्रदायसिद्धम् इत्याह - **इति शुश्रुम इति । ये** - पूर्वाचार्याः । **नः तत्** - मोक्षसाधनं **व्याचचक्षिरे** - उपदिशन्ति, **धीराणां** तेषां तेभ्यः **इति शुश्रुम** - एवं प्रकारम् अश्रौष्म ।

### वेदान्ताचार्यभाष्यम्

किं तर्हि मोक्षसाधनम् इत्यत्राह - **अन्यदेवाहुर्विद्ययाऽन्यदाहुरविद्यया इति ।** अत्र व्यत्ययानुशासनात् पंचम्यर्थे तृतीया; [1]अन्यशब्दान्वयात्, 'अन्यदेवाहुस्सम्भवात्' (ई.उ.13) वक्ष्यमाणसारूप्याच्च । केवलकर्मणः कर्मनिरपेक्षविद्यातश्च अन्यत् मोक्षसाधनम् इत्युक्तं भवति । आहुः - पूर्वाचार्या इति शेषः । औचित्यात् उपनिषद इति वा । [2]पूर्वपूर्वसम्प्रदायसिद्धः अस्माकम् अयमर्थ इत्याह - **इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे** । ये - पूर्वाचार्याः, नः - प्रणिपातादिभिः सम्यगुपसन्नानाम् अस्माकम्, तत् - मोक्षसाधनं, [3]**विचचक्षिरे** - विविच्य उपादिक्षन् । तेषाम्, **धीराणाम्**- परमात्मध्यानपराणाम् ; वचनम् इत्यध्याहार्यम् । 'नटस्य श्रृणोति' इतियद्वा कथंचित् पंचम्यर्थे षष्ठी । **इति शुश्रुम** - एवं प्रकारम् अश्रौष्म । ब्रह्मविद्याया दुरवगाहत्वेन निश्शेषग्रहणाशक्यत्वाभिप्रायोऽत्र लिडुत्तमः ।।

---

1. "अन्यशब्देनान्वयात्" इत्यर्थः । अतः मन्त्रे "विद्यया ---- अविद्यया" इत्युभयत्रापि अन्यपदेनान्वयार्थं पंचम्यर्थस्य ग्राह्यत्वेन पंचमीस्थाने तृतीया व्यत्ययो बहुलमिति व्यत्ययानुशासनादिति भावः ।। अत्र "अन्यथा अनन्वयात्" इति केषाचित् पाठशोधन सत्या गतौ न हृद्यम् ।।

1.- द्वयाचचक्षिरे - क,ग. 2. पूर्व पूर्व इति पदं नास्ति - क,ग 3. व्याचचक्षिरे - ख.

## ईशावास्यप्रकाशिका

किं तर्हिमोक्षसाधनमित्यत्राह - **अन्यदेवाहुः** इति। विद्यया इति पंचम्यर्थे तृतीया, यथाश्रुतत्वे अन्यशब्दानन्वयात्, 'अन्यदेवाहुस्सम्भवात्' (ई.उ.13) इति वक्ष्यमाणानुसाराच्च। तथा विद्यायाः - कर्मरहितविद्यातः, **अन्यत्** - मोक्षसाधनम् इत्याहुः। उपनिषद इति शेषः। **अविद्यया** - इति पूर्ववत् पंचम्यर्थे तृतीया। अविद्यातः ब्रह्मज्ञानविधुरकर्मणश्च अन्यदेव मोक्षसाधनम् इत्याहुः। उपनिषद इति भावः।

पूर्वपूर्वसम्प्रदायसिद्धोऽर्थोऽयमस्माकम् इत्याह - **इति शुश्रुम** इति। **ये**- पूर्वाचार्याः **नः** - प्रणिपातादिभिः सम्यगुपसन्नानाम् अस्माकम्, **तत्** - मोक्षसाधनम्, **विचचक्षिरे** - विविच्य उपादिशन्, तेषां **धीराणाम्** - धीमताम्। पंचम्यर्थे षष्ठी। तेभ्यो धीरेभ्य इति योजनीयम्, नटस्य श्रृणोति इतिवत्। नटाच्छृणोति इत्यर्थः। 'इति शुश्रुम' एवं प्रकारम् अश्रौष्म।

ननु - परोक्ष एवार्थे लिड्विधानात् 'शुश्रुम' इति लिडुत्तमपुरुषो न घटत इति चेत् - मैवम्; ब्रह्मविद्याया दुरवगाहत्वेन निश्शेषग्रहणम् अस्माभिः न कृतम् इत्यभिप्रायं कृत्वा लिडुत्तमस्योपपत्तेः इत्याहुः॥

## श्रीरंगाचार्यभाष्यम्

अस्मिन्मन्त्रे तृतीयान्तयोर्विद्याविद्याशब्दयोः स्थाने पंचम्यन्तौ तौ, 'व्याचचक्षिरे' इति स्थाने 'विचचक्षिरे' इति शब्दं च माध्यन्दिनाः पठन्ति। मुमुक्षोः कर्मणा सह विद्याया अंगांगिभावेन अनुष्ठानस्यैव स्थापनीयतया तयोरेकानुष्ठानानौचित्य-प्रतिपादनमन्तरेण तदसम्भवात् तत्र विपरीतफलप्राप्तिप्रतिपादनरूपेणैकेन प्रकारेण पूर्वमन्त्रे तदनौचित्यं प्रतिपाद्य पुनरवान्तरफलभेदप्रतिपादनरूपेण प्रकारान्तरेणापि तदनौचित्यं प्रतिपादयति दशमेन मन्त्रेण।

*अस्य पदविवरणम्* :- विद्यया - यथोक्तलक्षणज्ञानरूपपरविद्यया ; अन्यदेव- अविद्याशब्दितकर्मयोगसाध्यफलात् अन्यदेव फलम् । 'पूर्वे ब्रह्मविदः' इति शेषः । 'आहुः - वदन्ति । एवम्, अविद्यया - कर्मयोगेन । अन्यदेव - पूर्व एवकारः अत्रापि अनुषज्यते । विद्यासाध्यफलात् अन्यदेव फलम् आहुः - धीराणाम् - ब्रह्मविदाम् । इति - एवम्भूतं वचनम् । शुश्रुम - अश्रौष्म । के ते ब्रह्मविदः ? येभ्य इत्थम्भूतं वचनं श्रुतमित्यत्राह - य इत्यादि । ये - ब्रह्मविदः अस्मदाचार्यभूताः । नः- अस्मभ्यम् । तत् - विद्याविद्ययोः फलभेदविषयं वचनम् । व्याचचक्षिरे - उपादिक्षन् । पूर्वपूर्वब्रह्मवित्सम्प्रदायपरम्पराप्राप्तमेव अमुमर्थं विधिवत् उपसन्ना वयम् यथावदुपासितेभ्यः स्वाचार्येभ्य एव अश्रौष्म । न तु [1]प्रामाणिकत्वाप्रामाणिकत्व-निश्चयानर्हसाधारणलोकमुखात् । अतः परमार्थभूत एवायम् इति भावः । 'शुश्रुम-व्याचचक्षिरे' इत्युभयत्रापि लुङर्थे केवलभूते लिट्, भूतानद्यतनपरोक्षार्थस्य इह असम्भवात् । 'छन्दसि लुङ् लङ् लिटः' (पा.सू.3-4-6) इत्यनुशासनेन लुङर्थेऽपि छन्दसि लिट्भवतीति न विरोध इति बोध्यम् ।

### विद्याविद्ययोः एकमात्रानुष्ठानस्य अयुक्तत्वम्

इदमत्र तात्पर्यम् - अविद्याशब्दितस्य कर्मणः तत्तदसाधारणफलाभिसन्धिपूर्वकम् अनुष्ठितस्य तत्तदैहिकामुष्मिकपुत्रपश्वादिस्वर्गादिरूपप्राकृतभोगैश्वर्यलक्षणं फलम् ; तत्तदसाधारणफलाभिसन्धिमन्तरेण मुमुक्षुणाऽनुष्ठितस्य तस्य विद्योत्पत्त्युपचय-विरोधिमृत्युशब्दितपुण्यापुण्यकर्मनिवृत्तिमात्रं च फलम् ; विद्यायास्तु अमृत-शब्दितब्रह्मप्राप्तिः फलम् । तथा च विद्यासाध्यफलात् अविद्यासाध्यफलं, अविद्यासाध्यफलात् विद्यासाध्यफलं च परस्परं भिन्नमेव ; तत्र प्रथमफलहेतु-भूतस्य कर्मणः केवलस्य अनुष्ठानं पूर्वमन्त्रोक्तरीत्या मोक्षविरोधिफलहेतुत्वात् अन्ततो अन्धतमसप्राप्तिलक्षणमहानर्थहेतुत्वाच्च मुमुक्षोः अनुपादेयमेव, द्वितीय-फलहेतुभूतस्य कर्मणोऽपि केवलस्य अनुष्ठानं विरोधिनिवृत्तिमात्रहेतुत्वात् विद्याया एव ब्रह्मप्राप्तिहेतुत्वाच्च मुमुक्षोः न अभिमतसाधने पर्याप्तम् ।

---

1. अत्राप्रामाणिकत्वेत्यधिकम्-व्यर्थं च ।

विद्यायाः केवलाया अनुष्ठानमपि नित्यनैमित्तिककर्माननुष्ठाननिबन्धन-प्रत्यवायबलेन विपरीतमहानर्थप्राप्तेः विद्योत्पत्त्युपचयविरोधिना पुण्यापुण्यलक्षणाना प्राचीनकर्मणां निवृत्त्यसिद्ध्या विद्यानिष्पत्तेरेव असम्भवाच्च मुमुक्षोर्नाभिमत-साधनक्षमम् ; तस्मान्मुमुक्षोः विद्याविद्ययोरेकमात्रे अनुष्ठानम् अयुक्तमेव इति।

फलाभिसन्धिरहितमनुष्ठितस्यापि कर्मणो ज्ञानविरोधिप्राचीनकमनिवृत्तिः फलमिति, विद्याया ब्रह्मप्राप्तिः फलमिति च फलभेदः - 'अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' (ई.उ.11) इत्युत्तरमन्त्रे व्यक्तीभविष्यति।

**विभक्तिव्यत्ययस्वीकारपक्षानादरः**

अत्र अन्यपदयोः द्वयोरपि परस्परसमभिव्याहृतविद्याऽविद्यासाध्यफलभेद-परतायाः स्वरसत एव लाभेन अन्यपदानन्वयहेतुना विद्याऽविद्याशब्दगत-तृतीययोः छान्दसव्यत्ययेन अवधिपंचम्यर्थपरतास्वीकारेण केषांचिद्व्याख्यान-मयुक्तमेव। एवम् - 'अन्यदेवाहुस्सम्भवात्' इति वक्ष्माणमन्त्रनिर्देशस्य इह तृतीयायाः अवधिपंचम्यर्थपरतास्वीकारगमकत्ववर्णनमपि अयुक्तम्। तृतीयापंचम्योः उभयोरऽपि हेतुपरतयैव स्वरसतो निर्वाहसम्भवे छान्दसव्यत्ययमाश्रित्य तृतीयायाः अवधिपंचम्यर्थपरतास्वीकारस्य अनावश्यकत्वात्।

एतेन - माध्यन्दिनपाठे अत्रापि विद्याऽविद्याशब्दयोः पंचम्यन्तताश्रवणमपि काण्वपाठसिद्धतृतीयायाः अवधिपंचम्यर्थपरतास्वीकारगमकम् इत्यपि निरस्तम्, तृतीयायाः स्वरसत एव हेतुपरतास्वीकारे बाधकलेशविरहेण छान्दसव्यत्यय-कल्पनस्य अयुक्तत्वात्।

एवं - 'विद्यां चाविद्यां च' इत्याद्येकादशमन्त्रे विद्याऽविद्ययोः अमृतप्राप्ति-मृत्युतरणरूपे द्वे फले निर्दिश्य मुमुक्षोः तदुभयावश्यकत्वेन तद्धेतूभयानुष्ठानम् उपादेयमिति समर्थनात् तदुपष्टम्भकतयैव अस्य मन्त्रस्य प्रवृत्तत्त्वाच्च तदैक-कण्ठ्यानुरोधेनापि अस्य मन्त्रस्य फलभेदप्रतिपादनपरत्वमेव स्वारसिकम्, न तु अप्रसक्तस्य विद्यमानशब्दालभ्यस्य अध्याहारैकलभ्यस्य मोक्षसाधनस्य विद्याऽविद्याभिन्नत्वपरत्वम् इत्यलं बहुना।

### विद्योपदेष्टृपुरुषविशेषनिर्णयः

ननु अत्र विद्योपदेष्टा पुरुषः कः? वेदपुरुष इति चेत् - स किं नित्यसूरिषु कश्चित्? आहोस्वित् सर्वेश्वर एव ? अथवा - ऐहलौकिक एव कश्चित्पुरुष-विशेषः? न तावत् प्रथमद्वितीयपक्षौ सम्भवतः - स्वतस्सिद्धसार्वकालिकसार्वज्ञयोः नित्यसूरिसर्वेश्वरयोः पूर्वाचार्याधीनज्ञानत्वाभावेन - 'ये नस्तद्व्याचचक्षिरे' इत्युक्त्य-सङ्गतेः । नापि तृतीयपक्षस्सम्भवति । अर्वाचीनैहलौकिकपुरुषोपदेशवचनरूपत्वे वेदस्य अनित्यताप्रसंगात्, पौरुषेयत्वनिबन्धनभ्रमप्रमादविप्रलिप्सामूलत्वसम्भाव-नार्हतया स्वतस्सिद्धसुदृढप्रामाण्यविलयप्रसंगाच्च इति चेत् ; न, नित्यानामेव सतां वेदानां स्वाभिप्रायावेदकस्योपदेशवचनरूपतया तपोविशेषशालिनः चिरोपासित-सदाचार्यसम्प्रदायप्राप्तसकलार्थस्य लोकरक्षार्थभगवत्कटाक्षविशेषनिश्शेषनिर्धूता-ज्ञानगन्धस्य ऐहलौकिकस्यैव पुरुषविशेषस्य मुखादाविर्भावसम्भवात्, तथाविधस्य वेदप्रवचनकर्तृतया वेदाचार्यमात्रभूतस्य पुरुषविशेषस्य चतुर्मुखादिवत् प्रतिकल्पभाव्याधिकारिकपुरुषरूपत्वात्, वेदानां तादृशपुरुषवचनरूपतया तदभिप्रायस्यैव वेदाभिप्रायरूपतया च माननीयताया अपि ईश्वरशासनसिद्ध-तथाविधपुरुषविशेषाधिकारविशेषायत्तत्वाच्च यथोक्तदोषगन्धानवकाशात् ।

### उक्तार्थे महाभारतप्रमाणप्रदर्शनम्

तदिदं सर्वमभिप्रेत्यैव उक्तम् - महाभारते शान्तिपर्वणि, मोक्षधर्मपर्वणि पंचाशदधिकत्रिशततमे नारायणीये षोडशे च अध्याये वेदानामपौरुषेयतायाः तदितरशास्त्राणां पौरुषेयतायाश्च प्रतिपादनपरे -

"सांख्यं योगः पांचरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ।।
सांख्यस्य वक्ता कपिलः परमर्षिस्स उच्यते ।
हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः ।।
उमापतिः पशुपतिः श्रीकण्ठो ब्रह्मणस्सुतः ।
उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः ।।

अपान्तरतमा नाम वेदाचार्यस्स उच्यते ।

पंचरात्रस्य कृत्स्नस्य वक्ता नारायणस्वयम् ।।" (म.भा.शान्तिमोक्षधर्म 356)

इति प्रकरणे - 'अपान्तरतमा नाम वेदाचार्यस्स उच्यते । इति । अत्र सांख्य-योगपाशुपताना कपिलहिरण्यगर्भाः प्रणेतारः - पंचरात्रस्य तु स्वयं नारायणः प्रणेता इति तेषा पौरुषेयत्वम्, - वेदाना तु उपदेष्टृत्वेन अपान्तरतमा नाम कश्चित् आचार्य एवास्ति - न तु तत्प्रणेता कश्चिदिति वेदानामपौरुषेयत्वावेदनाय अपान्तरतमसो नाम कस्यचित्पुरुषविशेषस्य वेदाचार्यत्वलक्षणाधिकारविशेषमात्रं च हि प्रत्यपादिषाताम्।

**आधिकारिकवेदपुरुषद्वारा वेदाविर्भावः**

तस्मात् स एव च वेदपुरुषः, तादृशश्चाधिकारिकः पुरुषः चतुर्मुखादिवत् भिन्नभिन्न एव च तदातदा प्रतिकल्पभावी, तदुपदेशवचनरूपतया तन्मुखाविर्भाव-मात्रेण च न वेदानामनित्यताप्रसंगः, नित्यनामेव सता तेषा तथाऽऽविर्भावसम्भवात्; पौरुषेयत्वाभावेनैव भ्रमप्रमादादिदोषाभावात् च न अनित्यत्वाप्रामाण्यप्रसंगगन्ध इति न कश्चिद्विरोधः ।।

## आनन्दभाष्यम्

तर्हि मोक्षसाधनं किन्ते अभिमतमिति शिष्यजिज्ञासायाम् आह गुरुः

अन्यदेवाहुः --------- इति । विद्यया - इत्यत्र पंचम्यर्थे तृतीया, अतः विद्यया-केवलविद्यातः अन्यत् - भिन्नं मोक्षसाधनम् आहुः, अविद्यया - इत्यत्रापि पंचम्यर्थकतृतीयासत्त्वात् अविद्यायाः ब्रह्मज्ञानरहितकेवलकर्मणोऽपेक्षयापि अन्यदेव-मोक्षसाधनम्, आहुः - उपनिषदः, इति अध्याहार्यम् । इति केवलकर्मतः केवल-ज्ञानतश्च भिन्नं मोक्षसाधनम् इत्येवंरूपं धीराणाम् बुद्धिमतां परमात्मध्यानवताम् आचार्याणाम्; वचनम् इत्यध्याहार्यम् शुश्रुम - श्रुतवन्तो वयम् ।

के ते धीराः? इत्याकांक्षायाम् आह - ये नस्तद्विचचक्षिरे ये - पूर्वकालीनाः, आचार्याः ; नः - शरणमुपगतानाम् अस्माकं कृते तत् - मोक्षसाधनं विचचक्षिरे - विविच्य व्याख्यातवन्तः उपदिदिशुः इत्यर्थः, अतः परम्परासिद्धोऽयमर्थ इति व्यज्यते ।

अत्र आचार्यवचनश्रवणस्य प्रत्यक्षत्वेऽपि परोक्षार्थे भाविनः लिटो विधानं ब्रह्मविद्यायाः दुर्ग्रहत्वेन आचार्यवचनश्रवणेऽपि पूर्णतया अस्माभिरपि न अवगतम् इति तात्पर्येण 'सुप्तोऽहं किल विललाप' इत्यादिवत् न विरुद्धम् इति ध्येयम् ।।

## सुबोधिनी

तर्हि मोक्षसाधनं किम्? इत्यत्राह - अन्यदेवाहुः इति ।

विद्यया - विद्यातः ; केवलविद्यातः अन्यदेव, अविद्यया - अविद्यातः ; केवलकर्मतः अन्यदेवं मोक्षसाधनमाहुः । पंचम्यर्थे तृतीया । पंचम्यन्त एव पाठः केषांचित् । ये नः तत् - कर्मज्ञानोभयं मोक्षसाधनं विचचक्षिरे - उपादिशन् । तेषां धीराणाम् । वचनमिति शेषः । शुश्रुम - श्रुतवन्तो वयम् ।।

* * * * *

## एकादशो मन्त्रः

**विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।**
**अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ।। 11 ।।**

## प्रतिपदार्थदीपिका

**विद्याविद्ययोरंगांगिभावेनानुष्ठितयोः फलम्**

अन्यदिति सामान्योक्तं मोक्षसाधनं विवृणोति विद्यां चाविद्यां च इति ।

**यः** - यथावस्थितब्रह्मविद्यावान् **विद्याम्** - ब्रह्मविद्यां उपासनरूपाम् **अविद्याम्**- तदंगभूतकर्मात्मिकां च एतत् **उभयं सह वेद** - अंगांगिभावेन अनुष्ठेयम् इत्यर्थः । **अविद्यया** - विद्यांगभूतकर्मणा **मृत्युम्** - ब्रह्मविद्योत्पत्तिप्रतिबन्धकं प्राचीनं कर्म । **तीर्त्वा** - निरवशेषम् उल्लंघ्य **विद्यया** - परब्रह्मोपासनया **अमृतमश्नुते** - मोक्षं प्राप्नोति इत्यर्थः ।।

## वेदान्ताचार्यभाष्यम्

**कर्मांगकविद्यायाः एव मोक्षसाधनत्वम्**

'अन्यत्' इति संग्रहेणोक्तं विवृणोति **विद्यांचाविद्यां च यस्तद्वेदोभयं सह** इति । **यः** - यथावस्थितोपदेशवान् । **विद्याम्** - परमात्मोपासनरूपाम् **अविद्याम्** - तदंगभूतकर्मात्मिकां च एतदुभयं परस्परविरोधप्रसंगरहितम् । **सह वेद** - अंगांगिनोः अनुष्ठेयत्वसाम्यात् उभयं सह वेद इति अविशेषेण वेदनीयतोक्तिः, न पुनः [1]हेयोपादेययोः ज्ञातव्यत्वसाम्यात् । [2]पूर्वमविद्याया निन्दनात् तदौचित्यमिति चेत्, तर्हि विद्याया अपि निन्दिततया

---

1. हानार्थं ज्ञातव्यमेकं, उपादानार्थं ज्ञातव्यमपरम् - इति भावयन्तः कर्मणो हानार्थं ब्रह्मविद्यायाः उपादानार्थं च वेदनं अत्रोक्तमिति अद्वैतिनो वदन्ति । तथा न । किन्तु अंगांगिभावेन उभयोरपि अनुष्ठानार्थमुपादेयतैव- अतः अविशेषेण उभयोः वेदनीयता - इत्याशयः ।

2. "अन्धं तमः प्रविशन्ती"ति पूर्वं नवममन्त्रे अविद्योपासकानां निन्दादर्शनात्, पुनः प्रकृतमन्त्रे विद्यया सह अविद्यां च यः वेदेति ग्रहणं हेयतया ज्ञातव्यत्व परमेवौचित्यात् - इति चेत् - इत्याक्षेपाशयः । "तर्हि विद्याया अपि" इत्यादिना तत्समाधानम् । तर्हि तत्रैव नवममन्त्रे उत्तरार्धे "ततो भूय इव" इत्यादिना विद्योपासकानां च ततोऽधिकं निन्दनात् तस्या अपि हेयत्वेनैव ज्ञानापत्तिः । तस्याः विद्यायाः अत्रैवोक्ता "अमृतमश्नुते" इति मोक्षसाधनता च विरुध्येत । अतः सहवेदनं अंगांगिभावेनैव ।।

हेयद्वयसमुच्चयोक्तिप्रसंगः । तथा सति उत्तरवाक्यमपि विघटते । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते इति । अयमर्थः - अविद्यया - विद्यांगतया चोदित-कर्मणा मृत्युं ज्ञानसंकोचरूपमृत्युहेतु प्राक्तनकर्म । तीर्त्वा - निरवशेषम् उल्लंघ्य । विद्यया - पूर्वोक्तपरमात्मानुदर्शनरूपया । अमृतमश्नुते - 'एतदमृतमभयमेतद्ब्रह्म' (छां.उ.4-15-1) इत्यादिषु सर्वदोषरहितत्वेन प्रतीतं परमात्मानं प्राप्नोति इत्यर्थः । अत्र अमृतशब्दस्य [1]मोक्षपरत्वेऽपि न पुनरुक्तिः, 'मृत्युं तीर्त्वा' इत्यस्य उपायविरोधितरणपरत्वात्, 'अमृतमश्नुते' इति प्राप्तिविरोधिनिवृत्तिलाभोक्तेः । 'अत्र अविद्यया [2]मृत्युं प्राप्य स्थिताः' इति व्याचक्षणाः निर्बाधं पदवाक्यस्वारस्यमुप-बृम्हणं च प्रस्मृत्य स्वाविद्यया स्वयमेव मृत्युं प्राप्य स्थिताः ।

**विद्यांगकर्मणोरंगांगिभावे पुराणसम्मतिः**

एतदेव वाक्यम् अनुसंहितं वैष्णवे पुराणे -

[3]'इयाज सोऽपि सुबहून्यज्ञान् ज्ञानव्यपाश्रयः ।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया' ।। (वि.पु.6-6-12) इति ।

इह तु अविद्याशब्दः प्रकरणात् औचित्याच्च विद्यांगकर्मविषय इत्यभाषि भाष्यकारैः - 'अत्र अविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्म' इति, 'मृत्युतरणोपायतया प्रतीताऽविद्या विद्येतरद्विहितं कर्मैव' इति च । विद्यां पर्युदस्यन् अयम् अविद्याशब्दः क्षत्रियादिविषयाब्राह्मणशब्दादिवत् [4]आसन्नतदनन्तरवृत्तिरंगकर्मविषय इति भावः ।

---

1. "मोक्षपरत्वेऽपि" इति । मृत्युशब्दस्य मोक्षप्रतिबन्धकपुण्यपापरूपकर्मार्थकत्वे तस्य तरणमेव अमृतत्वमिति सिद्धया, पुनः "अमृतमश्नुते", इति हि पुनरुक्तिः । इत्याशक्य, अमृतशब्दस्य "तदमृतं ----- एतदब्रह्म" इति श्रुत्यनुसारतः ब्रह्म प्राप्नोतीति अर्थकथनात् दोषः वारितः । अथ प्रतिबन्धकनिवृत्तिरूपमोक्षपरत्वाश्रयणेऽपि न अमृतपदस्य मृत्युतरणरूपार्थेन पूर्वोक्तेन पुनरुक्तिः भिन्नविषयत्वादिति समाधानान्तरम् । पूर्वत्र मृत्युतरणं नाम-ब्रह्मज्ञानोत्पत्तिप्रतिबन्धकपापविनाशः । तावन्मात्रं अविद्याख्यकर्मानुष्ठानजन्यफलम् । उत्तरवाक्ये ब्रह्मविद्याफलं तु ब्रह्मप्राप्तिबन्धकसर्वपापनिवृत्तिः । सैवात्रामृतशब्दवाच्यमोक्ष इति न पुनरुक्तिरिति भावः।

2.यद्यपि तीर्त्वा इत्यस्य प्राप्त्यर्थकता, स्थिताः इत्यध्याहारः च इतीदृशी योजना न शांकरभाष्ये । तथापि तन्मतानुयायिग्रन्थेषु ब्रह्मसिद्धिप्रभृतिष स्थिता इति तन्निरासोऽत्र बोध्यः ।।

3."इयाज" एतच्छ्लोकार्थः यात्स्यनारायणभाष्ये श्रीभाष्यानुसारेण दर्शितो दृष्टव्यः ।।

4. अत्र "आसन्नतदन्यवृत्तिः अंगकर्मविषयः" इति पाठस्साधुः । क्वचित् "आसन्नतदनन्तरवृत्तिः इति, अन्यत्र अन्तरंगकर्मविषय" इति च दृष्टं पाठद्वयं अनन्तर-अन्तरंगशब्दद्वयस्य अनतिप्रयोजनत्वात् नादृतम् । आसन्नो यो विद्याशब्दः तदर्थादन्यस्मिन् विद्यांगभूते यज्ञादिकर्मणि वर्तते इति अर्थो ग्राह्यः । अब्राह्मणशब्दवत् इत्येतद्विवरणं नवममन्त्रे श्रीरंगाचार्यभाष्ये स्पष्टार्थमिति तत्रैव दृष्टव्यम् ।

एवम् -

> 'तपो विद्या च विप्रस्य निःश्रेयसकरावुभौ ।
> तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते' ।। (म.स्मृ.12-104)

इत्याद्युपबृम्हणान्यपि सुसंगतानि भवेयुः ।

### यादवप्रकाशमतम्

[1]ये पुनः इह विद्याकर्माख्यसाधनद्वयसमुच्चयं मृत्युतरणामृतत्वप्राप्तिरूपसाध्यद्वित्वं च वर्णयन्ति, तेषां कर्मज्ञानयोः अंगांगिभावं, विद्ययैव मृत्युतरणं च व्यक्तं प्रतिपादयद्भिः श्रुतिस्मृतिसूत्रगणैः यथाभाष्यम् उत्तरं देयम् । [2]विषमसमुच्चयवादेऽपि यथाभागं सन्निपत्योपकारकत्वसम्भवे गत्यन्तरगमनिका नीतिविद्भिः न सम्मन्यते ।।

## ईशावास्यप्रकाशिका

'अन्यत्' इति सामान्येनोक्तं मोक्षसाधनं विवृणोति विद्यांचाविद्यां च इति ।

'कुर्वन्नेवेह कर्माणि' इति श्लोके कर्मयोगस्य प्रत्यगात्मदर्शनद्वारा परभक्त्युत्पादकत्वम् उक्तम्, इह तु उत्पन्नभक्तियोगेन विदुषा पूर्वोक्त-कर्मयोगवेषं परित्यज्य अहरहरनुष्टीयमानानां नित्यनैमित्तिककर्मणां कल्मषनिबर्हण-द्वारा भक्तियोगोपचायकत्वम् उच्यते, सहशब्दस्वारस्यात् । अतो न पुनरुक्तता ।

---

1. ये पुनरिति - यादवप्रकाशमतमेतत् । प्रत्येकं साध्यद्वयं, तत्साधनद्वयं च प्रत्येकमिति तन्मते मन्त्रस्य योजना । तत्रापि अविद्यया कर्मणा मृत्युतरणं नाम - पुण्यपापरूपसर्वबन्धनिवृत्तिरिति तदिष्टम् । तदयुक्तमिति श्रीभाष्ये लघु-सिद्धान्ते श्रुतिस्मृतिसूत्रगणैः उत्तरं दत्तम् । "सर्वापेक्षा च यज्ञादिश्रुतेः" इत्यादि सूत्रेण तद्विषयवाक्यभूतया यज्ञेन दानेन तपसा --- विविदिषन्तीति श्रुत्या, "इयाज सोऽपि --- इत्यादि पुराणोक्त्या च कर्मज्ञानयोः अंगांगिभावसिद्धिः । तथा "तदधिगमे उत्तरपूर्वाघयोः ---- " इत्यादि सूत्रेण, 'विद्वान् पुण्यपापे विधूय ------ परमं साम्यमुपैति' इत्यादि श्रुत्या च विद्ययैव सर्वमृत्युतरणपूर्वकब्रह्मसायुज्यसिद्धिः । अतोऽत्रापि मन्त्रे अंगांगि-भावरूपसाहित्यमेव विवक्षितमिति साध्यसाधनयोः विशिष्टविधया ऐक्यमेव न द्वित्वमिति तन्मतनिरासः ।
2. विषमसमुच्चयवादो भास्करीयः । तन्मते कर्मज्ञानयोरुभयोरपि मोक्षसाधनत्वम् । अथापि ज्ञानस्य सन्निपत्योपकारकत्वरूपं साक्षात्प्रधानसाधनत्वम् कर्मणस्तु आरादुपकारकत्वरूपं अप्रधानसाधनत्वं । तच्च ज्ञाने फलजननशक्त्याधायकताद्वारा परंपरया साधनत्वरूपम् । "यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती"ति श्रुतेः कर्मणा फलजनने विद्यायाःसहकारित्वोक्तिवत् । भगवद्रामानुजमते तु, कर्मणो विद्यां प्रत्येव अंगता, न मोक्षसाधनता - इति भेदो भाव्यः । सम्भवति सन्निपत्योपकारकत्वे आरादुपकारकत्वं नाश्रयणीयमिति हि नीतिविदो मीमांसकाः ।

**यः** - यथावस्थितविद्योपदेशवान् । **विद्याम्** - ब्रह्मोपासनरूपाम् । **अविद्याम्**- तदंगभूतकर्मात्मिका च एतदुभयम् । **सहवेद** - अंगांगिभावेन सह अनुष्ठेयं वेद इत्यर्थः। अत्र अविद्याशब्दः क्षत्रियविषयकाब्राह्मणशब्दवत् तदन्यवृत्त्या विद्यांगकर्मविषय इति भावः । **अविद्यया** - 'विद्यांगरूपतया चोदितेन कर्मणा, **मृत्युम्** - विद्योत्पत्तिप्रतिबन्धकभूतं पुण्यपापरूपं प्राक्तनं कर्म । **तीर्त्वा**- निरवशेषमुल्लंघ्य **विद्यया** - परमात्मोपासनरूपया । **अमृतमश्नुते** - मोक्षं प्राप्नोति इत्यर्थः । 'तीर्त्वा' इत्यत्र उपायविरोधितरणम् उच्यते । 'अमृतमश्नुते' इति तु उपेयब्रह्मप्राप्तिविरोधिभूतेभ्यः सर्वपापेभ्यो मोक्ष इति भेदः ।

### उपबृम्हणविवरणम्

एवं च सति -

> 'इयाज सोऽपि सुबहून्यज्ञान् ज्ञानव्यपाश्रयः ।
>
> ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया' ।। (वि.पु.6-6-12)

**ज्ञानव्यपाश्रयः** - शास्त्रश्रवणजन्यब्रह्मज्ञानवान् । [1]**सः** - जनकोऽपि **ब्रह्मविद्याम्** - निदिध्यासनरूपाम् । **अधिष्ठाय** -- फलत्वेन आश्रित्येत्यर्थः ; भक्तियोगोत्पत्तिं कामयमान इति यावत् । **मृत्युं** - भक्त्युत्पत्तिविरोधि प्राचीनं कर्मजातम्, **अविद्यया** - अनभिसंहितफलेन विद्यांगकर्मणा, **तर्तुं** - व्यपोहितुम्, **सुबहून् यज्ञान्** - ज्योतिष्टोमादिकान् **इयाज** - अकरोत् इत्यर्थः । 'पाकं पपाच' इतिवत् । यथा - 'कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः' (म.भा.शां.276) परमभगवदाराधनरूपाणि इति अनभिसंहितस्वर्गादिफलानि कर्माणि कषायस्य उभयविधपापस्य तज्जन्यरागद्वेषादेर्वा पक्तिः विनाशकारणानि । ज्ञानं तु परमागतिः परमगतिसाधनमित्यर्थः । उभयत्रापि कारणे कार्योपचारः ।

---

1. विष्णुपुराणश्लोके सः इति केशिध्वजो विवक्षितः । तस्यात्र जनकत्वेन निर्देशः निमिवंशीयानां सर्वेषां राज्ञां जनकत्वेनैव व्यवहारादिति समाधेयम् । खाण्डिक्यकेशिध्वजौ निमिकुलोद्भवाविति विष्णुपुराणे ।।

'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' । (म.भा.शां.276)

'तपो विद्या च विप्रस्य निःश्रेयसकरावुभौ ।

तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते' ।। (म.स्मृ.12-104)

इत्यादीन्युपबृम्हणशतानि सुसंगतानि भवेयुः ।।

## श्रीरंगाचार्यभाष्यम्

### पूर्वानुवादेन प्रकृतसंगतिप्रदर्शनम्

इमं मन्त्रं काण्वा एकादशमन्त्रतया, माध्यन्दिनाः चतुर्दशमन्त्रतया च पठन्ति । अस्यामुपनिषदि प्रथममन्त्रे विद्यालक्षणं परावरतत्त्वज्ञानं संग्रहेण मुमुक्षोः उपदिश्य ततो द्वितीयमन्त्रे - 'कुर्वन्नेवेह कर्माणि' (ई.उ.2) इति विद्यांगतया कर्मयोगानुष्ठानमपि आवश्यकमिति संक्षेपतो दर्शयित्वा ततः तृतीयमन्त्रे प्रथमद्वितीयमन्त्रोक्तज्ञानकर्मयोगनिष्ठाविहीनानां विपरीतफलप्राप्तिप्रदर्शनमुखेन तादृशनिष्ठावश्यकतां च दर्शयित्वा ततश्चतुर्थप्रभृति अष्टमपर्यन्तमन्त्रैः प्रथममन्त्रोक्तविद्यालक्षणविज्ञाने परावरतत्त्वयाथात्म्यानुसन्धानप्रकारं मोहशोकनिवृत्तिलक्षणं तदवान्तरफलविशेषं च प्रदर्श्य ततो द्वितीयमन्त्रे संग्रहेणोक्तं विद्यांगतया कर्मणोऽपि सहानुष्ठानावश्यकत्वं सम्यक् स्थापयितुं नवमदशममन्त्रयोः विद्याकर्मणोरेकैकमात्रानुष्ठानं न कर्तुमर्हम्, विपरीतफलप्रसंगात्, द्वयोरपि फलभेदात्, विद्याकर्मसाध्ययोः द्वयोरपि फलयोः मुमुक्षोरपेक्षितत्वेन एकमात्रानुष्ठाने तदभिमतासिद्धेश्च इत्युक्तम् ।

### विद्याकर्मणोरंगांगिभावेन अनुष्ठानम्

अथ कौ तावन्मुमुक्षोरपेक्षितौ विद्याकर्मसाध्यौ फलभेदौ; तत्र किं किं फलं केन केन साध्यते ? इत्याशंकां विविच्य तत्प्रतिपादनेन परिहृत्य, तत एव हेतोः विद्याकर्मणोः साहचर्येण अंगांगिभावेन च अनुष्ठानावश्यकतां स्थापयति एकादशेन मन्त्रेण 'विद्यांचाविद्यां च' इत्यादिना ।

*अस्य मन्त्रस्य पदविवरणम्* - यः - मुमुक्षुः । **विद्यां च** - यथोक्तविज्ञान-विशेषलक्षणां ब्रह्मविद्यां च, **अविद्यांच** - विद्याभिन्नम् अदृष्टफलोपकारकत्वेन तत्सदृशम् अंगतया तत्प्रत्यासन्नं वर्णाश्रमादिविहितं कर्मयोगं च, तदुभयम् । **सह** - परस्परसहचरम् । **वेद** - जानाति । ज्ञानस्य अनुष्ठानफलत्वात् ज्ञात्वा अंगांगिभावेन सह अनुतिष्ठति इत्यर्थः । कर्मणां फलाभिसन्धिपूर्वकम् अनुष्ठीय-मानानामेव मोक्षविरोधिफलान्तरहेतुत्वेन विद्याविरोधसम्भवात्, फलाभिसन्धिं परित्यज्य अनुष्ठीयमानानां तेषां विज्ञानैकहेतुत्वेन विद्याविरोधविरहाच्च, फलाभि-सन्धिं परित्यज्य विद्याविरोधं परिहृत्य अंगांगिभावेन परस्परसाहचर्येण उभय-मनुतिष्ठतीति यावत् । स इति शेषः ; यत्तदोर्नित्यसम्बन्धात् । सः - तादृशो मुमुक्षुः । **अविद्यया** - यथोक्तलक्षणेन कर्मणा । **मृत्युम्** - विद्योत्पत्तिविरोधि पुण्यपापरूपं प्राचीनं कर्म । **तीर्त्वा** - व्यपोह्य । **विद्यया** - ब्रह्मविद्यालक्षणेन विज्ञानेन । **अमृतम्** - ब्रह्म । **अश्नुते** - प्राप्नोति इति ।

#### विद्याऽविद्याशब्दयोः श्रीभाष्योक्तं अर्थवर्णनम्

अत्र अविद्याशब्दस्य कर्मपरता ; मृत्युशब्दस्य ज्ञानोत्पत्तिविरोधिपुण्यपापरूप-प्राचीनकर्मपरता ; अमृतशब्दस्य ब्रह्मपरता च श्रीभाष्यकारैरेव जिज्ञासाधिकरण-श्रीभाष्ये भाषिता । यथोक्तं तत्र 'अत्राविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्म ; **अविद्यया** - कर्मणा, **मृत्युम्** - ज्ञानोत्पत्तिविरोधि प्राचीनं कर्म, **तीर्त्वा** - व्यपोह्य, **विद्यया** - ज्ञानेन, **अमृतम्** - ब्रह्म प्राप्नोति इत्यर्थः । मृत्युतरणोपायतया प्रतीताऽविद्या विद्येतरद्विहितं कर्मैव' इत्यादि ।

#### विद्याकर्मणोः अंगांगिभावेनाऽनुष्ठानावश्यकता

तथा च - मृत्युशब्दितविद्यानिष्पत्तिविरोधिपुण्यपापरूपप्राचीनकर्मनिबर्हणम् अविद्याशब्दितवर्णाश्रमविहितकर्मफलम् । अमृतशब्दितब्रह्मप्राप्तिश्च विद्याफलम् । तत्र प्रथमफलमन्तरेण विद्यानिष्पत्त्ययोगात्, तदभावे परमपुरुषार्थभूतब्रह्मप्राप्ति-लक्षणद्वितीयफलासिद्धेश्च प्रथमफलसाधनभूतवर्णाश्रमविहितकर्मलक्षणा अविद्या

द्वितीयफलसाधनभूतविज्ञानलक्षणा विद्या च इति, उभयोरपि परस्परविरोधप्रसंग-परिहारपूर्वकम् अंगांगिभावेन साहचर्येण अनुष्ठानम् मुमुक्षोः अवश्यापेक्षितम् इति भावः ।

### कर्मानुष्ठाननिवर्त्यमृत्युस्वरूपनिर्णयः

न च -

'अपि चेदसि पापेभ्यस्सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ।।
यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ।
ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा ।।
न हि ज्ञानेन सदृशं पवित्रमिह विद्यते' । (भ.गी.4-36, 37,38)

इति गीताचतुर्थाध्यायवचनैः ज्ञानस्यैव सर्वकर्मनिबर्हणसामर्थ्यावगमात्, 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्थाः' (श्वे.उ.3-8) इति श्रुत्यापि ज्ञानस्यैव मृत्युतरणोपायताप्रतिपत्तेश्च, मृत्युतरणं कर्मलक्षणाविद्यासाध्यं फलम्, ब्रह्म-प्राप्तिस्तु विद्यासाध्यं फलमिति विद्याऽविद्ययोः व्यवस्थितफलभेदकल्पनम्, ततश्च तयोरंगांगिभावेन साहचर्येण अवश्यानुष्ठेयत्वकथनं च कथं संगच्छत इति वाच्यम्; विद्यानिष्पत्त्यनन्तरं ब्रह्मप्राप्तिविरोधिसर्वकर्मणां तया निबर्हणसम्भवेऽपि विद्योत्पत्तिविरोधिप्राचीनकर्मणां स्वयमनिष्पन्नया तया पूर्वमेव निबर्हणायोगेन तन्निबर्हणस्य दर्शितशास्त्राभिप्रेतत्वासम्भवात्, तन्निबर्हणपूर्वकविद्यानिष्पत्तेः अनभिसंहितफलानुष्ठितवर्णाश्रमविहितकर्मयोगाधीनतायाः शास्त्रेणैव सिद्धत्वाच्च, ब्रह्मप्राप्तेर्विद्योत्पत्तिविरोधिप्राचीनकर्मनिबर्हणस्य च विद्याविद्ययोः व्यवस्थित-फलरूपतायाः तत एव हेतोः तयोः साहचर्येण अनुष्ठेयतायाश्च अभिधाने क्षतिलेशादर्शनात् । अत एव - 'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते' (भ.गी.4-38) इत्युक्त्यनन्तरमेव - 'तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति' (भ.गी.4-38) इति तादृशं ज्ञानं चिरकालानुष्ठितानभिसंहितफलकर्मयोगाधीन-विद्योत्पत्तिविरोधिप्राचीनकर्मनिबर्हणरूपसंसिद्धिमानेव विन्दति इत्यभिहितम् ।

### अंगांगिभावेन साहित्यसमर्थनम्

अत एव गीताशास्त्रे आष्टादशाध्यायान्ते वर्णाश्रमप्रतिनियतकर्मणां विविच्य प्रतिपादनानन्तरम् -

'स्वे स्वे कर्मण्यभिरतस्संसिद्धिं लभते नरः ।
स्वकर्मनिरतस्सिद्धिं यथा विन्दति तच्छृणु' ।। (भ.गी. 18-45)

इत्यादिना ग्रन्थेन अनभिसंहितफलानुष्ठितस्वस्ववर्णाश्रमधर्मलक्षणकर्मयोगस्य विद्योत्पत्तिरूपम् अर्वाचीनफलं विद्यानिष्पत्तिद्वारा ब्रह्मप्राप्तिलक्षणं परमफलं च प्रति हेतुत्वं प्रतिपादयता भगवता वासुदेवेनैव विद्याविद्ययोः यथोक्तलक्षण-फलभेदहेतुत्वेन अविद्याया अपि परमफलप्रयोजकत्वसद्भावेन च हेतुना तयोः साहचर्येण अंगांगिभावेन अनुष्ठेयत्वमेव दर्शितम् । एवं श्रीविष्णुपुराणेऽपि -

'इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः ।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया' ।। (वि.पु.6-6-12)

इति वचनेनापि साक्षात् एतन्मन्त्रोपबृम्हणभूतेन अयमर्थस्स्पष्टमभिहितः ।

अत्र - आगमोक्तब्रह्मज्ञानाश्रयः केशिध्वजो ब्रह्मप्राप्तिहेतुभूतां ब्रह्मविद्यां प्रीति-रूपापन्नदर्शनसमानाकारध्रुवानुस्मृतिशब्दितब्रह्मध्यानधारारूपां साध्यत्वेन उद्दिश्य तत्सिद्धये तद्विरोधिप्राचीनकर्मलक्षणं मृत्युं फलाभिसन्धिरहितवर्णाश्रमविहितकर्म-योगलक्षणाविद्यया तर्तुं बहून् य ज्ञानकार्षीत् इति हि उक्तम् ।

एवम् -

'तपो विद्या च विप्रस्य निश्श्रेयसकरं परम् ।
तपसा किल्बिषं हन्ति विद्ययाऽमृतमश्नुते' ।। (म.स्मृ.12-104)

इति मनुवचनेनापि साक्षादेतच्छ्रुत्युपबृम्हणभूतेन अयमर्थः उक्तः । एवम् - 'धर्मेण पापमपनुदति' (तै.ना.144) इति तैत्तिरीयोपनिषदि षष्ठप्रश्ने नारायणे त्रिषष्ठितमानुवाकगतश्रुत्यैककण्ठ्यात् 'अविद्यया मृत्युं तीर्त्वा' इत्यत्र मृत्युशब्दो विद्योत्पत्तिविरोधिप्राचीनसुकृतदुष्कृतरूपद्विविधकर्मपरः, मोक्षविरोधित्वाविशेषेण अत्रत्यपापशब्दस्य उभयपरताया एव विवक्षितत्वात् ।

### 'कर्मणा पितृलोकः' इति बृहदारण्यकश्रुतिविरोधपरिहारः

न च एवं सति - 'कर्मणा पितृलोको विद्यया देवलोकः' (बृ.उ.3-5-16) इति बृहदारण्यकश्रुतिविरोधः, कर्मविद्ययोः परस्परविरुद्धफलकत्वावगमात् इति - वाच्यम्; तादृशश्रुतौ कर्मशब्दस्य फलाभिसन्धिसहितकेवलस्वयंप्रधानपुण्यकर्मविषयत्वात्, तावता फलाभिसन्धिरहितकर्मणां परविद्यांगतया तदन्तर्भूतानाम् अनुष्ठाने विरोधाभावात्, विनियोगपृथक्त्वेन फलाभिसन्धिसहितकर्मणां तद्रहितकर्मणां च फलभेदस्य शास्त्रेणैव सिद्धत्वाच्च ।

### मुमुक्षोरपि कर्मानुष्ठानविधानप्रपंचनम्

यथा हि - 'अथ ये यज्ञेन दानेन तपसा लोकान् जयन्ति ते धूममभिसम्भवन्ति' (बृ.उ.8-2-16) । 'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' (छा.उ.5-10-3) इत्यादि श्रुतिभिः -

'त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान्' ।। (भ.गी.9-20)

इत्यादिस्मृतिभिश्च कर्मणां नश्वरलोकावाप्त्यादिफले विनियोगोऽवगम्यते ; तथैव 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' (बृ.उ.6-4-22) । 'धर्मेण पापमपनुदति' (तै.ना.144) 'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि' (छा.उ.5-11-5) इत्यादिश्रुतिभिः, भगवता वासुदेवेन गीतायाम् अष्टादशाध्याये -

'त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।
यज्ञदानतपः कर्म न त्याज्यमिति चापरे' ।। (भ.गी.18-3)

इति पक्षद्वयमुपक्षिप्य -

'यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्' ।। (भ.गी.18-5)

इति मुमुक्षूणामपि विद्याविरोधिपापनिवर्तकत्वरूपपावनत्वेन हेतुना कर्मणाम् अनुष्ठेयत्वपक्षस्यैव सिद्धान्तितत्वात् ; तृतीयाध्यायेऽपि 'कर्मणैव हि संसिद्धिमास्थिता

जनकादयः' (भ.गी.3-20) इति ज्ञान्यग्रेसरजनकादीनां कर्मानुष्ठानप्रदर्शनात् ; चतुर्थाध्याये -

'एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।

कुरु कर्मैव, तस्मात्त्वं पूर्वैः पूर्वतरं कृतम्' ।। (भ.गी.4-15 )

इति मुमुक्षूणामेव पूर्वेषाम् अनुष्ठानप्रदर्शनपूर्वकं कर्मणोऽवश्यानुष्ठेयत्वविधानात्,

'इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः ।

ब्रह्मविद्यामधिष्ठाय तर्तुम्मृत्युमविद्यया' ।। (वि.पु.6-6-12)

इति प्रागुदाहृतविष्णुपुराणवचनात् एवं जातीयाभ्यो अन्याभ्यो बहुभ्यः स्मृतिभ्यश्च कर्मणां पापनिवृत्तिज्ञानोत्पत्त्यादिफलेऽपि विनियोगोऽवगम्यत इति विनियोग-पृथक्त्वेन बुभुक्षोर्मुमुक्षोश्च द्वयोरपि कर्मानुष्ठानं प्राप्तमेव ।

**बुभुक्षुमुमुक्षुभेदेन कर्मद्वैविध्यम्**

'एतान्यपि तु कर्माणि संगं त्यक्त्वा फलानि च ।

कर्तव्यानीति मे पार्थ निश्चितम्मतमुत्तमम्' ।। (भ.गी.18-6)

'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणःफलम् ।

भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचित्' ।। (भ.गी.18-12)

'सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।

मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्' ।। (भ.गी.18-56)

'चेतसा सर्वकर्माणि मयि सन्न्यस्य मत्परः ।

बुद्धियोगमुपाश्रित्य मच्चित्तस्सततं भव' ।। (भ.गी.18-57)

इत्यादिभिर्वचनैः गीताशास्त्रे फलाभिसन्धिपूर्वकम् अनुष्ठितकर्मणामेव स्वर्गादि-फलप्राप्तिः, फलाभिसन्धिरहितमेव त्रिविधत्यागपूर्वकमनुष्ठितकर्मणां मोक्षविरोधि-तादृशफलराहित्यं, परम्परया विरोधिपापनिवृत्तिज्ञानोत्पत्तिद्वारा ब्रह्मप्राप्तावेव पर्यवसानं च इति प्रतिपादयता भगवता वासुदेवेनैव बुभुक्षुभिरनुष्ठेयानि फलाभिसन्धिसहितकर्माणि, मुमुक्षुभिरनुष्ठेयानि फलाभिसन्धिविधुरत्रिविधत्याग-सहितकर्माणि इति कर्मद्वैविध्यमपि सम्यगुपपादितम् ।

अतः - 'कर्मणा पितृलोकः' (बृ.उ.3-5-16) इत्यत्र कर्मशब्दः फलाभिसन्धिसहितविद्यानन्तःपातिकर्मविषयः । इह अविद्याशब्दः फलाभिसन्धिविधुरत्रिविधत्यागसहितविद्यान्तःपातिकर्मविषय इति न कश्चिद्विरोधगन्धः ।

### पितृलोकशब्दस्य अन्तरिक्षलोकपरत्वम्

अत्र पितृलोकशब्दः - उपलक्षणविधया वा, पितृशब्दविवक्षितकर्मफलानुभवितृकत्वेन वा, ब्रह्मलोकपर्यन्तसर्वपुण्यलोकात्मकान्तरिक्षलोकमात्रपरः - 'अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोकः' (बृ.उ.3-5-16) इति । इत्येतत्प्रकरणस्थलोकत्रयनिर्देशस्य 'त्रयो लोका एत एव वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः' (बृ.उ.3-5-4) इति पूर्वप्रकृतलोकत्रयनिर्देशसमानविषयत्वात्, ईक्षतिकर्माधिकरणे त्रित्वेन लोकनिर्देशघटकान्तरिक्षलोकशब्दस्य चतुर्मुखलोकपर्यन्तोपरितनसर्वपुण्यलोकपरताया भाष्यकारैः निर्णीतत्वाच्च ।

### देवलोकशब्दस्य परमपुरुषलोकपरत्वम्

'विद्यया देवलोकः' (बृ.उ.3-5-16) इत्यत्र देवलोकशब्दस्तु सर्वपुण्यलोकोत्तीर्णपरमपदाख्यनित्यसूर्यावासभूतभगवल्लोकपरः, तद्घटकदेवशब्दस्य 'यत्र पूर्वे साध्यास्सन्ति देवाः' (तै.आर.3-12) इत्युक्तनित्यसूरिलक्षणदेवपरत्वात् 'देवलोको वै लोकानां श्रेष्ठस्तस्माद्विद्यां प्रशंसन्ति' (बृ.उ.1-5-16) इत्यत्र प्रकरणविवक्षितदेवलोकस्य सर्वलोकश्रेष्ठतायाः, तत्प्राप्तिहेतुविद्यायाः सर्वप्रशस्ततायाश्च अभिधानेन 'ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति' (भ.गी.9-21) । 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन' (भ.गी.8-16) इत्यादिषु निन्द्यमानपुण्यलोकपरत्वासम्भवात्, ईक्षतिकर्माधिकरणे आथर्वणिकश्रुतिघटकलोकत्रयनिर्देशे ब्रह्मलोकशब्दनिर्दिष्टतृतीयलोकस्य परमपुरुषलोकताया निर्णीतत्वेन तत्स्थानीयत्वात् 'तमेवं विद्वानमृत इह भवति। नान्यः पन्था अयनाय विद्यते' (तै.आर.3-12) इत्यादिनिर्देशवत् 'विद्यया देवलोकः' (बृ.उ.3-5-16) इति

निर्देशस्यापि विद्यायाः एव परमपदप्राप्तिं प्रति प्रधानहेतुत्वाभिप्रायकत्वाच्च । एतदभिप्रायेणैव च इहापि 'विद्ययाऽमृतमश्नुते' इति निर्देशः ।

न च एतावता कर्मयोगस्य विद्यां प्रति तद्द्वारा परमपुरुषार्थलक्षणमोक्षं प्रति च न प्रयोजकत्वम् इति कथंचिदपि वक्तुं शक्यम् । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' (बृ.उ.6-4-22) इत्यादि प्रागुदाहृतश्रुति-स्मृत्यादिप्रमाणगणविरोधात्, 'क्रियावानेष ब्रह्मविदां वरिष्ठः' (मुं.उ.3-1-4), 'यक्ष्यमाणो ह वै भगवन्तोऽहमस्मि' (छां.उ.5-11-5), 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' (भ.गी.3-20) इत्यादि प्रमाणप्रतिपन्नब्रह्मविदाचारविरोधात्, 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (ब्र.सू.3-4-26), 'सहकारित्वेन च' (ब्र.सू.3-4-33) इति सूत्राभ्यां कर्मणा विद्योपकारकत्वसहकारित्वप्रतिपादकब्रह्ममीमांसाकर्तृभगवद्-बादरायणाशयविरोधाच्च । इत्थं सर्वत एव कर्मणां ब्रह्मविद्योपकारकत्व-सहकारित्वयोः प्रतिपन्नत्वादेव इहापि --- 'कुर्वन्नेवेह कर्माणि' (ई.उ.2) इत्यादिना 'विद्यां च अविद्यां च' इत्यादिना च ब्रह्मविदमुद्दिश्यैव ब्रह्मविद्याकर्मयोगयोः उभयोः अनुष्ठानं विधीयत इति न कश्चिद्विरोधः ।

### शंकरतदनुयायिमतानौचित्यम्

एतेन - ब्रह्मविद्याकर्मयोगयोः परस्परविरुद्धफलकत्वेन तयोरुभयोः अनुष्ठानं ब्रह्मविदो न सम्भवति इत्यभिसन्धाय - 'कुर्वन्नेव' इत्यादेः -- 'विद्यां चाविद्यां च' इत्यादेश्च अविद्वदधिकारिपरतया शंकरतदनुयायिकृतं व्याख्यानमसमंजसमेव । दर्शितप्रमाणगणैः कर्मणां विद्योपकारकत्वसहकारित्वयोस्सिद्ध्या ब्रह्मविदः कर्मयोग-ब्रह्मविद्ययोः अनुष्ठानासम्भववादस्य अयुक्तत्वात्, अविद्वदधिकारिणं प्रति वक्तव्यं कृत्स्नं कर्मयोगं प्रागेव कर्मकाण्डे विविच्याभिधाय तन्निरूपणसमापनानन्तरं प्रवृत्ते ज्ञानकाण्डेऽस्मिन् पुनः सामान्येन तं प्रति कर्मयोगविधानस्य निष्प्रयोजनत्वात्, विद्वत्प्रकरणमध्ये अविदुषः प्रसंगस्यैव असम्बद्धत्वात्, अविद्वदधिकारिणं प्रति अमृतप्राप्तिप्रयोजकविद्याभिधानायोगाच्च । अत्र विद्यापरत्वम् अस्वीकृत्य अर्वाचीनदेवताज्ञानपरत्वेन -- 'अमृतमश्नुते' इत्यस्य ब्रह्मप्राप्ति-

परत्वमस्वीकृत्य अर्वाचीनदेवतात्मभावप्राप्तिपरत्वेन च शंकरकृतं व्याख्यानमपि अनुपादेयं, साक्षादेतच्छ्रुत्युपबृम्हणभूतप्रमाणविरुद्धत्वात्, ब्रह्मवित्प्रकरण-विरुद्धत्वाच्च ।

### अमृतशब्दस्य मुक्त्यर्थकत्वस्थापनम्

'इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः ।
ब्रह्मविद्यामधिष्ठाय तर्तुम्मृत्युमविद्यया' ।। (वि.पु.6-6-12)

इति विष्णुपुराणवचनम् -

'तपो विद्या च विप्रस्य निश्श्रेयसकरं परम् ।
तपसा किल्बिषं हन्ति विद्ययाऽमृतमश्नुते'।। (म.स्मृ.12-104)

इति मनुवचनं च हि साक्षादेतच्छ्रुत्युपबृम्हणभूतम् । अत्र हि 'ब्रह्मविद्यामधिष्ठाय' इत्यनेन --- 'परं निश्श्रेयसकरम्' इत्यनेन च दर्शितश्रुतिगतस्य विद्याशब्दस्य ब्रह्मप्राप्तिलक्षणपरमपुरुषार्थहेतुपरविद्यापरत्वम् 'अमृतमश्नुते' इति शब्दस्य तादृश पुरुषार्थपरत्वं च प्रस्फुटमेव व्याख्यातम् । प्रसिद्धश्च उपनिषत्सु ब्रह्मप्राप्तिलक्षण-परमपुरुषार्थपर एव अमृतप्राप्तिनिर्देशो बहुधा ।

बृहदारण्यके चतुर्थाध्याये पंचमब्राह्मणे प्रथमादिषु चतुर्दशसु खण्डिकासु --- 'एष त आत्माऽन्तर्याम्यमृतः' (बृ.उ.5-7) इति । एवम् अन्यत्रापि च बहुलम् अमृतशब्दो ब्रह्मपर एव प्रयुज्यते । एवम् - - 'कर्मणा पितृलोकः' (बृ.उ.3-5-16) इति श्रुतौ विद्याशब्दस्य देवतात्मज्ञानपरत्वम् आश्रित्य तदैककण्ठ्येन अत्रत्याविद्याशब्दस्यापि तत्परत्ववर्णनमपि असंगतम्, तथा सति कर्मविद्ययोः परस्परविरुद्धफलत्वेन समुच्चयासम्भवाभिप्रायकस्य तत्र तदश्रवणस्य अत्र तत्सम्भवाभिप्रायकस्य तच्छ्रवणस्य च सन्दर्भविरुद्धत्वात् । कर्मसामान्यस्य ब्रह्मविद्याविरोधित्वाभिमानेन इह विद्याविद्ययोः समुच्चयश्रवणात् न इयं श्रुतिः ब्रह्मविद्विषया किन्तु अविद्विषयैव इत्यभिप्रायेण व्याख्यानमप्यसत्, फलाभिसन्धिसहितस्य कर्मणो मोक्षविरोधि-तत्तदर्वाचीनफलहेतुत्वेन ब्रह्मविद्याविरोधित्वसम्भवेऽपि फलाभिसन्धिरहितप्रागुक्त-लक्षणत्रिविधत्यागसहितकर्मणा प्रत्युत ब्रह्मविद्यानिष्पत्तिप्रयोजकत्वस्य प्रागुक्त-प्रमाणगणसिद्धत्वेन कर्मसामान्यस्य ब्रह्मविद्याविरोधिताया असम्भावितत्वात् ।

### शांकरादिव्याख्यानस्य निर्युक्तिकत्वम्, प्रकरणविरोधश्च

यदपि -- बृहदारण्यकोपनिषदि षष्ठाध्याये 'किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः' (बृ.उ.6-4-22) इति -- ब्रह्मविदाम् गार्हस्थ्यत्यागदर्शनं, श्वेताश्वतरोपनिषदि 'अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसंघजुष्टम्' (श्वे.उ.6-21) इति तुर्याश्रमिषु ब्रह्मविद्योपदेशदर्शनं च उपजीव्य तादृशानामेव विद्याधिकारं, तेषु अग्निहोत्रादिकर्माभावेन कर्मणो विद्यानपेक्षिततत्त्वं च निश्चित्य मुमुक्षोः ब्रह्मविद्यानिष्ठस्य विद्यासाहचर्येण कर्मणः अनुष्ठानप्रसंगाभावेन विद्या-विद्ययोः समुच्चयेन अनुष्ठानविधायिनी 'विद्यां चाविद्यां च' इत्यादिरियं श्रुतिः अविद्वद्विषयैव इत्यभिप्रायकं शांकरव्याख्यानम् ।

### सन्न्यासिनां गृहस्थानां च ब्रह्मविद्याधिकारः

तदप्यसत् --- सूत्रकारेण 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' (बृ.उ.6-4-22) इत्यादिश्रुत्या कर्मणां ब्रह्मविद्या-साधनत्वावगमादुपनिषत्सु गृहस्थानामेव प्रायशो ब्रह्मविद्यानुष्ठानदर्शनाच्च हेतोः तुर्याश्रमिणां विद्यासाधनकर्माभावेन विद्यानधिकारमेव आशंक्य तेषामपि अग्नि-होत्रादिकर्माभावेऽपि स्वाश्रमानुगुणजपतपःप्रभृतिविद्योपकारककर्मसम्भवमुपपाद्य कथंचिदेव तेषां विद्याधिकारस्थापनात् गृहस्थानामेव विद्यायाम् अधिकारस्य मुख्यतया अवगमेन, तेषां विद्यानधिकारकथायाः कर्मणां विद्यानुपकारकत्व-कथायाश्च सुदूरपराहतत्वात् ।

### गृहस्थस्य ब्रह्मविद्याधिकारव्यवस्थापनम्

अत एव च श्वेताश्वतरोपनिषदि -

'तपः प्रभावाद्देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वान् ।

अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसंघजुष्टम्' ।। (श्वे.उ.6-21)

इत्येतन्मन्त्र एव पूर्वार्धे तुर्याश्रमिणोऽपि श्वेताश्वतरस्य आचार्यस्य उपासनोपकारक-तपःप्रभावशब्दितकर्मसहकारेण तत्सहकृत उपासनप्रीतभगवत्प्रसादेन च ब्रह्मविद्या-

निष्पत्तिप्रतिपादनेन विद्याविद्ययोः समुच्चयेन अनुष्ठानमेव दर्शितम् । एव तत्रैव उपरितनमन्त्रे -

'वेदान्ते परमं गुह्यं पुरा कल्पे प्रचोदितम् ।

नाप्रशान्ताय दातव्यं नापुत्रायाशिष्याय वा पुनः' ।। (श्वे.उ.6-22)

इत्येवंरूपे पुत्राय विद्योपदेशकर्तव्यताप्रतिपादके गृहस्थानामपि प्रत्युत विद्यायामधिकारसद्भाव एव प्रतिपाद्यते । अत एव छान्दोग्योपनिषदि अष्टम-प्रपाठके पंचदशे खण्डे ब्रह्मविद्योपदेशान्ते गुरोर्लब्धब्रह्मविद्योपदेशस्य अधिकारिणः -- 'कुटुम्बे शुचौ देशे' (छा.उ.8-15-1) इत्यारभ्य 'स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्तते न च पुनरावर्तते' (छा.उ.8-15-1) इति यावदायुषं गार्हस्थ्य एव कर्मानुष्ठानेन सहस्थितिः अन्ते अपुनरावृत्तिलक्षणब्रह्मप्राप्तिरूपपरमपुरुषार्थप्राप्तिश्च अभिहिता । इत्थमेव च सूत्रकारेणापि 'कृत्स्नभावात्तु गृहिणोपसंहारः' (ब्र.सू.3-4-47) इति सूत्रे सर्वेष्वाश्रमिषु विद्यासद्भावादेव अत्र गृहस्थाश्रमेण उपसंहारः कृत इति अस्याश्श्रुतेः अर्थो विवृतः।

**'विद्याविद्ययोस्सहानुष्ठानम् अब्रह्मविद्विषयम्' इति मतनिरासः**

तस्मात् ब्रह्मविद्यायाम् आश्रमान्तरनिष्ठानाम् अनधिकारात् तुर्याश्रमनिष्ठानामेव अधिकारात् कर्मणां गृहस्थाश्रममात्रविश्रान्तत्वेन तुर्याश्रमनिष्ठानां तदभावाच्च कर्मणां ब्रह्मविद्यानपेक्षितत्वेन इह विद्याविद्ययोः सहानुष्ठानप्रतिपादनम् अविद्वद्विषयमेव इति शांकरव्याख्यानमसमंजसं श्रुतिविरुद्धं सूत्रकारानभिमतं च इति सिद्धम् । प्रागुदाहृतप्रमाणैः विद्यायाः सर्वाश्रमिसाधारण्यस्यैव अवगमात्, तुर्याश्रमिणां अग्निहोत्रादिकतिपयकर्माभावेऽपि जपतपःप्रभृतिस्वाश्रमानुगुणकर्मसद्भावात् तत्सहकारेणैव विद्यासिद्ध्यवगमाच्च विद्यायाः कर्मसाहचर्येण अनुष्ठेयत्वप्रतिपादने विरोधगन्धाभावात्, विद्वत्प्रकरणमध्येऽविदुषः प्रसंगलेशाभावाच्च । तथा च- यथोक्तलक्षण एवार्थः अस्याश्श्रुतेः स्वीकर्तुम् उचितो विद्वद्भिः इत्यलम् अतिविस्तरेण ।।

## आनन्दभाष्यम्

### कर्मणः भक्तियोगद्वारा मोक्षफलकत्वम्

किं तत् अन्यत् मोक्षसाधनम् इति शिष्याकांक्षां परिजिहीर्षुः आचार्यः विवृणोति - विद्यां चाविद्यां च इति।

**यः** - यथावद् गुरूपदेशलब्धविद्यः विद्याम् - ब्रह्मोपासनात्मिकाम् **अविद्यां च**- ब्रह्मोपासनांगभूतां वर्णाश्रमोचितनित्यनैमित्तिककर्मरूपां **सह** - अंगांगिभावेन अनुष्ठानयोग्यम् **उभयम्** - ज्ञानकर्मरूपं **तत्** - मोक्षसाधनं **वेद** - जानाति तादृश[1]मोक्षसाधनज्ञाता **अविद्यया** - विद्यांगभूतेन कर्मणा **मृत्युम्** - विद्याविरोधिपुण्य-पापरूपं प्राचीनं कर्म **तीर्त्वा** - अतिक्रम्य **विद्यया** - परमात्मोपासनेन **अमृतम्**- मोक्षम् **अश्नुते** - लभते ।

अत्र ब्रह्मोपासनारूपस्य उपायस्य विरोधि मृत्युशब्दितं यत् पुण्यपापरूपं कर्म, ततः तरणं तीर्त्वा इत्यनेन प्रतिपाद्यते । उपेयभूतब्रह्मणः प्राप्तौ विरोधिरूपेभ्यः संचितपुण्यपापात्मकसर्वकर्मभ्यो मोक्षम् अमृतम् अश्नुते इत्यनेन प्रतिपाद्यते इति विवेकोऽनुसन्धेयः ।

एवं द्वितीयमन्त्रे कर्मणां परमभक्तिसाधनत्वम् उक्तम् । अस्मिन्मन्त्रे तु वर्णाश्रमोचितनित्यनैमित्तिककर्मणां पापनिकृन्तनद्वारा भक्तिवृद्धिहेतुत्वमुक्तम् इत्यपि ध्येयम् ।

## सुबोधिनी

### कर्मज्ञानयोगयोरंगांगिभावेन अनुष्ठानं तत्फलं च

तदेव विवृणोति - विद्यां च इति ।

**विद्यां चाविद्यां च** - कर्म ज्ञानमुभयमपि । **यः सह वेद** - साहित्यमेकफलकत्वम् अंगांगिभावेन वेदेति यावत् । सः **अविद्यया** - कर्मणा । **मृत्युम्** - विद्याविरोधिपापम् । **तीर्त्वा** - सन्तीर्य । **विद्यया** - लब्धोपासनेन । **अमृतम्** - मोक्षम् । **अश्नुते** ।।

---

1. मोक्षसाधनं ज्ञातयान् मुमुक्षुः - इत्यर्थः।

## द्वादशो मन्त्रः

**अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते ।**
**ततो भूय इव ते तमो य उ सम्भूत्याँ रताः ।। 12 ।।**

## प्रतिपदार्थदीपिका

**सम्भूत्यसम्भूत्योरेकैकस्यानुष्ठाने दोषः**

अन्धं तमः प्रविशन्ति इति।

ये - पुमांसः विद्याधिकारिणः, **असम्भूतिमेव** - मानदम्भहिंसास्तेयादीनां योगविरोधिनां निवृत्तिमेव **उपासते** - अनुतिष्ठन्ति, **ते** - पुमांसः **अन्धं तमः**- अतिगाढं तमः - अज्ञानं **प्रविशन्ति** इत्यर्थः । **ये च** पुमांसः **सम्भूत्यामेव रताः**- समाधिरूपसम्भूत्यामेव निरताः **ते ततः भूय इव** - तस्मादधिकतरं तम एव, अज्ञानमेव प्रविशन्ति इति भावः ।।

## वेदान्ताचार्यभाष्यम्

तदेवमुपास्यं परमात्मतत्त्वं सांगतदुपासनरूपं च परमहितं परमपुरुषार्थपर्यन्तम् उपदिश्य अनन्तरं त्रिभिश्श्लोकैः प्रतिबन्धनिवृत्तिपरब्रह्मानुभवरूपयोः फलपर्वणोः समुच्चित्यानुसन्धानं [1]विद्यागत्वेन उपादेयम् इत्युच्यते ।

**सम्भूतिविनाशयोरेकैकानुसन्धानस्य निन्दा**

तत्र प्रथमम् एकैकमात्रानुसन्धानं निन्दति -- **अन्धं तमः — रताः** इति।

'एतमितः प्रेत्याभिसम्भवितास्मि' (छां.उ.3-14-4) 'धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भयामि' (छां.उ.8-13-1) इत्यादिषु ब्रह्मप्राप्तिरूपा सम्भूतिरुक्ता। तां पर्युदस्यन् अयमसम्भूतिशब्दः तदासन्नप्रतिबन्धविनाशमभिधत्ते । 'सम्भूतिं च

---

1. 'विद्यागत्वेन' - इति । यथाकृतुन्यायेन यथोपासनं फलमिति बोधनात् ब्रह्मोपासनागत्वेन पुण्यपापरूपकर्मप्रहाणचिन्तनं अर्चिरादिमार्गचिन्तनं च कार्यमिति श्रीभाष्ये हान्यधिकरणादिषु स्पष्टम् । तथा च उपरि 14 मन्त्रे पुण्यपापरूपप्रतिबन्धनिवृत्तिपूर्वकभगवदनुभवरूपविशिष्टफलानुसन्धानं ब्रह्मविद्यागतया विधित्सन् आदौ विशेषणविशेष्ययोः अन्यतरस्यैव फलत्वानुसन्धायिनं तत्तदधिकारिणं निन्दति 12 मन्त्रेणानेन इति भावः ।।

विनाशं च' इत्यपि हि अनन्तरमुच्यते । न च अत्र असम्भूतिशब्देन सम्भूतेरनुत्पत्तिः विनाशो वा प्रतिपाद्यः । अमृतप्राप्तिहेतुतयोक्तायास्सम्भूतेः प्रागभावस्य प्रध्वंसस्य वा मृत्युतरणहेतुत्वेन वक्तुम् [1]अयुक्तत्वात् । अत्रापि तरतेः प्राप्तिवचनत्वं पूर्ववत्प्रतिक्षेप्यम् ।।

## ईशावास्यप्रकाशिका

एवं समाधिनिष्पत्तेः अनभिसंहितफलनित्यनैमित्तिककर्मसाध्यत्वमुपदिश्य अनन्तरं त्रिभिश्श्लोकैः निषिद्धनिवृत्तिरूपयोगांगसाध्यत्वमाह । तत्र प्रथमं पूर्ववदेकैकमात्रनिष्ठान्विनिन्दति - अन्धं तमः प्रविशन्ति इति ।

### सम्भूतिविनाशयोरेकैकस्योपासनस्य त्याज्यता

'एतमितः प्रेत्याभिसम्भवितास्मि' (छा.उ.3-14-4) 'ब्रह्मलोकम् अभिसम्भवामि' (छा.उ.8-13-1) इत्यादिषु प्राप्तिरूपा अनुभूतिः सम्भूतिशब्देन उक्ता । इह तु [2]समाधिरूपा सा सम्भूतिशब्देन उच्यते । असम्भूतिशब्दस्तु समाधिरूपा सम्भूत्यन्या समाध्यंगभूता निषिद्धनिवृत्तिमाह । 'सम्भूतिं च 'विनाशं च' इत्युत्तरत्र

---

1.अयुक्तत्वादिति - 'अविस्तृताः सुगम्भीराः' इतिरीत्या श्रीदेशिकसूक्तीनामपि गाभीर्यं विवरणापेक्षम् । कथमयुक्तत्वमिति चेत् - अत्रावधेयम् । विद्यागत्वेन असंभूतिविशिष्टसम्भूत्यनुसन्धानं चतुर्दशमन्त्रे विधित्सितम् । सम्भूतिशब्दार्थश्च ब्रह्मप्राप्तिरिति श्रुतिद्वयप्रमाणेन न्यरूपि । तत्सहचरितेन असंभूतिशब्देन स्वघटकनञर्थतया उक्तसंभूतेः प्रागभावः (अनुत्पत्तिः) विनाशो वा (ध्वंसः) कुतो न गृह्यते - इत्याशंक्य समाधीयते 'अमृतप्राप्तीत्यादिना प्रकृतवाक्येन । चतुर्दशमंत्रे विनाशशब्देन स्थानप्रमाणदसंभूतिरेव हि गृह्यते । तत्फलं च मृत्युतरणमुक्तं विनाशेन मृत्युं तीर्त्वेति । तत्रासंभूतिशब्दार्थः ब्रह्मप्राप्तिरूपसंभूतिप्रागभावो वा तद्ध्वंसो वा यदि स्यात् - तर्हि तस्य मृत्युतरणहेतुत्वं न संभवति । मृत्युशब्दित - ब्रह्मप्राप्तिप्रतिबन्धकपाप्मनिवृत्तिः न हि ब्रह्मप्राप्तिप्रागभावसाध्या । तद्ध्वंससाध्यत्वं तु न तरां घटते । अनावृत्तिघटितब्रह्मप्राप्तेः ध्वंसस्यैव असंभवात् । अतोऽत्र असंभूतिशब्देन संभूतिसहचरितः प्राप्तिप्रतिबन्धककर्मविनाश एव अर्थः इति स्वीकार्यम् - नन्वेवं प्रतिबन्धकविनाश एव असम्भूतिशब्दार्थश्चेत्, तत्साध्यं मृत्युतरणं च 14 मन्त्रोक्तं तद्रूपमेवेति साध्यसाधनयोरैक्यमेव स्यात् । न हि अतिनिपुणोऽपि नटवटुः स्वस्कन्धमधिरुह्य नरीनर्ति - इति न्यायेन स्वस्य स्वसाधनत्वासंभवात् - इति चेत् - उक्तमेव अत्रोत्तरम् सम्भूत्यसम्भूत्योः चिन्तनमेवात्र विद्यागं सत् तत्तत्फलसाधनमिति, सूचितमिदं श्रीदेशिकोक्त्यैव 14 मन्त्रविवरणे 'अनुसन्धीयमानेन विनाशेन अनुसन्धीयमानया संभूत्या च' इति ।।

2. समाधिरूपेति । अत्र वात्स्यनारायणभाष्ये आनन्दसुबोधिनीभाष्ययोश्च सम्भूत्यसम्भूतिशब्दार्थविचारोऽन्यः । यः श्रीदेशिकैः चतुर्दशमन्त्रे 'यद्वा' इति प्रदर्शितः । एतदर्थविचारे श्रीरंगाचार्यभाष्यगतिः अन्यादृशी ।

विनाशशब्देनासम्भूतेरनुवादात् । तथा च ये - विद्याधिकारिणः असम्भूतिमेव मानदम्भहिंसास्तेयादीनां योगविरुद्धानां निवृत्तिमेवोपासते - निवृत्तिमात्रनिष्ठाः इत्यर्थः ; ते 'अन्धं तमः प्रविशन्ति' इति पूर्ववदर्थः । ये पुनस्समाधिरूप-सम्भूत्यामेव रताः, ते ततो भूय इव - बहुतरमिव तमः प्रविशन्तीत्यर्थः ।।

## श्रीरंगाचार्यभाष्यम्

### मन्त्रत्रयस्य अवतारिका

इमं मन्त्रं नवममन्त्रतया माध्यंदिनाः, द्वादशमन्त्रतया काण्वाश्च पठन्ति। इतः पूर्वं प्राप्यपुरुषार्थोपायभूतं कर्मांगकब्रह्मोपासनरूपविद्यालक्षणं परमहितम् अभिहितम् । इतः परं पुरुषार्थानाम् ऐश्वर्यकैवल्यभगवत्प्राप्तिलक्षणानां त्रैविध्यात्- - ब्रह्मविदम् ऐश्वर्यकैवल्याभ्यामर्वाचीनपुरुषार्थाभ्याम् अस्थिरत्वाल्पत्वदोषदुष्टाभ्यां निवर्त्य भगवत्प्राप्तिलक्षणपरमपुरुषार्थे एव प्रवर्तयितुम् इतरपुरुषार्थयोः दोषज्ञापनेन तन्निष्ठान्विनिन्द्य, परमपुरुषार्थप्रयोजकेतरपुरुषार्थव्यावर्तकअवान्तरफलान्तरानु-सन्धानमपि विद्यांगतया उपादेयमिति प्रतिपाद्यते द्वादशादिभिस्त्रिभिर्मन्त्रैः ।

### प्रत्येकं सम्भूत्यसम्भूत्युपासकानां प्रकृतिसम्बन्धस्यापरिहार्यता

अत्र द्वादशस्यास्य मन्त्रस्य पदविवरणम् - ये - पुरुषाः, असम्भूतिम्-सम्भूतिस्सम्भवः - तस्याः निवृत्तिरसम्भूतिः - विग्रहपरिग्रहनिवृत्तिरिति यावत्। ताम् असम्भूतिम् - उत्तरार्धस्थ एवकारार्थक उकारः प्रागिव अर्थसामर्थ्यात् इहापि सम्बध्यते । असम्भूतिम् उ - एकान्ततो विग्रहपरिग्रहनिवृत्तिमेव । उपासते-तन्मात्रोद्देश्यकोपासननिष्ठाः भवन्ति इत्यर्थः । ते - पुरुषाः । अन्धं तमः प्रविशन्ति - गाढमज्ञानं प्रविशन्ति प्रकृष्टमज्ञानमेव प्राप्ता भवन्तीति यावत्। "न ह वै स शरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" (छा.उ.8-12-1) इति श्रुत्यनुरोधात् अनुभवानुरोधाच्च यावच्छरीर-परिग्रहानुवृत्तिसुखदुःखानुवृत्तिरपरिहार्या, शरीरपरिग्रहानुवृत्तिश्च यावत्प्रकृति-सम्बन्धमपरिहार्यैव । अत आत्यन्तिकशरीरपरिग्रहनिवृत्तिरेव मे भवतु इत्यभिसन्धाय

असम्भूतिमात्रोद्देश्यकोपासननिष्ठा ये भवन्ति तेषां तादृशोपासनेन कैवल्यपुरुषार्थ एव पर्यवसानेन तस्य च नित्यत्वेन ततःपरं कदाचिदपि भगवत्प्राप्तिलक्षणपरम-पुरुषार्थानवकाशाच्च तत्प्रतिबन्धकं महदेव तमः ते प्राप्तवन्तो भवन्तीति भावः। **ये** - पुरुषाः, **सम्भूत्याम् उ** - शरीरपरिग्रह एव, **रताः** - उपादेयत्वबुद्ध्या सक्ताः - पुनः पुनर्भोगोपकरणशरीरपरिग्रहोद्देश्यकोपासनैकनिष्ठाः, **ते**, **ततः**- असम्भूत्युद्देश्यकोपासननिष्ठापेक्षया, **भूय इव** - अत्यन्तमेव प्रागिव इहापि इवकार एवकारार्थकः। 'तमः प्रविशन्ति' इत्यन्वयः। तदीयाज्ञानापेक्षयाऽत्यधिकम-ज्ञानं प्राप्तवन्तो भवन्त्येव इति यावत्।

करणकलेबराद्युपकरणाभावे भोग एव न सम्भवति, अनुभवानुरोधात्। आनन्दलक्षणो भोग एव च सर्वापेक्षितः, तदर्थमेव च सर्वेषां प्रवृत्तिदर्शनात्। निर्दुःखमात्रावस्थानं च नेष्टतमम्। अत आनन्दलक्षणभोगोपकरणदेहादिपरिग्रह एव मे भवतु इत्यभिसन्धाय सम्भूतिमात्रोद्देश्यकोपासननिष्ठा ये भवन्ति, तेषां तादृशोपासनेन भोगैश्वर्यलक्षणपुरुषार्थ एव पर्यवसानेन तस्य च कैवल्यपुरुषार्थादपि अल्पत्वादस्थिरत्वादवर्जनीयपुनःपुनरागन्तुकदुःखमिश्रत्वाद् भगवत्प्राप्तिलक्षणपरमपुरुषार्थप्रतिबन्धकत्वाविशेषाच्च कैवल्यनिष्ठेभ्योऽपि अत्यन्ताधिकं तमः प्राप्तवन्तो भवन्त्येव इति भावः॥

## आनन्दभाष्यम्

परमात्मोपासनरूपा विद्या समाधिपर्याया नित्यनैमित्तिककर्माणि परित्यज्य न निष्पादयितुं शक्या इति प्रतिपाद्य योगांगभूतां हिंसास्तेयादिनिवृत्तिं विनापि सा न सम्भवति इति प्रतिपादयितुं पूर्वं केवलां निषिद्धनिवृत्तिं केवलां समाधिरूपां विद्यां च निन्दति - **अन्धं तमः** इति।

**केवलनिषिद्धनिवृत्तिसमाधिरूपविद्ययोर्निन्दा**

सम्भूतिशब्दस्य ब्रह्मप्राप्तिरूपानुभूतिः, समाधिरूपानुभूतिश्चेति अर्थद्वयम्। तत्र प्रथमा 'ब्रह्मलोकमभिसम्भवामि' (छा.उ.8-13-1) इत्यादिषु श्रुतिषु सम्भूतिशब्देन,

'सम्भूत्याऽमृतमश्नुते' इत्यत्र तु अमृतशब्देन प्रोक्ता । द्वितीया समाधिरूपा विद्याऽपरपर्याया अत्र मन्त्रे सम्भूतिशब्देनोच्यते । असम्भूतिशब्देन तु हिंसास्तेयादिनिवृत्तिरुच्यते, तेषां समाधिविरोधित्वेन तद्वर्जनस्य विद्यानिष्पत्तौ अंगत्वात् ।

अतो ये - मोक्षाभिलाषिणः असम्भूतिम् - योगविरुद्धनिवृत्तिमेव - उपासते- हिंसादिवर्जनरूपविद्यांगमात्राय यतन्ते, न समाधिरूपविद्यायै, ते अन्धं तमः- अतिगाढमज्ञानं नरकं वा प्रविशन्ति, ये तु सम्भूत्याम् उ - समाधिरूपविद्यायामेव 'उ' पदस्य एवार्थत्वात् । रताः - केवलसम्भूत्यर्थमेव यतन्ते, ते तु ततो भूय इव तमः - असम्भूतिमात्रनिष्ठैः प्राप्यात्तमसो अधिकतरमिव तमः प्रविशन्ति, अत्रापि एव (शब्दः) तमसः इयत्तायाः दुर्ज्ञानत्वं द्योतयति ।

**योजनान्तरम्**

यद्वा, सम्भूतिशब्दस्य उत्पत्तिरर्थः सा च विनाशमपि उपलक्षयति, तथा च आश्रयलक्षणया उत्पादविनाशशालिकर्म सम्भूतिः न सम्भूतिरसम्भूतिरिति व्युत्पत्त्या सम्भूतिभिन्नाऽसंभूतिः अर्थात् उत्पत्तिप्रध्वंसरहितमात्मतत्वम् । ततः ये मोक्षाभिलाषुकाः असम्भूतिम् उत्पादविनाशविधुरमात्मतत्त्वं केवलम् उपासते- चिन्तयन्ति ; कर्मभ्य उपासते ते अन्धं तमः प्रविशन्ति इति प्राग्वदर्थः । कर्मपरित्यागेन ज्ञानमपि अलभमानाः संसारकूपारे निमज्जन्ति इति भावः। ये तु सम्भूत्यामेव - उत्पादप्रध्वंसिषु कर्मस्वेव, रताः - ज्ञानविधुराणां कर्मणामेव मोक्षसाधनत्वं मन्यमानाः तदर्थमेव यतन्ते ते ततः - ज्ञानमात्र- चिन्तकप्राप्यतमोऽपेक्षयाऽधिकतरमिव तमः प्रविशन्ति - विषयवासनालिंगित- चित्ततया नरकादिकमधिकं प्राप्नुवन्ति इत्यर्थः ।।

## सुबोधिनी

उक्तमेव ज्ञानकर्मणोः अंगांगिभावं पुनराह - अन्धं तम इति । न हि [1]जामिता श्रुतीनाम् । सम्भूतिः - इति उत्पादविनाशशालि कर्म बोध्यते । असम्भूतिः - इति तच्छून्यम् आत्मस्वरूपम् उच्यते ।

---

1. जामिता - जडत्वम् । श्रुतीनां तत् नास्ति । नित्यजागरूकाः ता इत्यर्थः । अतश्च औदासीन्यमपहाय उक्तमप्यर्थं भूयोऽपि बोधयन्ति मुमुक्षूनिति भावः ।

**ये असम्भूतिमुपासते** - किमेभिः कर्मभिः ; नित्यात्मस्वरूपमेव वयं चिन्तयामः इति ये मुमुक्षामात्रेण अवधूय कर्म केवलज्ञाननिष्ठायां प्रवर्तन्ते ।

**ते अन्धं तमः प्रविशन्ति** - ज्ञाननिष्ठाऽसिध्या संसारमेव प्राप्नुवन्ति । **ये सम्भूत्याम्, उ** - उकारः एवार्थः, **सम्भूत्यामेव** - केवलकर्मण्येव रताः । **ते ततो भूयः अन्धं तमः प्रविशन्ति** - विषयव्याकुलचित्ततया नरकमपि प्राप्नुवन्ति ।

**अन्यथापि योजनान्तरम्**

यद्वा - एवं मुक्तिसाधनं परमात्मोपासनं कर्मयोगांगकमुक्तम्, अथोपासकेन फलपर्वणोः प्रतिबन्धनिवृत्तिब्रह्मप्राप्त्योरुभयोरप्यनुसन्धानं कर्तव्यमिति वक्ष्यन्नादावेकैकमात्रानुसन्धानं निन्दति - **अन्धम्** इति ।

'धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानि' (छां.उ.8-13-1) इत्यत्राभिहिता प्राप्तिः सम्भूतिः, ततोऽन्याऽसम्भूतिः । 'अब्राह्मण' इत्यादौ यथा ब्राह्मणादन्यः क्षत्रियः सान्निध्यादुपस्थाप्यते तथा प्रकृते ब्रह्मप्राप्तेरन्या तत्सन्निहिता पूर्वभाविनी प्रतिबन्धकनिवृत्तिरूपात्यन्तिकप्रकृतिनिवृत्तिः असम्भूति-शब्देन बोध्यते ।

तामेव **असम्भूतिम्** । **ये उपासते** - ये प्रकृतिसम्बन्धनिवृत्तिमात्रं फलतया चिन्तयन्ति, न ब्रह्मप्राप्तिम् । **ते अन्धं तमः प्रविशन्ति** - ब्रह्मानुभवरहितं कैवल्यं विशन्ति । ब्रह्मानुभवाभवात्तदन्धं तम इत्युपचर्यते । **ये सम्भूतिम्**-आत्यन्तिकप्रकृतिविनिर्मोकचिन्तनं विहाय केवलं ब्रह्मसम्पत्तिमात्रं चिन्तयन्ति ते कस्याप्यलाभेन जीवन्नेव मुक्तोऽस्मीति वादिन इव **ततो भूय इव अन्धं तमः प्रविशन्ति** । उपासकस्य गतिचिन्तनं - यथा, उपासनांगं, तथा 'धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवानि' (छां.उ.8-13-1) इत्युक्तप्रकारेण प्रकृतिनिवृत्तिब्रह्मप्राप्त्युभयचिन्तनमुपासनांगम् इति तयोरेकचिन्तनवैधुर्येऽपि अंगवैकल्येन उपासनासिद्ध्या पुरुषार्थालाभेन एकैकमात्रचिन्तकानां निन्दामात्रे पर्यवस्यति **अन्धं तमः प्रविशन्ति** इति ॥

## त्रयोदशो मन्त्रः

अन्यदेवाहुस्सम्भवात् अन्यदाहुरसम्भवात् ।
इति शुश्रुम धीराणां ये नस्तद्व्याचचक्षिरे ।। 13 ।।

### प्रतिपदार्थदीपिका

किं तर्हि मोक्षसाधनमित्यत्राह - अन्यदेवाहुः इति ।

**सम्भवात् - सम्भूतेः ।** ब्रह्मानुभूतेः फलमन्यत् आहुः उपनिषदः, **असम्भवात्**-मानदम्भहिंसास्तेयादिनिषेधनिवृत्तेश्च फलमन्यदाहुः, शिष्टं स्पष्टम् ।।

### वेदान्ताचार्यभाष्यम्

**अन्यदेव — तत् व्याचचक्षिरे इति ।** अत्र तच्छब्दः समुच्चित्यानुसन्धेयतया वक्ष्यमाणद्वितयं वक्ति ।।

### ईशावस्यप्रकाशिका

किं तर्हि मोक्षसाधनमित्यत्राह - अन्यदेवाहुः इति । **सम्भवात् - सम्भूतेः, असम्भयात्, असम्भूतेरित्यर्थः ।** केवलात्सम्भवादसम्भवाच्च अन्यदेव मोक्षसाधनम् इत्युपनिषद आहुः । लिङुत्तमः पूर्ववत् । स्पष्टमवशिष्टम् ।।

### श्रीरंगाचार्यभाष्यम्

#### मन्त्रविवरणम्

इमं मन्त्रं दशममन्त्रतया माध्यन्दिनाः पठन्ति । 'व्याचचक्षिरे' इति स्थाने 'यिचचक्षिरे' इति च ।

सम्भूत्यसम्भूतिभिन्नस्य मोक्षफलत्वम्

अस्य त्रयोदशस्य मन्त्रस्य विवरणम् सम्भवात् - प्रागुक्त-लक्षणसम्भूत्युद्देश्यकोपासनसाध्यविग्रहपरिग्रहलक्षणावान्तरफलात्, अन्यदेव-असम्भूत्युपासनावान्तरफलप्रयोज्यकैवल्यलक्षणपरमफलादन्यदेव भोगैश्वर्यलक्षणं परमं फलम्, आहुः - जायमानं प्रतिपादयन्ति, शास्त्राणीति शेषः । असम्भवात्-प्रागुक्तलक्षणासम्भूत्युद्देश्यकोपासनसाध्यात्यन्तिकविग्रहपरिग्रहनिवृत्तिलक्षणावान्तर-फलात् अन्यदेव - सम्भूत्युपासनावान्तरफलप्रयोज्यभोगैश्वर्यलक्षणपरम-फलादन्यदेव केवलात्मानुभवलक्षणं परमं फलम्, आहुः । धीरणाम्-विद्वदग्रेसराणाम् इति - इत्थंभूतं वचनम्, शुश्रुम - आकर्णयामः । इहापि लडर्थे लिट् प्राग्वत् । ये - धीराः अस्मदाचार्याः, नः - अस्माकं, तत्-पृथक्कृतसम्भूत्यसम्भूत्युपासनपरमफलद्वयम्, व्याचचक्षिरे - व्याख्यातवन्तः । 'विचचक्षिरे' इति पाठेऽप्ययमेवार्थ इति ।

तथा च - सम्भूत्यसम्भूत्योरेकैकमात्रोद्देश्यकोपासनकरणे द्वयोरुपासनयोः परस्परविलक्षणपुरुषार्थद्वयपर्यवसानेन परमपुरुषार्थलक्षणैकपुरुषार्थपर्यवसायित्वं न सम्भवति; अतः पृथगेकैकावान्तरफलस्य प्राप्यतयाऽनुसन्धानं न कर्तव्यमिति फलितम् ।

## आनन्दभाष्यम्

यदि समाधिरूपा सम्भूतिः योगविरोधिवर्जनरूपा असम्भूतिश्च न मोक्ष-साधनं तर्हि भवतः आचार्यस्य अभिमतं मोक्षसाधनं किमिति शिष्य-जिज्ञासायामाह -

**सम्भवात्** - समाधिरूपसम्भूतेः **अन्यदेव** मोक्षसाधनमाहुः, **असम्भवात्**-निषिद्धनिवृत्तिवर्जनरूपासम्भूतेश्च **अन्यदेव** - भिन्नमेव मोक्षसाधनमाहुः उपनिषदः इति शेषः । **इति** - केवलसम्भूतिकेवलासम्भूतिभ्यां भिन्नं मोक्षसाधनमित्येवरूपं

**धीराणाम्** - धीमताम् आचार्याणां वचनं शुश्रुग - वयं श्रुतवन्तः । केषां धीराणाम् इत्यत्र आह **ये** - धीराः पूर्वाचार्याः नः - अस्मभ्यं तत् - मोक्षसाधनं विचचक्षिरे- विविच्य व्याख्यातवन्तः ।

## सुबोधिनी

**सम्भवात्** - केवलकर्मतः अन्यदेव मोक्षसाधनमाहुः । **असम्भवात्** - आत्मनः उपास्यमानात्, आत्मोपासनादित्येतत्, केवलात्मोपासनादिति भावः, अन्यदेवाहुः- मोक्षसाधनमाहुः **इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे** - व्याख्यातम् ।

यद्वा - अन्यदेवाहुःसम्भवात् । **सम्भवात्** - ब्रह्मप्राप्तिरूपात्फल- पर्वणश्चिन्त्यमानात्, ब्रह्मप्राप्तिचिन्तनमात्रादित्यर्थः । **अन्यदेव** - मोक्षसाधनम् आहुः । **असम्भवात्** - प्रतिबन्धकनिवृत्तिमात्राच्चिन्त्यमानात्, प्रतिबन्धकनिवृत्ति- चिन्तनमात्रात् इत्येतत् । **अन्यदेव** - मोक्षसाधनम् आहुः ।

**ये नः तत्** - मोक्षसाधनमनुसन्धानविशेषम् । **विचचक्षिरे** - उक्तवन्तः । **तेषां धीराणां वचनं शुश्रुम** ।

न केवलमिष्टप्राप्तिचिन्तनं अनिष्टनिवृत्तिचिन्तनं वा मोक्षाय किन्तु उभयचिन्तनम् अपेक्षितमिति भावः ।।

* * * * *

## चतुर्दशो मन्त्रः

**सम्भूतिं च विनाशं च यस्तद्वेदोभयँ सह ।**
**विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ।। 14 ।।**

## प्रतिपदार्थदीपिका

**दम्भादिविनाशांगकसम्भूत्या अमृतत्वप्राप्तिः**

**सम्भूतिं च** - समाधिरूपां ब्रह्मानुभूतिं च **विनाशं च** - मानदम्भहिंसादिवर्जनं च, तदेतदुभयं च यः वेद, सह - अंगांगिभावेन, विद्वान् सः विनाशेन - समाधिविरोधिमानदम्भादिनाशेन मृत्युम् - समाधिविरोधि पापम्, तीर्त्वा सम्भूत्या- समाधिरूपया ब्रह्मानुभूत्या अमृतम् - मोक्षम् अश्नुते - प्राप्नोति ।।

## वेदान्ताचार्यभाष्यम्

**सम्भूत्यसम्भूत्यंगकविद्याया मोक्षोपायता**

अत्रापि 'अन्यत्' इत्युक्तं विवृण्वन् विद्यांगम् उभयानुसन्धानमाह- सम्भूतिं -- सह इति । तस्यैव फलप्रदर्शनेन अवश्यकर्तव्यतां स्थापयति- विनाशेन --- अश्नुते इति । अनुसन्धीयमानेन - विनाशेन - प्रतिबन्धमपोह्य, सम्भूत्या - अनुसन्धीयमानया, ब्रह्म प्राप्नोति । [1]सम्भूतिविनाशानुसन्धानरूपेऽङ्गे स्तुत्यर्थं यथोचितम् अंगिफलनिर्देशः ।

**योजनान्तरम्**

यद्वा - 'विनाशेन मृत्युं तीर्त्वा' इति [2]पूर्वोक्तसरूपशब्दे विरूपार्थपरिहाराय

---

1. सम्भूतिविनाशेति । अत्र सम्भूतिविनाशशब्दाभ्यां तदनुचिन्तनं विवक्षितम् । तच्चांगं ब्रह्मविद्यायाः उपासनरूपायाः, इति चोक्तम् । अंगिनः उपासनस्य फलमेव मृत्युतरणपूर्वकब्रह्मप्राप्तिरूपं इह अंगेऽपि उक्तविधानुचिन्तने निर्दिश्यते अंगप्राधान्यप्रशंसार्थमिति भावः ।

2. पूर्वोक्तसरूपेति । क्रमेण 9-10-11-संख्याकमन्त्रत्रयेण 12-13-14-मन्त्रत्रयस्य सर्वथा सारूप्यं स्थितम् । अविद्याविद्याशब्दयोः स्थाने असम्भूतिसम्भूतिशब्दप्रयोगमात्रे विशेषः। सत्येव अर्थगत्यापि सरूपतया भाव्यम् । न वैरूप्येण । तत्र पूर्वं अविद्याशब्दितकर्मानुष्ठानस्य विद्योत्पत्तिप्रतिबन्धकपापनिवर्तनद्वारा विद्यांगत्वं निर्णीय तादृश- सांगविद्यायाः फलं सर्वदुरितध्वंसविशिष्टब्रह्मप्राप्तिरिति निरधारि । प्रकृते 12-13-14- मन्त्रत्रये तु फलपर्वणोरेव संभूत्यसंभूतिशब्दितयोः सर्वदुरितध्वंसब्रह्मानुभवयोश्चिन्तनं विद्यांगमिति निरूप्यते । ननु असंभूतेः संभूतिं प्रति

विनाशशब्देन मानदम्भादीनां हिंसास्तेयादीनां बहिर्मुखेन्द्रियवृत्तीनां च विनाशो विवक्षितः । अतो विरुद्धनिवृत्तिरूपांगसेवनेन समाधिविरोधिपापमपाकृत्य समाधिनिष्पत्तिरूपब्रह्मसम्भूत्या तदेव अश्नुते । अत्र [1]सम्भूतिविनाशशब्दाभ्यां सृष्टिप्रलयादिविवक्षया मृत्युतरणामृतप्राप्तिरूपफलविभागवचनस्य औचित्यलवोऽपि नोपलभ्यते ।।

## ईशावास्यप्रकाशिका

### मानदम्भादिनिवृत्त्यंगकब्रह्मानुभूतेः मुक्तिसाधकत्वम्

'अन्यत्' इत्युक्तं विवृणोति -- **सम्भूतिं च इति** । **सम्भूतिं च** - समाधिरूपब्रह्मानुभूतिं च, **विनाशं च** - मानदम्भहिंसास्तेयबहिर्मुखेन्द्रियवृत्तिविशेषरूपाः ये योगविरोधिनः, तेषां विनाशं वर्जनं चेत्येतदुभयं यो विद्वान् अंगांगिभावेन सह **वेद, विनाशेन** - निषेव्यमाणेनेति शेषः । विरोधिनिवृत्तिरूपयोगांगसेवनेन इत्यर्थः । **मृत्युम्** - समाधिविरोधिपापम् ; **तीर्त्वा** - अपाकृत्य, निष्पन्नया सम्भूत्या **अमृतम् अश्नुते** - प्राप्तिरूपां सम्भूतिमेव अश्नुत इति भावः ।

---

अंगता - इति वैरूप्यं दृष्टम् । अविद्याया अंगत्वं च पूर्वत्र विद्योत्पत्तिप्रतिबन्धकनिवर्तनेनेत्युक्तम् । नत्वत्र तथा संभूतिप्रतिबन्धनिवर्तकत्वं असंभूतेरुच्यते इति च वैरूप्यं स्पष्टम् । अतः ईदृशवैरूप्यनिरासायैव 'यद्वा' इति सम्भूत्यसम्भूतिशब्दयोः अर्थान्तरमुच्यते । तथा च सम्प्रति संभूतिर्नाम-समाधिः । स च उपासनस्य परिपाकदशा। यत्र जीवत एव भगवत्साक्षात्कारः परभक्तिशब्दितः। तादृशसमाध्युत्पत्तिप्रतिबन्धकपापनिवृत्त्यै तदंगभूतं मानदम्भहिंसास्तेयादिनिवृत्तिरूपं असंभूतिशब्दवाच्यं अनुष्ठेयं भवति एवं च तादृशमानदम्भादिविसर्जनेन (विनाशेन) मृत्युतरणं च अत्र समाधिप्रतिबन्धकदुरितनिवृत्तिः । ततः समाधिः सम्भूतिरूपः सिद्धयतीति सम्भूत्यसंभूत्योः अंगांगिभावः । एवं सांगसमाधिसिद्धौ पश्चात् अमृतत्वरूपसमग्रब्रह्मानुभवरूपफललाभः - इति सारम् ।

1. अत्र सम्भूतीति - सम्भूत्यसंभूतिविषयकमन्त्रत्रयस्य शंकरभाष्योक्तार्थे औचित्यलवोऽपि नेति तन्निराकरणमिदम् । संग्रहेण तद्भाष्योक्तमेवम् । उत्पत्तिवाची संभूतिशब्दः अत्र उत्पत्तिमतः हिरण्यगर्भस्य वाचकः । एवं विनाशशब्दोऽपि लयवाची तद्युक्तहिरण्यगर्भवाचक एव । असंभूतिशब्दः तदन्यस्य अव्यक्तशब्दितप्रधानस्य वाचकः । तथा मृत्युतरणं नाम-हिरण्यगर्भोपासनेन अणिमाद्यैश्वर्यं प्राप्य स्वस्मिन् अनैश्वर्यस्य निवारणम् । अमृतप्राप्तिर्नामप्रकृतौ लयः । इति तत्तत्पदानां अर्थं निरूप्य, हिरण्यगर्भोपासनेन उक्तविधमृत्युतरणफलं अव्यक्तोपासनेन प्रकृतिलयरूपं फलं चेति वाक्यार्थ उक्तः । तथा तृतीयमन्त्रादौ संभूतिमित्यत्र अकारप्रश्लेषेण - असंभूतिमिति, चतुर्थपादे संभूत्या इत्यत्र असंभूत्या इति च कल्पनं - कृतम्। तत्सर्वं श्रुतहानं अश्रुतकल्पनं प्रकरणविरुद्धं चेति औचित्यविरहात् अनादरणीयमिति भावः ।।

पूर्वोक्तानुसन्धाने श्रुतिप्रामाण्यम्

अयमेव दम्भादिविनाशो बृहदारण्यके 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' (बृ.उ.5-5-1) इति बाल्यशब्देन विद्यांगतया विहितः । अत्र सम्भूतिविनाशशब्दाभ्यां सृष्टिप्रलयविवक्षया कार्यहिरण्यगर्भस्य अव्याकृतप्रधानस्य च उपासनं विधीयत इति शांकरव्याख्यानमनुपपन्नम्, तथा सति मृत्युतरणामृतत्वप्राप्तिरूपफलवचनानौचित्यात् इति ।।

## श्रीरंगाचार्यभाष्यम्

इमं मन्त्रम् एकादशमन्त्रतया माध्यन्दिनाः पठन्ति । काण्वास्तु चतुर्दशमन्त्रतया । अस्य मन्त्रस्य पदविवरणम् - यः - पुरुषः, सम्भूतिं च - सम्भूत्युपासनफलं विग्रहपरिग्रहं च, विनाशं च - विग्रहपरिग्रहनिवृत्तिलक्षणाम् असम्भूत्युपासनफलभूताम् असम्भूतिं च, तदुभयं, सह - समुच्चयेन, वेद - अवान्तरफलत्वेन प्राप्यतया उपास्ते ; स इति शेषः । सः पुरुषः । विनाशेन- असम्भूत्युपासनसिद्धकर्माधीनप्राकृतविग्रहपरिग्रहयोग्यतानिवृत्त्या; मृत्युम् - ब्रह्मप्राप्तिप्रतिबन्धकं प्रकृतिसम्बन्धं, तीर्त्वा - निश्शेषमतिलंघ्य । सम्भूत्या- सम्भूत्युपासनाधीनकर्मानधीनाप्राकृतविग्रहपरिग्रहयोग्यतासिद्ध्या, अमृतम् - परमपुरुषार्थरूपं परं ब्रह्म, अश्नुते - अनुभवति - इति ।

सम्भूत्यसम्भूत्युभयोद्देश्यकमेव उपासनमावश्यकम्

परब्रह्मानुभवस्य तदीयगुनुभवजनितानवधिकातिशयप्रीतिकारिताशेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकैंकर्यप्राप्तिपर्यवसायिनो विग्रहपरिग्रहम् अन्तरेणासम्भवेन केवलासम्भूतिप्राप्त्युद्देश्यकोपासने च सामान्यतोऽशरीरत्वस्यैव सिद्ध्या कैवल्यपुरुषार्थ एव पर्यवसानाद्विग्रहपरिग्रहयोग्यताया एव विलयेन तदर्थं सम्भूत्युपासनस्याप्यावश्यकत्वात्, सम्भूत्यसम्भूत्युपासनयोर्द्वयोरप्यनुष्ठाने च असम्भूत्युपासनस्य सम्भूत्युपासनाविरोधाय दुःखहेतुतया प्राक्परिचितकर्माधीनप्राकृतविग्रहपरिग्रहयोग्यताविलय एव पर्यवसानसम्भवात्, सम्भूत्युपासनस्य

असम्भूत्युपासनाविरोधाय कर्माधीनप्राक्परिचितदुःखहेतुप्राकृतशरीरविलक्षणा-प्राकृतदुःखादिदोषगन्धानर्हदिव्यविग्रहपरिग्रहयोग्यतासिद्धावेव पर्यवसानसम्भवाच्च अस्थिरत्वाल्पत्वादिदोषसंभिन्नैश्वर्यकैवल्यपुरुषार्थपर्यवसानमन्तरेण भगवत्प्राप्ति-रूपपरमपुरुषार्थलक्षणमोक्ष एव पर्यवसानं ब्रह्मविदस्सम्भवति ; अतस्सम्भूत्य-सम्भूत्युभयोद्देश्यकमेव उपासनमावश्यकम् इति भावः ।

अशरीरत्वसशरीरत्वश्रुत्योः अविरोधः

भगवत्प्राप्तिलक्षणपरमपुरुषार्थरूपपरममोक्षभागिनां कर्मानधीनैच्छिकानेक-विग्रहपरिग्रहयोग्यताऽस्तीति तु - 'स एकधा भवति त्रिधा भवति पंचधा' (छा.उ.7-26-2) इत्यादिश्रुतिसिद्धम् । अत एव च - सूत्रकारेणापि चतुर्थाध्याय-चतुर्थपादे अभावाधिकरणे मुक्तस्य संकल्पमात्रतः शरीरेन्द्रियादिपरिग्रहतदभावौ 'भवत इति - कर्मनिमित्तशरीरस्यैव प्रियाप्रियहेतुत्वादिच्छाधीनशरीरस्य तदभावाच्च न दुःखगन्धप्रसंग इति ; एवं च सति मुक्तस्य 'आत्तो वै सशरीरः प्रियाप्रियाभ्याम् । न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति । अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छा.उ.18-12-1) इत्यादिः अशरीरत्वप्रतिपादनपरा श्रुतिः कर्मनिमित्तशरीराभावपरा ; 'स एकधा भवति त्रिधा भवति पंचधा' (छा.उ.7.26.2) इत्यादिः सशरीरत्वप्रतिपादनपरा श्रुतिः कर्मानधीनसंकल्पमात्राधीनविग्रहपरा ; अतो न परस्परविरोध इति च राद्धान्तितम् । तस्मात् भगवत्प्राप्तिलक्षणपरममोक्षनिष्ठस्य सम्भूत्यसम्भूत्युभयोद्देश्यकमेवोपासनम् आवश्यकमिति श्रुतेः अभिप्रायः ।

कामचारश्रुतिनिर्वाहः

यद्यपि - 'तस्य सर्वेषु लोकेषु कामचारो भवति' (छा.उ.7-25-2) इत्यादि श्रुतिभिः प्राकृतलोकेष्वपि मुक्तानां कामचारप्रतिपादनात् साधारणयोगिमात्रगत-परकायप्रवेशादिशक्तेः 'सर्वमाप्नोति सर्वशः' (छा.उ.7-26-2) इति श्रुतिबलेन तेषामपि दुरपह्नवतया कर्माधीनपरकीयप्राकृतशरीरप्रवेशस्यापीच्छया कदाचित् सम्भवेन कर्माधीनप्राकृतशरीरसम्बन्धाभावपर्यवसितापि असम्भूतिः तेषां दुरुपपादा।

तथापि तादृशशरीरसम्बन्धस्य तेषाम् इच्छामात्राधीनतया तत्प्रयोज्यकर्माधीनफल-भोगस्य तेषामसम्भवेन स्वप्रयोज्यकर्माधीनफलभोगाश्रयत्वसम्बन्धेन शरीरसम्बन्धा-भावरूपा हि असम्भूतिः तेषां सूपपादैव इति नोक्तानुपपत्तिः इत्यवधेयम्।

असम्भूतेः प्राकृतशरीरपरिग्रहनिवृत्तिरूपत्वम्

सिद्धान्ते कपालत्वावस्थायाः प्राक् स्थितघटत्वावस्थानिवृत्तिरूपाया एव तद्ध्वंसरूपत्वांगीकारेण अतिरिक्तध्वंसाख्यपदार्थस्यैव अनंगीकारात् असम्भूतेरपि प्राक्स्थितप्राकृतशरीरपरिग्रहरूपसम्भूत्यवस्थानिवृत्तिरूपत्वेन तद्विनाशरूपत्वादेव विनाशशब्देन तन्निर्देशः।

शंकरव्याख्यानुपपत्तिप्रदर्शनम्

यत्पुनरत्र-सम्भूत्यसम्भत्युपासनयोर्व्याकृताव्याकृतलक्षणप्रकृतितत्त्वोपासनपरं शांकरं व्याख्यानम्; तदसमंजसम् - ईट्छब्दितस्य परस्य ब्रह्मणः स्वेतर-सर्वचेतनाचेतनविलक्षणत्वसर्वात्मकत्वादिप्रतिपादनेन सर्वोत्कृष्टत्वं प्रतिपाद्य 'मुमुक्षोस्तदुपासनमेव कर्तव्यं नान्यस्य' इति प्रतिपादनपरतया ब्रह्मविद्यैकपरेऽस्मिन् प्रकरणे मध्ये पूर्वोत्तरग्रन्थसंगतिमन्तरेणैव तद्विरुद्धार्वाचीनफलहेतुव्याकृताव्याकृत-लक्षणप्रकृतितत्त्वोपासनविधानस्य प्रसंगलेशाभावात्।

किंच - अस्मिन् प्रकरणे सम्भूत्यसम्भूत्युपासनयोः व्यस्तयोः प्रत्येकमनुष्ठितयोः अनिष्टफलाभिधानपूर्वकं समुच्चयेन तयोर्द्वयोः अनुष्टानावश्यकतां प्रदर्श्य तथाऽनुष्ठाने मृत्युंतरणपूर्वकामृतप्राप्तिलक्षणं फलं सिद्ध्यतीत्यभिधीयत इत्यवगम्यते। इदंच शंकरकृतव्याख्याने संगतं न भवति - यतः तेन असम्भूत्युपासनस्य अव्याकृतप्रकृतितत्त्वोपासनरूपस्य प्रकृतिलयात्मकम् अमृत-शब्दितं फलमिति सम्भूत्युपासनस्य व्याकृतप्रकृतितत्त्वोपासनरूपस्य कार्य-ब्रह्मोपासनपर्यवसन्नस्य अणिमाद्यैश्वर्यं फलमिति - तदुभयमपि अमुमुक्षु-संसारिकाक्षितफलशेषरूपमेवेति च अभिधीयते। एवं सति हि प्रत्येकं क्रियमाणयोः एतयोः उपासनयोः तत्तत्संसार्यधिकारिकाक्षिफलविशेषसिद्धिरेव

भवतीति तयोः प्रत्येकं कृतयोरनिष्टफलावाप्त्यभिधानम् - 'अन्धं तमः प्रविशन्ति' (ई.उ.12) इत्यादिना कृतं नोपपद्यते ।

**शांकरमते सम्भूत्यसम्भूत्योस्समुच्चयेन अनुष्ठानानुपपत्तिः**

एवं समुच्चयेन तयोः उभयोरुपासनयोः अनुष्ठानविधानमपि न संगच्छते- अणिमाद्यैश्वर्यप्राप्तिप्रकृतिलयलक्षणयोः फलयोः परस्परविरुद्धत्वेन युगपत्साधनासम्भवात्, प्रत्युत प्रत्येकमेवानुष्ठिताभ्यां ताभ्यामुपासनाभ्यां क्रमेणैव तयोः फलयोः साधनसम्भवेन तयोरुपासनयोः प्रत्येकानुष्ठाने अनिष्टफलावाप्त्यभिधानेन निन्दनपूर्वकं समुच्चयेन युगपदनुष्ठानविधानस्य उपपत्तिलेशानुपलम्भाच्च ।

न च समुच्चयेनानुष्ठितयोः तयोरुपासनयोः अन्यदेव किंचित् अविरुद्धं फलमुच्यत इति तेनाभिधीयते, येन प्रत्येकानुष्ठाननिन्दापूर्वकं समुच्चयेन द्वयोरुपासनयोर्विधानं कथंचिदुपपद्येत । उच्यते च प्रत्युत तेन - 'मृत्युं तीर्त्वा' इत्यस्य - अणिमाद्यैश्वर्यप्राप्तिलक्षणफलपर्यवसन्नानैश्वर्याधर्मकामादिलक्षणमृत्युतरणपरत्वम् 'अमृतमश्नुते' इत्यस्य प्रकृतिलयलक्षणफलपरत्वं च व्याकुर्वता समुच्चयेन अनुष्ठितयोरपि तयोरुपासनयोःप्रत्येकानुष्ठिततत्साध्यफलद्वयप्राप्तिप्रतिपादनपरत्वमेव अस्याश्श्रुतेः। तच्च असम्बद्धं - परस्परविरुद्धयोर्द्वयोः फलयोः युगपत्प्राप्त्यसम्भवात्, क्रमेणैव तत्प्राप्तेर्विवक्षितत्वे च तयोरुपासनयोः प्रत्येकानुष्ठानदूषणपूर्वकं समुच्चयेन युगपदनुष्ठानविधानानुपपत्तेश्च ।

एवं मुमुक्षुविषयपरविद्याप्रकरणेऽस्मिन् - 'मृत्युं तीर्त्वा' इत्यनेन प्रतिपन्नस्य मृत्युतरणस्य संसारतरणरूपताम् 'अमृतमश्नुते' इत्यनेन प्रतिपन्नायाः अमृतप्राप्तेर्ब्रह्मप्राप्तिरूपतां च स्वरसतः प्रतीयमानां विहाय मध्ये संगतिलेशविधुरबुभुक्षूपासनप्रसंगं स्वैरं परिकल्प्य तदानुगुण्येन मृत्युतरणामृतप्राप्त्योः सांसारिकफलविशेषरूपाणिमाद्यैश्वर्यप्रकृतिलयरूपतावर्णनं च असमंजसमेव। तत्रापि प्रकृतिलयस्य अमृतशब्दार्थतावर्णनं सुतराम् असमंजसम्, मरणाभावपरामृतशब्देन तद्बोधनासम्भवात्, उपासनविशेषेण प्रकृतिलीनानामपि विनैव उपासनविशेषं कालवशान्महाप्रलये प्रकृतिनिर्लीनवदेव पुनःपुनस्सृष्टिषु यावत्प्रकृतिसम्बन्धं जननमरणाद्यवस्थाया दुर्वारत्वात् ।

एवं - 'सम्भूतिं च विनाशं च' इत्यत्र - असम्भूतेः सम्भूतिनिवृत्तिरूपायाः सम्भूतिविनाशरूपतासम्भवेन विनाशशब्दप्रतिपाद्यतासम्भवस्य प्रागुपपादितत्वेन विनाशशब्दप्रतिपाद्यतायामित्थं स्वरसतः सम्भवन्त्या प्राकरणिकनिर्देशस्वभावतोऽपि स्वरसतः प्राप्तायां तदसम्भवम् मत्वा विनाशशब्दस्य विनाशधर्मिपरत्वेन सम्भूतिपरतायाः सम्भूतिशब्दस्य छान्दसाकारलोपकल्पनेन असम्भूतिपरतायाश्च प्रकरणस्वरसविरुद्धाया वर्णनमपि अव्युत्पन्नकृत्यमेव । तस्मात् सर्वथैव असम्बद्धम् अत्रत्यशांकरव्याख्यानम् ।

### व्याख्यान्तराणामपि असंगतिः

एतेन - अत्र मन्त्रत्रये सम्भूतिशब्दः - 'एतमितः प्रेत्याभिसम्भवितास्मि' (छां.उ.3.14.4) 'धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामि' (छां.उ.8.13.1) इत्यादिष्विव ब्रह्मप्राप्तिपरः ; असम्भूतिशब्दस्तत्स्थाने तत्समानार्थ-परतया प्रयुक्तो विनाशशब्दश्च ब्रह्मप्राप्तिप्रत्यासन्नतत्प्रतिबन्धकविनाशपरः । यद्वा 'विनाशेन मृत्युं तीर्त्वा' इति पूर्वोक्तसरूपशब्दे विरूपार्थपरिहाराय विनाशशब्देन तत्समानस्थानप्रयुक्तेन असम्भूतिशब्देन च मानदम्भादीनां हिंसास्तेयादीनां बहिर्मुखेन्द्रियवृत्तीनां च समाधिविरोधिपापहेतूनां विनाशो विवक्षितः, सम्भूतिशब्देन ब्रह्मसमाधिनिष्पत्तिः विवक्षिता इत्यभिप्रायेण वेदान्ताचार्यैस्तदनुयायिभिः अन्यैश्च कैश्चित्कृतमपि व्याख्यानम् अयुक्तमेवेति सिद्धम् । यथोक्तरीत्या सम्भूत्यसम्भूति-शब्दयोर्विग्रहपरिग्रहतन्निवृत्तिस्वारसिकयोः तत्परतयैव निर्वाहे ब्रह्मप्राप्तितत्प्रति-बन्धकविनाशपरतायाः समाधिनिष्पत्तितत्प्रतिबन्धकविनाशपरतायाश्च महता क्लेशेन बलात्कल्पनस्य अनावश्यकत्वात् । 'अभिसम्भवितास्मि' 'अभिसम्भवामि' इत्यादिषु अभ्युपसर्गयोगबलात् सकर्मकेण धातुना अभिसम्भूतेः प्राप्तिरूपायाः स्वरसतो लाभसम्भवेऽपि तद्विधुरेण कर्मवाचिपदसमभिव्याहारविधुरेण च स्वरसतः अकर्मकेण धातुना प्रतिपद्यमानायास्सम्भूतेः प्राप्तिरूपता हि [1]न स्वरसतस्सुवचा ।

1. 'न स्वरसतः सुवचा' - इति । अत्र श्रीरंगाचार्यभाष्ये सम्भूतिशब्दस्य असम्भूतिशब्दस्य च विग्रहपरिग्रहपरत्व-तन्निवृत्तिपरत्व-रूपार्थनिर्वहणं यद्यपि अदुष्टम् - न सिद्धान्तविरोधि च । अथापि श्रीदेशिकोक्तार्थदूषणेनौचित्यं पश्यामः । ईषद्भेदेन श्रुतप्रकाशिकोक्तस्यैव तैरपि प्रतिपादनात् । तथाहि अक्षरध्यधिकरणे श्रीसुदर्शनभट्टारकैः यादवप्रकाशोक्त - सूत्रयोजनानिरासावसरे प्रसंगवशात् एतन्मन्त्रगतसंभूत्यसंभूति(विनाश)शब्दार्थः एवं हि निरूपितः । यथा - संभूतिशब्दः सम्भवत्यनेनेति संभूतिरिति व्युत्पत्त्या मार्गपरः एतमितः प्रेत्याभिसंभवितास्मि-

समाधिनिष्पत्तिरूपता तु सुतरामेव न सुवचा। एवं सम्भूतिशब्दस्य ब्रह्मप्राप्तिपरतायाः समाधिनिष्पत्तिपरताया वा कथंचित् विलष्टकल्पनया वर्णनेऽपि असम्भूतिशब्दस्य सम्भूत्यभावपरताया एव सम्भवदुक्तिकतया सम्भूतिप्रतिबन्धकविनाशपरता हि सुतरामेव दुर्वचा । एवम् असम्भूत्युपासनस्य सम्भूत्युपासनस्य च तत्तत्प्राप्त्युद्देश्यकानुसन्धानरूपस्य प्रत्येकं करणे - 'अन्धं तमः प्रविशन्ति' (ई.उ.9) इत्यादिमन्त्रे महानर्थप्रतिपादनं च असम्बद्धम् ।

**स्वव्याख्याने आशंकापरिहारौ**

न च - भवदीयव्याख्यानेऽपि - सम्भूतिशब्दस्य अप्राकृतविग्रहपरिग्रहपरताया असम्भूतिशब्दस्य प्राकृतविग्रहपरिग्रहाभावपरतायाश्च स्वीकारे शब्दास्वारसिकतापत्तिर्दुर्वारा, सम्भूतिशब्दप्रतिपन्नार्थसामान्याभावस्यैव असम्भूतिशब्देन स्वरसतो बोधसम्भवेन प्राकृतविग्रहपरिग्रहाभावलक्षणविशेषाभावबोधासम्भवात्; एवं सम्भूत्यसंभूत्युपासनयोः दिव्यविग्रहपरिग्रहप्राकृतविग्रहपरिग्रहाभावफलोद्देश्यकोपासनरूपयोः प्रत्येकानुष्ठाने महानर्थवर्णनानुपपत्तिश्च भवतोऽपि तदवस्थैवेति --- वाच्यम् ; सम्भूत्यसम्भूतिशब्दयोर्विग्रहपरिग्रहतदभावपरतायाः-स्वारसिकत्वेनात्र समुच्चये परस्पराविरोधाय सम्भूतिशब्दस्य एकविधविग्रहपरिग्रहपरताम्, असम्भूतिशब्दस्य एकविधविग्रहपरिग्रहाभावपरतांच स्वीकृत्य अस्य मन्त्रस्य समुच्चयेनोभयोपासनपरत्वस्वीकारे स्वारस्यभंगाभावात् । 'अजायमानो बहुधा विजायते' (तै.आर.3-13) इत्यादिषु समुच्चयेन प्रतियोगितदभावोभयप्रतिपादनपरप्रकरणेषु सर्वत्र अविरोधाय सामान्यशब्दस्य विशेषपरताया एव स्वीकारदर्शनात्, अत्र सम्भूत्यसम्भूत्युपासनयोः सामान्यतो विग्रहपरिग्रहतदभावोद्देश्यकयोः व्यस्तयोः प्रत्येकमनुष्ठान एव महानर्थप्रतिपादनस्य 'अन्धं तमः प्रविशन्ति' (ई.उ.9) इत्यादिमन्त्रविवक्षितत्वेन अनुपपत्तिलेशाभावाच्च ।

---

ब्रह्मलोकमभिसम्भयानि - इति च प्रयोगात् । विनाशशब्दश्च सुकृतदुष्कृतविनाशविषयः । अतो मार्गस्य कर्मविनाशस्य च चिन्तनं विद्याङ्गत्वेन समुच्चित्य विधीयते - इति । एवं श्रुतिनिदर्शनेन संभूतिः ब्रह्मप्राप्तिरिति, क्तिन्प्रत्ययस्य करणार्थकतया ग्रहणात् अर्चिरादिमार्गपरतेति च, श्रुतप्रकाशिकोक्तमेव श्रीदेशिकैः ब्रह्मप्राप्तिमात्रार्थकतया असंभूति (विनाश) शब्दः तदीत्यैव प्रतिबन्धककर्मविनाशपरतया च स्वीकृतः इति स्थिते, सोपसर्गस्य अभिसंभवधातोः सकर्मकत्वेपि केवलसंभूतेः अकर्मकत्वमेवेति प्राप्त्यर्थकत्वाभावः इत्याक्षेपः असंभूतिशब्दस्य प्राप्तिप्रतिबन्धकनिवृत्तिपरत्वं तु सर्वथा दुर्वचमिति आक्षेपश्च अत्रोक्तः अलग्नक इति ध्येयम्। एवं श्रीदेशिकोक्तार्थस्य श्रुतप्रकाशिकाप्रामाण्येन सम्प्रदायसिद्धत्वात् अप्रतिक्षेप्यत्वमिति संभाव्यते ।

सामान्यतो विग्रहपरिग्रहस्य केवलस्य प्राप्यतया अनुसन्धानेऽपि पुनः संसारप्राप्त्यादिलक्षणमहानर्थः प्राप्नोति, सामान्यतो विग्रहपरिग्रहाभावस्य केवलस्य प्राप्यतया अनुसन्धानेऽपि पश्चाद्यावदात्मभाविमहानर्थरूपकैवल्यपुरुषार्थ एव प्राप्नोति ; अतः कर्माधीनप्राकृतशरीरलक्षणैकविधविग्रहपरिग्रहाभावस्य कर्मानधीना-प्राकृतशरीरलक्षणैकविधशरीरपरिग्रहस्य च प्राप्यतयाऽनुसन्धाने कर्माधीनप्रकृति सम्बन्धलक्षणमृत्युतरणं दिव्यविग्रहपरिग्रहसापेक्षभगवत्प्राप्तिलक्षणपरमपुरुषार्थश्चे-त्युभयं सिद्ध्यतीत्येव वेदपुरुषोपदेशस्य इहाभिमतत्वात् नात्र कश्चिद्विरोधः ।

### सम्भूत्यसम्भूत्योरर्थान्तरवर्णनम्

यद्वा - अत्र सम्भूतिशब्दस्य सामान्यतो विग्रहपरिग्रहमात्रपरत्वेऽपि न विरोधः, असम्भूतिशब्दस्य स्वप्रयोज्यकर्मफलभोगाश्रयत्वसम्बन्धेन विग्रहपरिग्रहसामान्या-भावपरत्वसम्भवेन कर्माधीनविग्रहपरिग्रहमात्राभावतदनधीनविग्रहपरिग्रहयोरेव सम्भूत्यसम्भूत्युपासनयोः समुच्चितयोः फलतया पर्यवसानसम्भवात्, व्यस्तयोः तयोः संसारकैवल्ययोरेव पर्यवसानसम्भवाच्च ।

### शंकरमतानुयायि - महीधरमतनिरासः

एवं शंकरमतानुयायिना महीधरेण 'अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते' (ई.उ.9) इत्यादिमन्त्रत्रयस्य शंकरव्याख्याने किंचिदतृप्तिं भजमानेन कृतम् 'असम्भूतिम्' इत्यादेः बौद्धादिमतनिन्दापरं व्याख्यानं तु सुतरामेवासम्बद्धम् । अस्य प्रकरणस्य प्रत्येकं कृतयोस्सम्भूत्यसम्भूत्युपासनयोः व्यस्तयोः अनर्थहेतुतायाः, सहकृतयोः समस्तयोरभ्युदयहेतुतायाश्च प्रतिपादने तात्पर्यस्य प्रस्फुटत्वेन 'अन्धं तमः प्रविशन्ति येऽसम्भूतिमुपासते' (ई.उ.9) इत्यादिमन्त्रे असम्भूत्युपासनस्य 'मृतस्य पुनस्सम्भव एव नास्ति, अतश्शरीरान्त एवास्माकं मुक्तिः' इत्येवंभूत-बौद्धोपासनरूपतायाः सम्भूत्युपासनरूपतायाः सम्भूत्युपासनस्य कर्मानुष्ठानलेश-विधुरकेवलात्मोपासनरूपतायाः - 'सम्भूतिं च विनाशं च' इत्यादिमन्त्रे - सम्भूति-शब्दस्य - असम्भूतिशब्दस्थाने तत्पर्यायत्वाभिप्रायेण प्रयुक्तस्य विनाशशब्दस्य च क्रमेण परब्रह्मशरीरपरतायाश्च वर्णनस्य प्रकरणस्यभावानभिज्ञाव्युत्पन्नकृत्यमात्र-रूपताया आपण्डितपामरम्, अतिस्फुटत्वात् ।

तथा च शंकरकृतं तदनुयायिकृतं च व्याख्यानं, वेदान्ताचार्यकृतं तदनुयायिकृतं च व्याख्यानं यथोक्तानुपपत्तिभ्यः श्रुत्यक्षरस्वारस्याननुगुणत्वाच्च अनुपादेयमेव इति सिद्धम् ।।

## आनन्दभाष्यम्

किन्तदन्यत् मोक्षसाधनमित्याकांक्षायामाह -

**विरोधिवर्जनांगकसमाधेः मोक्षसाधनत्वम्**

**सम्भूतिम्** - समाधिरूपां ब्रह्मोपासनाम् **विनाशम्** - विनाशः - निवृत्तिः, स च ब्रह्मोपासनाविरोधिहिंसास्तेयादिवर्जनरूपः, तं (विनाशं) योगविरोधिवर्जनं च यः - उपासकः **सह** - साहित्येन - अंगांगिभावेन **उभयं वेद** - जानाति, युगपदेव उभयं कुरुते इत्यर्थः । **स** उपासकः **विनाशेन** - समाधिविरोधिवर्जनसेवनेन मृत्युम्- समाधिरूपोपासनप्रतिबन्धकं पापम् तीर्त्वा - दूरीकृत्य ततो जातया **सम्भूत्या** समाधिरूपब्रह्मानुभूत्या उपासनापरपर्यायया **अमृतम्** - ब्रह्मप्राप्तिरूपामनुभूतिम् 'एतमितः प्रेत्याभिसम्भविताऽस्मि' (छां.उ.3.14.4) इति श्रुतिप्रतिपादितां सम्भूतिमिति यावत् । **अश्नुते** - (मोक्षं) प्राप्नोति इत्यर्थः ।

हिंसास्तेयादयः कामक्रोधादयश्च समाधेः विरोधिनः ; अतः तद्वर्जसहकृतः समाधिः निष्पन्नरूपो भवति । स एवात्र सम्भूतिवाच्यः, तत्सिद्धौ ब्रह्मप्राप्तिरूपा अनुभूतिः मोक्षपदाभिलप्या सिध्यति । अतः विरोधिवर्जनसमाध्योः अंगांगिभावेन सेवनमेव मोक्षसाधनम् इत्याचार्येण विविच्य अत्र दर्शितम् ।।

## सुबोधिनी

**सम्भूतिं च विनाशं च यस्तद्वेदोभयं सह ।** **सम्भूतिम्** - इत्यवर्णलोपेन निर्देशः, **असम्भूतिम्** - आत्मोपासनम्, ज्ञाननिष्ठाम् इत्येतत् ।

विनाशशब्देन उत्पादशब्देनाभिसहितं कर्म उच्यते, ज्ञानं कर्म च इत्यर्थः । **यस्तद्वेदोभयं सह** - अंगांगिभावेन वेद । **विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृत - मश्नुते** - व्याख्यातप्रायम् ।

यद्वा इदमेव स्फुटं कथयति - **सम्भूतिं च** इति । **सम्भूतिम्** - ब्रह्मप्राप्तिरूपं फलपर्व, **विनाशम्** - आत्यन्तिकप्रकृतिनिवृत्तिरूपप्रतिबन्धकनिवृत्तिरूपफलपर्वान्तरम्, **उभयं यः सह वेद** - सहानुसन्धेयत्वेन वेद । शिष्टं व्याख्यातप्रायम् ।।

## पंचदशो मन्त्रः

**हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।**
**तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ।। 15 ।।**

## प्रतिपदार्थदीपिका

एवम् आचार्यः सांगभक्तियोगमुपदिश्य अथ तन्निष्ठस्य अनुसन्धेयमन्त्रद्वयम् उपदिशति हिरण्मयेन इति ।

**हे पूषन्** - आदित्यान्तर्यामिन् ! सर्वभक्तपोषणस्वभाव ! **सत्यस्य** - 'सत्यं चानृतं च' (तै.आ.30) इति सत्यशब्दवाच्यस्य जीवस्य **मुखम्** - सर्वेन्द्रियप्रधानभूतं मनः **हिरण्मयेन** - हिरण्मयसदृशेन भोग्यवर्गेण **पात्रेण** - परमात्मविषयकवृत्तिप्रतिबन्धकेन **अपिहितम्** - छादितम् **तत्** - जीवमनः **त्वम्** - हृषीकेशः त्वम् **सत्यधर्माय, सत्यस्य**- जीवस्य **धर्माय** - धर्मभूतज्ञानाय **दृष्टये** - भवद्दर्शनाय च **अपावृणु** - तिरोधानाभावं कुरु इत्यर्थः ।।

## वेदान्ताचार्यभाष्यम्

अथैवं फलपर्यन्तसांगब्रह्मविद्यानिष्ठस्य अनुसन्धेया मन्त्राः उपदिश्यन्ते । तेषु च पूषादिशब्दाः सर्ववाच्यं परमात्मानम् अनुसन्दधतां [1]तत्तद्देवताप्रणाड्या साक्षाद्वा तत्पर्यन्ताः । अत्र हि यम-सूर्यादिशब्दानाम् एकविषयत्वं स्वरसावगतम् ; तथा सत्येव उपपद्यते । तत्र प्रथमेन मन्त्रेण [1]पूषशब्दविवक्षितं भगवन्तं प्रति प्रस्तुतां समाधि-प्रतिबन्धनिवृत्तिं प्रार्थयते - हिरण्मयेन ----- दृष्टये ।

सत्यशब्दः अत्र जीवपरः 'सत्यं चानृतं च सत्यमभवत्' (तै.आन.6-3) 'अथ

---

1. इदं उपरि यात्स्यनारायणभाष्ये, तत्रैव टिप्पण्या च, विशदीकृतं दृष्टव्यम् ।

1. पूषन् - क,ख,ग.

नामधेयं सत्यस्य सत्यं प्राणा वै सत्यं तेषामेष सत्यम्' ( बृ.उ.4-3-6) इत्यादिषु जीवेऽपि तत्प्रयोगात् । तस्य मुखम् - अनेकेन्द्रियावष्टम्भतया मुखवदवस्थितं मनः । **हिरण्मयेन पात्रेण अपिहितम्** - रागात्मकतया हिरण्मयसदृशेन रजोमयेन पात्रेण परमात्मविषयवृत्तिप्रतिरोधकेन छादितम् । हृदि सन्निहिते परमात्मविषये निरुद्धवृत्तिकम् इत्यर्थः । रजःकथनं तमसोऽप्युपलक्षणम् । हिरण्मयशब्देन कर्माधीनभोग्यवर्गप्रदर्शनम् । तत् । जीवस्य मुखस्थानीयं मनः पूषन् ! आश्रितपोषणस्वभाव । अपावृणु - निरस्तपिधानं कुरु । कस्य हेतोः ? सत्यधर्माय दृष्टये - सत्यस्य जीवस्य धर्मभूताय, पूर्वोक्तब्रह्मानुदर्शनाय इत्यर्थः ।।।

## ईशावास्यप्रकाशिका

एवमाचार्यः सांगभक्तियोगमुपदिश्य अथ तन्निष्ठस्य अनुसन्धेयं मन्त्रद्वयम् उपदिशति । तत्र प्रथमेन मन्त्रेण पूषशब्दविवक्षितं भगवन्तं प्रति प्रस्तुतां समाधिप्रतिबन्धकनिवृत्तिं प्रार्थयते हिरण्मयेन इति ।

**हे पूषन्** - आदित्यान्तर्यामिन् ! 'य आदित्ये तिष्ठन्' ( बृ.उ.5-7-13) इत्यारभ्य 'य आदित्यमन्तरो यमयति' (बृ.उ.5-7-13) इति श्रुतेः ; [1]'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' (ब्र.सू. 1-1-31) इति न्यायाच्च ।

यद्वा, पूषन् ! आश्रितपोषणस्वभाव । इत्यर्थः । [2]'साक्षादप्यविरोधं जैमिनिः'

1."शास्त्रदृष्ट्या" इति । पूषन् शब्दः सूर्यवाची तच्छरीरकतदन्तर्वर्तिपरमात्मपर्यन्तः । यः आदित्ये तिष्ठन् --- "य आदित्यमन्तरो यमयति" इति श्रुतेः । सूत्रकृदपि ईदृशमेव वेदशास्त्रं प्रमाणीकृत्य परमात्मपर्यन्ततां बोधयति "शास्त्रदृष्ट्या तु उपदेशो वामदेववत्" इति इन्द्रप्राणाधिकरणे । शास्त्रदृष्ट्या - पृथिव्यां तिष्ठन् - आदित्ये तिष्ठन्- "सर्वभूतान्तरात्मा" इत्यादिशास्त्रज्ञानेन । (दृष्टिः - ज्ञानं ) उपदेशः - मामुपास्स्वेति प्रतर्दनाय इन्द्रकृतोपदेशः- संगच्छते । अहंत्वमादिशब्दानामपि तत्तच्छरीरकपरमात्मन्येव पर्यवसानं ज्ञात्वा इन्द्रः मामुपास्स्वेति प्राह । मदन्तर्यामिणं उपास्स्वेति तदर्थः इति भावः । वामदेववत् । एतन्नामकः ऋषिः गर्भस्थ एव ब्रह्मज्ञानशाली "अहं मनुरभवं सूर्यश्च" इत्यादिना स्वस्य, स्वेतरस्य सर्वस्य च, ब्रह्मात्मकत्वं जानन् यथा 'अहं ' शब्दस्य स्वान्तर्यामिब्रह्मपर्यन्ततां मन्यते - तद्वत्, इति सूत्रार्थः ।

2. "साक्षादपि" - इति । इदं वैश्वानराधिकरणस्थसूत्रम् । "आत्मानमेवेमं वैश्वानरं" इत्यादि वैश्वानरोपासनवाक्ये यथा - वैश्वानरशब्दः लौकिकवह्न्यादिषु प्रकरणोक्तसर्वात्मकत्वादिविशेषणसम्भवात् परमात्मवाचक एवेति विश्वेषां नराणां नेतृत्वादिव्युत्पत्त्या साक्षात्परमात्मवाचक एव भविष्यतीति न विरोध इति जैमिनिर्मन्यते - इति सूत्रार्थः । एवं प्रकृतमन्त्रेऽपि पूषशब्दः आगामिमन्त्रे यम-सूर्यादिशब्दाश्च व्युत्पत्तिसिद्धासंकुचितप्रवृत्तिनिमित्तधर्मशालित्वेन भगवद्वाचका इति भावः ।

(ब्र.सू.1-2-29) इति सूत्रितत्वात् । सत्यस्य - सत्यशब्देन अत्र प्रकृत्यादिवत् स्वरूपविकाररहितो जीवात्मोच्यते । 'सत्यं चानृतं च सत्यमभवत्' ( तै.आन. 6-3) इत्यादिषु जीवेऽपि सत्यशब्दप्रयोगात् । तस्य मुखम् - मुखवत् अनेकेन्द्रियावष्टम्भतया मुखसदृशं मन इत्यर्थः । हिरण्मयेन - हिरण्मयसदृशेन, कर्माधीनभोग्यवर्गेणेति यावत् । पात्रेण - परमात्मविषयकवृत्तिप्रतिरोधकेन अपिहितम् - छादितम्, हृदिनिहते परमात्मविषये निरुद्धवृत्तिकं जातमित्यर्थः । तत् - जीवस्य मुखस्थानीयं मनः त्वम् । हृषीकाणामीशः त्वम् अपावृणु - निरस्ततिरोधानं कुरु इत्यर्थः । तत्कस्य हेतोः ? तत्राह - सत्यधर्माय - सत्यस्य जीवस्य धर्मभूतायै दृष्टये । दृष्टिः - दर्शनम्, त्वद्दर्शनायेति भावः ।।

## श्रीरंगाचार्यभाष्यम्

### वेद उपासते इत्यादि पदयोजनापूर्वकम् उपासनमन्त्रप्रतिपादनम्

अयं मन्त्रःकाण्वैःपंचदशमन्त्रतया पठ्यते ; माध्यन्दिनैः सप्तदशमन्त्रतया । तत्रापि उत्तरार्धम् - योऽसावादित्ये पुरुषस्सोऽसावहम् । 'ओं खं ब्रह्म' इत्येवं रूपं च पठ्यते । इतः पूर्वमुपासनस्य स्वरूपं सांगं प्रतिपाद्य तत्करणमन्त्रा इत आरभ्य अभिधीयन्ते । पूर्वमन्त्रतः 'उपासते' इति वा, 'वेद' इति वा पदमनुवर्त्य, इति शब्दं कर्तृवाचकब्रह्मोपासकपरशब्दं च प्रपूर्य 'इत्युपासते' इति वा, 'इति वेद' इति वा अमीषां मन्त्राणां अन्वयो बोध्यः, एतेषां मन्त्राणां प्राक् प्रवृत्तोपदेष्टुपदेशरूपत्वाभावेन प्रकारान्तरेण अन्वयासम्भवात् । एते हि मन्त्रा उपास्यपरमपुरुषोद्देश्यकोपासककर्तृकप्रार्थनापराः ।

### प्रकृतेः हिरण्मयपात्रत्वादिरूपणम्

पंचदशमन्त्रस्यास्य पदविवरणम् हिरण्मयेन पात्रेण - हिरण्यविकारभूततिरोधायकपात्रेण, तद्वत् स्पृहणीयता स्वप्राप्तीच्छारूपरागान्धताहेतुत्वलक्षणसादृश्येन हेतुना प्रकृत्याद्यपरपर्यायमायामयभोग्यभोगोपकरणभोगस्थानात्मकाचित्तत्व-तद्वियुक्तविशुद्धज्ञानानन्दलक्षणचित्तत्त्वात्मकवस्तुजातस्य पुरःप्रस्फुटस्फूर्तिकस्य चिदचिच्छरीरकपरमात्मानं प्रति बाह्यावरणदलभूतस्य हिरण्मयपात्रत्वेन निगीर्याध्यवसानमर्यादयाऽयं निर्देशः, यथा -

'पश्य नीलोत्पलद्वन्द्वान्निस्सरन्ति शिताश्शराः' ( चन्द्रा-13)
इत्यादिषु सादृश्यनिमित्तेन नीलोत्पलत्वशरत्वादिना नेत्रदृष्ट्यादिनिर्देशः । सत्यस्य-परस्य ब्रह्मणः तव मुखम् - प्राप्तिद्वारम्, भगवत्प्राप्तिहेतुज्ञानमार्गलक्षणम्, सद्दर्शनमिति यावत् । अपिहितम् - आच्छादितम् ।

'एष तु वा अतिवदति यस्सत्येनातिवदति' ( छा.उ.7-16-1) 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति' ( छा.उ.8-3-4) 'तस्योपनिषत् सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्' (बृ.उ.4-1-20) 'अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्' (बृ.उ.4-3-6) इत्यादिश्रुतिभिः सत्यशब्दस्य परब्रह्मनामत्वाऽवगमात्, जीवात्मन्यपि प्रयोगसत्वेऽपि ततोऽपि परब्रह्मण्येव मुख्यत्वाऽवगमात्, औचित्यात्, मुख्यातिक्रमस्य अन्याय्यत्वाच्च अत्रत्यसत्यशब्दः परमात्मपर एव।

बाह्यदलभूताचित्तत्वचित्तत्वनिबन्धनैश्वर्यकैवल्यलक्षणनानाविधार्वाचीनपुरुषार्थ-रागाकृष्यमाणचित्तानालोकानातादृशार्वाचीनपुरुषार्थहेत्वसत्यधर्मभूतज्ञानमार्गलक्षण-सद्दर्शनमार्गेण सर्वान्तरात्मतत्त्वभूतभगवत्प्राप्तिलक्षणपरमपुरुषार्थहेतुसत्यधर्मभूत-ज्ञानमार्गलक्षणसद्दर्शनप्रवेशप्रसंग एव प्रतिरुद्धाऽवकाशो वर्तत इति भावः ।

प्रसिद्धानि हि भगवत्प्राप्तिहेतुसद्दर्शनप्रतिरोधीनि बाह्यदर्शनानि बहूनि । भगवत्कटाक्षमन्तरेण बाह्यदर्शनरागनिवृत्तिपूर्वकसद्दर्शनप्रवृत्तेरसम्भावितत्वेन तदर्थं स एव प्रार्थ्यते ।

हे पूषन् - आदित्यशरीरक तन्मण्डलान्तर्वर्तिभगवन् । अस्या विद्याया अन्तरादित्यविद्याविशेषरूपतया तन्मण्डलान्तर्वर्तिभगवतः सम्बोधनमिदम्, उत्तरमन्त्रे 'व्यूह रश्मीन् समूह तेजः' (ई.उ.मा.पा.16) इत्यादिभिरन्तरादित्यविद्यालिंगाऽवगमात्, माध्यन्दिनपाठेऽस्मिन्नेव मन्त्रे 'योऽसावादित्ये पुरुषः' (ई.उ.मा.पा.16) इति स्पष्टमेव श्रवणाच्च । 'शास्त्रदृष्ट्या तूपदेशो वामदेववत्' (ब्र.सू.1-1-31) इति सूत्रोक्तन्यायेन शरीरवाचकानां शरीरिण्यपि शक्तिसद्भावात् सूर्यवाचकपूषशब्दस्य इह तच्छरीरकपरमात्मपरत्वम् इत्यवधेयम् । त्वं सत्यधर्माय दृष्टये-

त्वत्प्राप्तिलक्षणपरमपुरुषार्थहेतुभगवद्धर्मरूपसद्दर्शनाय, अस्माकं समीचीनदर्शन-प्रवृत्तिसिद्धय इति यावत् । तत् यथोक्तसद्दर्शनलक्षणं भवत्प्राप्तिद्वारम्, अपावृणु-अपगततिरोधानं कुरु, असद्दर्शनप्रवृत्तिहेतुरागलक्षणं सद्दर्शनावरणं दूरीकुरु इति यावत् इति बोध्यम् ।

भगवत्प्राप्तिविरोधिबाह्यविषयनिवृत्तिः भगवत्प्राप्तिज्ञानमार्गप्रवृत्तिश्चेति उभयमपि भगवदेकायत्तम् इत्यत एव तदर्थं भगवानेव अत्र प्रार्थ्यते । तदुक्तं भगवतैव -

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ।। ( भ.गी.7-14) इति ।
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयन्ति ते ।। ( भ.गी.10-10) इति च ।

अन्येषां दर्शनानाम् अल्पास्थिरप्रयोजनान्तरेष्वेव परमप्रयोजनत्वबुद्धिरूपत्वात् वस्तुतः तत्र परमप्रयोजनत्वाभावाच्च असत्यधर्मरूपता ; भगवत्प्राप्तेरेव वस्तुतः परमपुरुषार्थरूपतया तत्र तथात्वबुद्धिरूपस्य भागवतदर्शनस्यैव सत्यधर्मरूपता ; यद्वा दर्शनान्तराणां प्रयोजनान्तरपर्यवसायिनां भगवत्प्राप्त्यपर्यवसायित्वाद्यसत्यधर्मता ; भागवतदर्शनस्यैव 'सत्यस्य धर्मः' इति व्युत्पत्त्या सत्यशब्दवाच्यभगवत्सम्बन्धि-तत्प्राप्तिरूपश्रेयस्साधनवाचिसत्यधर्मशब्दवाच्यता च इत्यवधेयम् । माध्यन्दिनपाठ-सिद्धैतन्मन्त्रोत्तरार्धविवरणम् उत्तरमन्त्रविवरणदशायां करिष्यते ।।

## आनन्दभाष्यम्

एवं, स्ववर्णाश्रमोचितनित्यनैमित्तिककर्मांगकं हिंसास्तेयकामक्रोधादि-रूपोपासनापरिपन्थिपरित्यागांगकं च परमोपासनमेव भक्तिसम्भूतिशब्दवाच्य-मोक्षसाधनम् इत्युपदिश्य तादृशोपासनशीलस्य मनोनैर्मल्याय भगवदनुग्रहः परमोपकारक इति भगवदनुग्रहप्राप्तये प्रार्थनाम् उपदिशत्याचार्यः (हिरण्मयेनेति) ।

### उपासनाप्रतिबन्धकनिवृत्तिहेतुभगवदनुग्रहप्रार्थना

**सत्यस्य** - परमात्मनः जीवस्य च, 'सत्यं ज्ञानमनन्तं ब्रह्म' ( तै.आन.1) इत्यत्र

परमात्मनि 'सत्यं चानृतं च' (तै.आन.6) इत्यत्र जीवे च सत्यशब्दप्रयोगदर्शनात् उभयोः सत्यशब्देन ग्रहणम् । मुखम् - द्वारम्, मनः 'मनसैवानुद्रष्टव्यम्' (बृ.उ.6-4-19) इत्यादिश्रुतेः मनस एव परमात्मदर्शने परिशुद्धजीवस्वरूपदर्शने च द्वारत्वाऽवगमात्।

यद्वा 'मुखमिव मुखम्' मुखसदृशं तच्च मन एव, अनेकेन्द्रियावष्टम्भकत्वेन द्वयोः सादृश्यप्रतीतेः । **हिरण्मयेन** - हिरण्यसदृशेन शब्दादिविषयेण, हिरण्यं हि प्रलोभकं प्रसिद्धमेव तथैव विषयोऽपि शब्दादिः प्रलोभकः प्रसिद्धः, अतः तयोः सादृश्यमुचितमेव । **पात्रेण** - आच्छादकेन **अपिहितम्** - आच्छादितम्, शब्दादिः विषयः स्ववासनया जनानां मन आच्छादयति । आच्छादनं च अत्र आत्मस्वरूपे परमात्मनि वा वृत्तिप्रतिरोधनमेव, विषयवासना कलुषतया मनसः परमात्मविषयिणी जीवस्वरूपविषयिणी वा वृत्तिर्न जायते ।

अतः **हे पूषन्** - हे आश्रितपोषक । यद्वा, हे आदित्यान्तर्यामिन् । 'पूषन्' पदस्य परमात्मनः शरीरमात्रोपलक्षणात् हे सर्वान्तरात्मन् इति यावत् । **तत्** - जीवस्य मुखसदृशं मनः **अपावृणु** - उद्घाटय ; विषयवासनारूपं त्वद्वृत्तिप्रतिबन्धकमावरणं दूरीकृत्य मलसम्पर्करहितं कुरु ।

**सत्यधर्मशब्दस्य अर्थविशेषोक्तिः**

आवरणापनयने प्रयोजनं दर्शयति **दृष्टये** - दृष्टिः 'आत्मा वा अरे द्रष्टव्यः' (बृ.उ.6-5-6) इत्यत्र प्रोक्ता उपासनारूपा ; त्वत्साक्षात्कारायेत्यर्थः । दृष्टेरपि प्रयोजनं वक्ति **सत्यधर्माय** - धर्मः श्रेयस्साधनपरः सत्यश्चासौ धर्मश्च सत्यधर्मः । स च उपासनया प्रसन्नः परमात्मैव । तस्मै सत्यधर्माय तं प्राप्तुमित्यर्थः । 'यमेवैष वृणुते------तस्यैष आत्मा विवृणुते तनूं स्वाम्' (क.उ.2-23) इति श्रुत्या परमात्मनः प्राप्यस्यापि प्रापकत्वाऽवगमात् सत्यधर्मत्वं स्पष्टमेव । अथ च जीवस्य सत्यस्य-स्वाभाविको धर्मः अपहतपाप्मत्वादिरूपः सोऽपि सत्यः । तस्मै तं प्राप्तुमित्यर्थः ; 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छां.उ.8-3-4) इति श्रुत्यनुसारात् । दृष्टेः उपासनरूपायाः परमात्मप्राप्तिः स्वस्वरूपाभिनिष्पत्तिश्च इति द्वयमपि फलमिति भावः।

यद्वा सत्यो जीवः तस्य धर्मः धर्मभूतज्ञानं तद्रूपैव दृष्टिः परमात्मदर्शनम्, तच्च समाधिरूपम्, तादृशदृष्टिसिद्ध्यर्थं मनसः आवरणम् अपनय इति भावः ।।

## सुबोधिनी

अथ उपासकेन उपासनानिष्पत्तये कर्तव्यं भगवत्प्रार्थनाप्रकारमाह - हिरण्मयेन इति । अयमेव हि उपासनोपायेषु मुख्योपायः, यावत्परमात्मा प्रार्थनया न वशीक्रियते तावत्कर्मयोगाद्यपि दुःसम्पादम् । अत एव ----

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ।। (क.उ.3-10)
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः ।। (क.उ.3-11)

इति वशीकार्यतायां परमात्मनः प्राधान्यं श्रूयते । न हि परमात्मनः प्रसादादृते प्रयत्नशतेनापि मनोनैर्मल्यादि सिद्ध्येत् । उक्तं च गीतायाम् ---

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतान्तरन्ति ते ।। (भ.गी.7-14) इति ।

**सत्यस्य** - जीवस्य, परब्रह्मणो वा, उभयस्य वा । सत्यशब्दः 'सत्यं चानृतं च' (तै.आ.30) इति आत्मन्यपि श्रुतः । सर्वतः सत्यत्वात् ब्रह्मणि च । **मुखम्** - द्वारम्, मनसा हि द्वारेण आत्मस्वरूपं गृह्यते ; तन्मनः सत्यस्य मुखम् इत्युच्यते । तद्धि **हिरण्मयेन पात्रेणापिहितम्** - हिरण्मयशब्दोऽत्र प्रलोभकपरः, आच्छादनसाधनत्वात् पात्रमिति रूपकोक्तिः । प्रलोभकेन शब्दादिविषयेण इति यावत् । अपिहितम्- आच्छन्नम्, विषयवासनया आत्मस्वरूपे निरुद्धवृत्तिकमिति भावः ।

'इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः' (भ.गी.2-60)

तदहं किं करोमि ? सर्वथा त्वमसि सर्वरक्षकः, तत्त्वं पूषन्नपावृणु, **पूषन्** - हे सर्वरक्षक । **तत्** - उक्तम् आच्छादनम् **अपावृणु** - उद्घाटय मनसो विषयवासनादूषितत्वम् अपनय इत्यर्थः ।

कस्मै प्रयोजनाय ? दृष्टये - 'आत्मा वा अरे द्रष्टव्यः' (बृ.उ.6-5-6) इत्युक्तदृष्टिविशेषाय, उपासनासिद्ध्यर्थम् इति यावत्। तदपि कस्मै ? सत्यधर्माय - सत्यं धर्मं प्राप्तुम्। यश्चाऽयं मनुष्यत्वादिधर्मः स तु औपाधिकः, स्वाभाविको धर्मः सत्यो धर्म उच्यते, तच्च प्रजापतिवाक्योदितमपहतपाप्मत्वादिकम्, तन्निष्पत्तये इति भावः। 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छा.उ.8-3-4) इत्युक्तप्रकारेण स्वस्वरूपाविर्भावं प्राप्तुमपेक्षितो यो दृष्टिविशेषः त्वदुपासनं तन्निष्पत्तये। तन्मनसो विपरीतवासनादोषं त्वमेव अपनय, नान्यः शरणमिति भावः।

यद्वा - सत्यत्वमिह कालत्रयसम्बन्धित्वम्, धर्मः - श्रेयःसाधनम्, स च द्विविधः, सिद्धसाध्यभेदात्। तत्र साध्यः कर्माद्युपासनान्तः समग्रोऽपि, सिद्धस्तु तैः प्रसाद्यो भगवान्, तदनयोः सिद्ध एव तु धर्मः कालत्रयसम्बन्धात् सत्यो धर्म उच्यते, तस्मै सत्यधर्माय, तं प्रसादयितुम् इत्यम्। दृष्टये - साध्यधर्मरूपाय उपासनाय अपावृणु इति पूर्ववत् अन्वयः।

व्याख्याद्वयेऽपि सत्यधर्माय इत्यत्र 'एधोभ्यो व्रजति' इत्यत्रेव [1]चतुर्थी बोध्या।

यद्वा, 'सत्यधर्माय दृष्टये' इति विशेष्यविशेषणभावेन अन्वयः। दृष्टिफलस्य ब्रह्मणः सत्यत्वात् तत्प्रापकधर्मे सत्यधर्मत्वोक्तिः ।।

---

1. "क्रियार्थोपपदस्य च कर्मणि स्थानिनः" इति पाणिनीयेन सूत्रेणेति भावः ।।

* * * * * * *

## षोडशो मन्त्रः

**पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह तेजः ।**
**यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषस्सोऽहमस्मि ।।16।।**

## प्रतिपदार्थदीपिका

(पुनरपि द्रष्टव्यं परमपुरुषस्वरूपं निरूपयन् तद्दर्शनं तत्साधनं च प्रार्थयते । पूषन्निति ।)

**पूषन् !** - आश्रितपोषक **एकर्षे** - अद्वितीय । अतीन्द्रियार्थद्रष्टः ! **यम**- सर्वनियामक **सूर्य** - स्वभक्तबुद्धीनां प्रेरक **प्राजापत्य** - प्रजानां पतिः, प्रजापतिरेव प्राजापत्यः, **रश्मीन्व्यूह** - युष्मद्दर्शनप्रतिबन्धकरश्मीन् व्यूह - विगमय निवर्तयस्व । यत्तु दर्शनौपयिकं भवत्तेजः **सौम्यं तेजः** - तत्तु **समूह** - समूहीकुरु । किमर्थमित्यत्राह - यदिति यत् - प्रसिद्धं ते **रूपम्** - निरतिशयभोग्यस्य ते **कल्याणतमम्**- अत्यन्तमंगलकरम्, तत् ते रूपं दिव्यरूपं **पश्यामि** । एतद्दिव्यमंगलविग्रहविशिष्ट- भवद्दर्शनात्, भवत्सदृशो भवामि इत्याह - **योऽसाविति** - यस्तावदसौ पुरुषः यः प्रसिद्धः **असौ पुरुषः** - पूर्वोक्तपरमपुरुषः तद्दर्शनात्, **सोऽहमस्मि** - तत्सदृशो भवामि 'मम साधर्म्यमागताः' (भ.गी.14-2) इति 'परमं साम्यमुपैति' (मुं.उ.3-1-3) इत्यादिप्रमाणप्रतिपादितसारूप्यवान् अहमस्मीति भावः ।।

## वेदान्ताचार्यभाष्यम्

### दिव्यरूपसन्दर्शनप्रार्थना

पुनरपि तया दृष्ट्या द्रष्टव्यं विशिंषन् दृष्ट्यानुगुणमभ्यर्थयते **पूषन् एकर्षे - - - पश्यामि** इति ।

**एकर्षे** - अद्वितीयातीन्द्रियद्रष्टः, **यम** - सर्वान्तर्यामिन्, **सूर्य** - स्वभक्तबुद्धीनां सुष्ठु प्रेरक, **प्राजापत्य** - प्रजापतिप्रसूतस्य सर्वस्यान्तर्यामिन्, अविवक्षितप्रत्ययार्थो वा प्राजापत्यशब्दः, प्रजानां पते इत्यर्थः । **व्यूह रश्मीन् समूह तेजः** - स्वस्वरूप- प्रकाशानौपयिकान् स्वोग्ररश्मीन् व्यपोह, प्रभात्मकं च तेजस्समूहीकुरु ।

यत् - 'आदित्यवर्णम्' (तै.ना.12) इत्यादिप्रसिद्धं सर्वेभ्यः कल्याणेभ्योऽतिशयितकल्याणं शुभाश्रयभूतं ते - दिव्यं रूपं तत् पश्यामि ।

([1]अत्र वर्तमानव्यपदेशः उत्तरवाक्यवत् तात्कालिकानुसन्धानानुवादः । प्रार्थनाप्रकरणानुरोधे तु व्यत्ययेन पश्येयमिति लिङर्थोऽत्र ग्राह्य इत्यपुनरुक्तिः । तदा साधारण्यज्ञापनार्थं सदा पश्यामीति वा निरुपाधिकशेषत्वानुगुणोक्तिः ।)

---

1. 'अत्र वर्तमाने'ति - एतदादि कुण्डलितं निर्दिष्टवाक्यत्रयं सन्दिग्धार्थकम् । गाढावगाहनेन पाठः शोधनीयो भवति । आवापोद्वापरूपेण कैश्चिदिह पदान्तराणां प्रक्षेपः दृष्टानां पदानां निरासश्च कृतः । एवमपि परिशोध्य तैः निर्णीतो भावः क्रमेलकवत् वक्रतां गतः - इति अतृप्तिरेव पाठकेषु तदवस्था ।

अत्रायमस्मदाशयः । इह वाक्येषु पाठक्रमो विपर्यस्तः । 'प्रार्थनाप्रकरणे'त्यादि द्वितीयं वाक्यं तृतीयस्थाने निवेश्यम् । औचित्यात् । तृतीयं तु द्वितीयवाक्यतया पाठ्यम् । 'इत्यपुनरुक्तिः' इतीदं 'अनुगुणोक्तिः' इत्येतदनन्तरं योज्यम् । 'तदासाधारण्ये'ति च 'तदसाधारण्ये'ति समस्तंपदत्वेन शोध्यम् । एतावन्मात्रविपर्यासेनैव श्रीदेशिकविवक्षितभावबोधः सुलभः ।

तथा हि - मन्त्रे 'पश्यामि' इति लडन्तवर्तमानक्रियापदसमर्थकं प्रथमवाक्यम् 'तदसाधारण्ये'ति वाक्यं च । अत एवौचित्यात् तदसाधारण्येति वाक्यस्य द्वितीयतया निवेशः । अनन्तरं च पश्येयमित्यर्थे छान्दसत्वकृतेन व्यत्ययेन लिङ्स्थाने लटः प्रयोग इति वर्तमानार्थकतात्यागेन प्रार्थनापरत्वनिर्णयः तृतीयवाक्यनिरूपितः । अथ च निर्दिष्टक्रमेण वाक्यत्रयस्य भावोऽवधार्यः । यथा— 'कल्याणतमं ते रूपं पश्यामी'ति वर्तमानार्थकलडन्तप्रयोगः 'सोऽहमस्मी'ति उत्तरवाक्यवत् तात्कालिकानुसन्धानानुवादसूचकः । उपासनदशायां यथा 'आत्मेति तूपगच्छन्ती'ति रीत्या 'असावहमस्मी'ति स्वस्मिन् ब्रह्मात्मकत्वानुसन्धानानुवर्तनमावश्यकम्, तथा 'ते रूपं पश्यामी'ति फलानुसन्धानानुवर्तनमपि आवश्यकमिति 'दृष्टये' इति पूर्वमन्त्रोक्तदर्शनस्येह 'पश्यामी'त्यनुवादः । अपेक्षितं दर्शनं उपासनपरिपाकरूपसमाधिदशाकालिकत्वात् तात्कालिकम् । तादृशतात्कालिकदर्शनापेक्षायाः अनुसन्धानानुवृत्तिः वर्तमानप्रत्ययार्थः इति प्रथमवाक्यस्य भावः ।

'तदसाधारण्ये'ति द्वितीयवाक्ये तु - तच्छब्देन दर्शनं विवक्षितम् । तद्गतमसाधारण्यं च लौकिकवैलक्षण्यरूपम् । तच्च 'सदा पश्यन्ती'ति श्रुत्युक्तनित्यसूरिदर्शनवत् मे स्यात् इति ज्ञापनार्थमेव वर्तमानप्रयोगः । एवमन्यफलानपेक्षणेन दर्शनमात्रापेक्षणात् स्वस्मिन् निरुपाधिकशेषत्वद्योतनं कृतं भवतीति भावः । 'पडियाय् किडन्दु उन् पवळवाय् काण्बेने' इति कुलशेखरोक्तिवच्च सदा भगवन्मुखारविन्ददर्शनापेक्षा अत्र विवक्षिता । अत्र वाक्ये 'वा' इति पदेन पूर्वोक्ततात्कालिकदर्शनव्यावर्तनात् नित्यदर्शनानुवर्तनसूचनमिह विशेषः । अतश्च 'दृष्टये' इति पूर्वमन्त्रोक्तप्रार्थनेन न पुनरुक्तिरिति सिद्धम् । इदमपि अनुसन्धानरूपमेव ।

अथ तृतीयवाक्यं तु एवं निर्वाह्यम् । पूर्वोत्तरमन्त्रपर्यालोचनया 'अपावृणु-स्मर-नय-युयोधि' इति प्रार्थनपरत्वदर्शनात् अत्रापि 'पश्येय'मिति लिङर्थे एव लटः व्यत्ययेन प्रयोग इति ग्राह्यमिति । एवं पूर्ववाक्यद्वयं लड्व्याप्यवर्तमानार्थकतासमर्थनपरम् । असाधारण्यप्रदर्शनेन दर्शनपुनरुक्तिनिवारणपरं च । तृतीयं तु लटः लिङर्थतया व्यत्ययत्वसमर्थनपरमिति बोध्यम् ।

एवमत्र अन्यकृतं पाठशोधनमपि परिशीलनीयम् । प्रथमवाक्ये न भेदः । 'प्रार्थनाप्रकरणे'त्यादिवाक्यं द्वितीयं 'लिङर्थो ग्राह्य' इत्यन्तमेव । अथ, '(ते इत्यस्य) पुनरुक्तिः तदसाधारण्यज्ञापनार्था । (त्वदर्थं) पश्यामीति वा निरुपाधिकशेषत्वानुगुणोक्तिः'। इति तैः शोधितवाक्यानुपूर्वी । अत्र अपुनरुक्तिपदं पुनरुक्तिरिति विपरिणमितम् । कस्य पुनरुक्तिरिति चेत् - मन्त्रे 'ते इत्यस्य' इति पूरितम् । सदेति निरस्तम् । पुनः वाक्यं विभज्य,'त्वदर्थं' इति च चतुर्थवाक्ये घटितम् । एवं च मन्त्रे पुनरुक्तेः समर्थनाय प्रथमस्य ते इति पदस्य भगवद्रूपगतासाधारण्यज्ञापनार्थता । तथा द्वितीयस्य (त्वदर्थं) इत्यर्थकथनेन मत्कर्तृकं त्वद्दर्शनस्य फलं प्रधानं तवैवेति

परमात्मनोऽनुसन्धानप्रकारः

अथ अन्तरात्मनः अहंग्रहणेन अनुसन्धानमाह - **योऽसावसौ पुरुषस्सोऽहमस्मि** इति । वीप्सा अत्यादरव्यंजनार्था ।

यद्वा - 'योऽसावतीन्द्रियग्राह्यस्सूक्ष्मोऽव्यक्तस्सनातनः ।
सर्वभूतमयोऽचिन्त्यस्स एष स्वयमुद्बभौ' ।। (म.स्मृ.1-7)

इत्यादिवाक्यच्छायया यत्तच्छब्दाभ्यामदश्शब्दौ विभज्य अन्वेतव्यौ; [1]सर्वातीन्द्रिय-प्रमाणसिद्धत्वद्योतनार्थौ ।

**पुरुषः** - पूर्णत्वपूर्वसत्त्वादिगुणकः आदित्यवर्णविग्रहविशिष्टः सर्ववेदपठितानन्यपरपुरुषसूक्तादिप्रसिद्धो महापुरुषः ।

**सोऽहमस्मि** - अहंशब्दोऽत्र जीवद्वारा तदन्तरात्मपर्यन्तः । अत एवास्मीत्यपि [2]प्रत्यग्रूपस्वविशिष्टे परमात्मनि विश्राम्यति । 'अस्मद्युत्तमः' (पा.सू.1-4-107)

---

तदगतनिरुपाधिकशेषित्वप्रदर्शनार्थता । इति भावः । इति तात्पर्यवर्णनं तदीयम् । अत्र त्वदर्थं पश्यामीति स्वकर्तृकदर्शनस्य फलं भगवदन्वयि कथं भवतीति तु दुरवधरं भवति । 'प्रार्थयते' इति पूर्वमुक्त्वा पुनरपि दर्शनफलं तवैवेति कथनं च व्याहतमिव । अतः एतन्मन्त्रावतारिकावाक्यस्य 'पुनरपि तया दृष्ट्या--' इत्येवं रूपस्य परिशीलने, पूर्वमन्त्रोक्तदर्शनपुनरूक्तिपरिहारपरतया अस्मच्छोधनमेव वरीय इति संक्षेपः । मन्त्रगतं 'ते' इति पदद्वयं तु 'ते कल्याणतमं' इति 'ते रूपं' इति च उभयत्र उभयोरन्वय इति श्रीवत्साङ्कनारायणमुनिभाष्यानुसारात् बोध्यम् । यद्वा शुक्लयजुर्वेदिना पाठक्रमे परिशीलिते 'यत्ते' इत्यत्र विरामकरणात् तस्य समूहतेजः इति पूर्ववाक्येनान्वयो बोध्यः इति न पुनरुक्तिः ।

1. सर्वातीन्द्रियेति - अत्रापि पाठभेदः । क्वचित् 'तौ च सर्वेन्द्रियदूरत्व-प्रमाणप्रसिद्धत्वद्योतनार्थौ' । इति शोधनं दृष्टम् । एवं 'असौ-असौ' इति अदश्शब्दद्वयेन अतीन्द्रियत्वं प्रमाणप्रसिद्धत्वं च उक्तमिति विवृतं च तत्र । उपरि निर्दिष्टपाठेऽपि केवलं 'सर्वातीन्द्रियत्वं' इति त्वप्रत्ययघटनेन उक्तार्थसिद्धिः । यद्वा - द्वन्द्वान्तश्रूयमाणन्यायेन श्रुतमेव त्वप्रत्ययं उभयत्रान्वीय, सर्वेषामतीन्द्रियत्वं प्रमाणसिद्धत्वं च द्योतयतः इत्यर्थो निराबाध एव । अतः पाठशोधने नावश्यकता ।

2. 'प्रत्यग्रूपस्वविशिष्ट' इति । पूर्ववाक्ये अहंशब्दस्य जीववाचिनः तदन्तर्यामिपरत्वमुक्तम् - 'य आत्मनि तिष्ठन् - यस्यात्मा शरीरं' इत्यादिश्रुतेः । शरीरवाचिना शरीरिपर्यन्ततायाश्च लोकवेदयोः दर्शनात् । तदास्ताम् । अस्मीत्युत्तमपुरुषस्य तदा कथमन्वयः? स हि अहमर्थभूतप्रत्यगर्थमात्रपरत्वेऽनुशिष्टः । एवं सति, अस्मेः धात्वर्थाश्रयवाचिनः प्रत्यगात्ममात्रपरत्वानुशासनात्, अहमर्थश्चेत् परमात्मा तदन्तर्यामी विवक्षितः, तर्हि नोभययोस्सामानाधिकरण्यं इति सूत्रविरोधः । 'युष्मद्युपपदे समानाधिकरणे---' इतिवत् अस्मद्यपि समानाधिकरणे उपपदे हि तद्विधिः? इत्याक्षेपस्येदं समाधानम् - 'अत एव अस्मीत्यपि प्रत्यग्रूपस्वविशिष्टे--' इत्यादि । अस्मीति उत्तमपुरुषोऽपि अहमर्थान्तरात्मपर्यवसाय्येव इत्यर्थः । प्रत्यग्रूपः यः स्वात्मा अहमर्थः, तद्विशिष्टे - तच्छरीरके परमात्मन्येव उत्तमपुरुषोऽपि अन्वेष्यति । तेन अहं-अस्मि-इत्युभयोरपि ब्रह्मण्येव पर्यवसानात् न सामानाधिकरण्यहानिरिति भावः । अथ अस-धात्वर्थाश्रयः न चेत्प्रत्यगर्थः, किन्तु तदन्य ईश्वर एव चेत् तर्हि 'शेषे प्रथमः' इति प्रथमपुरुष एव कुतो न प्राप्तः ? इति पुनराक्षेपे, 'अस्मद्युत्तमः' इत्येतावदेव हि अनुशिष्टम् ---' इत्याद्यनन्तरवाक्यद्वयं समाधानतया अवतीर्णम् । अयमर्थः । उद्देश्यविषयके अस्मच्छब्दे उपपदे उत्तमपुरुष इत्येव सूत्रार्थः । न तु सूत्रे 'तेनास्मच्छब्देन प्रत्यगात्ममात्रवाचिना भाव्य'मिति नियमः कोऽपि दृष्टः । किन्तु - तदुपपदत्वमात्रमपेक्षितं तत्र । स चेत् प्रणाड्या अन्तरात्मपरः अयमपि अस्मिः तथा तावत्पर्यन्तपर्यवसायीति न क्षतिः । एवं च - धात्वर्थस्य अस्मदर्थोद्देश्यकत्वे उत्तमः । युष्मदर्थोद्देश्यकत्वे मध्यमश्चेति व्यवस्था । उपपदभूतौ युष्मदस्मच्छब्दौ तु श्रोतृ-अनुसन्धातृ-मात्रपरावेव स्याताम् - मा वा - न तत्र सूत्रकृदास्था - इति भावः ।

इत्येतावदेव ह्यनुशिष्टम् । न पुनः अस्मच्छब्दस्य प्रत्यगात्मद्वारा परमात्मपर्यन्ततायामुत्तमनिवृत्तिः ।

एवं 'तत्त्वमसि' (छा.उ.6-8-7) इत्यादिषु असिशब्दोऽपि निर्वाह्यः । तत्र हि 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' (पा.सू.1-4-105) इत्येतावदेव हि स्मर्यते । न तु युष्मच्छब्दस्य स्वाभिमुखचेतनद्वारा तदन्तर्यामिपर्यन्तत्वे मध्यमनिवृत्तिः । [1]लोके हि 'अहं त्वमस्मि' 'त्वमहमसि' इत्याद्युपचारेषु उद्देश्यानुसारेण मध्यमोत्तमयोर्व्यवस्था । तद्वदत्रापि (त्वं वा अहमस्मि भगवो देवते इत्यादिषु युष्मदस्मदोःसहप्रयोगेऽपि)व्यवस्थोपपद्यते,उद्देश्यविषययोरेवात्रयुष्मदस्मच्छब्दयोः उपपदत्वेन सूत्रकृदभिप्रेतत्वात् ।

[2]भाष्ये तु तत्त्वमसिनिरूपणावसरे 'नात्र किंचिदुद्दिश्य किमपि विधीयते' (श्रीभाष्ये.1-1-1 अन्ते) इत्युक्तिरप्राप्तांशनिषेधाभिप्राया व्यक्ता, उपसंहारत्वोपपादनात् ।

---

1. 'लोके हि' इति - पूर्वोक्तमध्यमोत्तमपुरुषव्यवस्थासमर्थनार्थमिदम् । अयमाशयः । 'अहं त्वमस्मि' 'त्वमहं असि' इत्यादिलौकिकवाक्ये युष्मदस्मदोः सहप्रयोगे किं कार्यम्? तत्र उद्देश्यानुसारिणी खलु पुरुषव्यवस्था । अस्मदर्थोद्देशेन युष्मदर्थाभेदविधाने 'अहं त्वमस्मि' इति उत्तमः । युष्मदर्थोद्देशेन अस्मदर्थाभेदविधाने 'त्वं अहमस्मि' इति मध्यमः । इति च क्रमेण यथायथं पूर्वोक्तव्यवस्था हि आद्रियते । तद्वत् प्रकृते 'असौ अहमस्मि' 'तत् त्वमसि' इत्यादि वैदिकवाक्येपि एषैव पद्धतिः । एवं 'त्वं वा अहमस्मि भगवो देवते ! अहं वै त्वमसि' इत्यादावपि बोध्यम् । इत्थं च 'असौ अहमस्मि' इत्यस्य 'सूर्यमण्डलान्तर्वर्ती मदन्तरात्माभिन्नः' इति, 'तत्त्वमसि' इत्यस्य - 'जगत्कारणभूतं ब्रह्म त्वदन्तरात्माभिन्नं' इति च सामानाधिकरण्यसिद्धः शाब्दबोधः । उभयत्रापि अस्मद्युष्मदर्थौ प्रति ब्रह्मतादात्म्यबोधनमिति सारम् ।

2. 'भाष्ये तु' इति - श्रीभाष्ये महासिद्धान्ते तत्त्वमसिवाक्यार्थनिरूपणघट्टे स्थितस्य, "तत्त्वमसीत्यत्र उद्देश्योपादेयविभागः कथमिति चेत् नात्र किंचिदुद्दिश्य किमपि विधीयते । ऐतदात्म्यमिदं सर्वं - इत्यनेनैव प्राप्तत्वात्" इति वाक्यस्य विरुद्धं भवदुक्तमित्याक्षेपस्येदं समाधानम् । युष्मदर्थास्मदर्थयोः धात्वर्थं प्रति उद्देश्यत्वे तत्तदनुसारिणी मध्यमोत्तमपुरुषव्यवस्थेति स्वीकारेण, भाष्ये तु तत्त्वमसीत्यत्र त्वंपदार्थस्य उद्देश्यत्वं वा अन्यस्य विधेयत्वं वा नास्तीत्युक्तौ, तत्र असीति मध्यमपुरुषनिर्वाहस्यैव त्याज्यत्वापत्तिरिति आक्षेप्तुराशयः । नैवम् । असीति मध्यमपुरुषदृष्ट्या यदुद्देश्यत्वं युष्मदर्थस्य विकथयिषितम् - न तन्निषेधः तत्र भाष्ये विवक्षितः । किन्तु प्रकरणप्राप्तं ब्रह्मणोऽन्तःप्रविश्य नियमनोक्त्या स्वपर्यन्तनामरूपव्याकरणोक्त्या च सिद्धं जगतोऽस्य तच्छरीरत्वं शरीरवाचिना शरीरिपर्यन्तत्वं च इति यदिदं प्राधान्येन वाच्यम्, तस्य अज्ञातांशस्य ज्ञापनरूपं विधेयत्वं ऐतदात्म्यमिदं सर्वमिति पूर्ववाक्येनैव प्रतिपादितमिति, नात्र तत्त्वमसिवाक्ये अपूर्वं प्रतिपाद्यमस्ति । किन्त्विदं जगति निर्दिष्टस्यैव ब्रह्मात्मकत्वस्य श्वेतकेतुरूपव्यक्तिविशेषे उपसंहारप्रदर्शनेन त्वमपि तथा तदात्मक इति निगमनवाक्यमेवइतिभाष्यसूक्तेरर्थः।अतःअसिशब्दगतमध्यमपुरुषनिरूपितोद्देश्यकत्वनिरासेनभाष्यतात्पर्यमिति समाधानसारम् । उद्देश्यत्वं न प्रतिषिद्धं भाष्ये । किन्तु विधेयस्य ब्रह्मतादात्म्यस्य नापूर्वता पूर्वमेव ज्ञातत्वादिति च श्रीकूरनारायणीये ।

### शांकरमते मध्यमोत्तमपुरुषानुपपत्तिः

[1]ये पुनः 'तत्त्वमसि' (छां.उ.6-8-7) 'सोऽहमस्मि' इत्यादिषु कार्यकारणोपाध्याकारविधूननेन निर्विशेषस्वरूपैक्यं वाक्यवेद्यमाहुः, तेषाम् असिवत् अस्मिरपि खण्डकः । श्रोतरि अनुसन्धातरि च युष्मदस्मदी हि परित्यक्ते । न हि असिना कश्चित्प्रतिबोधनीयः, न च कश्चिदस्मिना विशिष्यानुसन्धेयः ।

विधूननीयोपाधिविषयव्युत्पत्तिमच्छब्दसन्निधिमात्रोपजीवनेन कथंचिन्मध्यमोत्तमसम्पत्तिरिति चेत् - ततो वरम् अपरित्यक्तप्रवृत्तिनिमित्तमस्माकं निर्वहणमनुसर्तुम् ।

### यादवप्रकाशमते मध्यमोत्तमपुरुषानुपपत्तिः

[2]सन्मात्रस्यांशिनोऽंशद्वयविशिष्टताप्रतिपादनं यदतामपि सन्मात्रविवक्षाया

---

1.'ये पुनरिति' शांकरयोजनायां मध्यमोत्तमपुरुषानुपपत्तिनिरूपणार्थमिदम् । 'कार्योपाधिरयं जीवः-कारणोपाधिरीश्वरः' इति तन्मतम् । कार्योपाधिरूपान्तःकरणावच्छिन्नचैतन्यं जीवः। कारणोपाधिरूपमूलाविद्यावच्छिन्नचैतन्यमीश्वरः । उभयविधोपाध्यवच्छिन्नचैतन्ययोः भेदकोपाधिनिरासेन ऐक्यबोधनमेव 'तत्त्वमसि' 'सोऽहमस्मि' इति वाक्यद्वयकृत्यमिति तेषां प्रक्रिया । उभयत्र असेः अस्मेश्च सर्वथा त्यागेन मध्यमोत्तमपुरुषप्रयोगासंभवो दुरुद्धरो दोषः। अतस्तन्मतस्य असिरिव (खड्ग इव) असिः (असीति मध्यमपुरुषः) अस्मीति शब्दश्च प्रकृतमन्त्रस्थः खण्डक इति श्लेषकृता वाक्चमत्कृतिः ।। "असिना तत्त्वमसिना-परजीवप्रभेदिना। विद्यारण्यमहारण्य-अक्ष्योभ्यमुनिरच्छिनत् " इति श्रीदेशिककृतिः मुक्तकश्लोकोऽपि प्रसिद्धोऽत्रानुसन्धेयः ।

2.'सन्मात्रस्येति'-यादवप्रकाशमतेऽपिमध्यमोत्तमयोः युष्मदस्मदर्थयोश्चनिर्वाहासम्भवप्रतिपादनार्थमिदम्।अत्रेदं तन्मतम् । सन्मात्रं ब्रह्मैकमेव । तच्च जगतः परिणाम्युपादानम् । तत्परिणामभूते जगति सर्वत्र तद्गतचैतन्यस्याप्यनुवृत्तावपि चेतनाचेतनव्यवहारः चैतन्यस्य उद्भूतत्वानुद्भूतत्वाभ्याम् । एवं चेतनवर्गः ईश्वरश्च तत्कार्यभूतौ तदंशावेव । अंशाना अंशिना अभेदप्रतिपादनमेव तत्त्वमसि-सोहमस्मि - इत्यादिवाक्यकृत्यम् । इति ।

तन्मतनिरासपरं 'सन्मात्रस्य---' इत्यादिदीर्घतमं वाक्यं एवं विभज्य व्याख्यातुमुचितम् । यथा - तत्र - 'त्वमहंभावायोगात्' इत्यन्तं एकं दूषणम्। सन्मात्रस्यैवजीवेश्वररूपांशद्वयविशिष्टतां प्रतिपाद्य अंशांशिनोरैक्यं यदतां यादवप्रकाशार्याणां मते, 'तत् - त्वं स: - अहं' इति पदद्वयविशिष्टवाक्यद्वयेन शांकरयोजनावत् उपलक्षणांशत्यागेन पदद्वयमपि सन्मात्रबोधकमेवेति ऐक्यप्रतिपत्तिरिति चेत्, त्वमहमर्थप्रवृत्तिनिमित्तत्याग एव दोषः । अंशिनि त्वमहंभावायोगात् परित्याग इति भावः । अथ 'त्वता--' इत्यारभ्य 'प्रसंगात्' इत्यन्तं अन्यद्दूषणम्। त्वमर्थभूतसंबोध्येन अहमर्थभूतानुसन्धात्रा च अंशेन विशिष्टं सद्रूपं ब्रह्मेति प्रतिपादनं एतद्वाक्यार्थतया इष्टं चेत् - तदा सन्मात्रोद्देशेन उक्तार्थवैशिष्ट्यविधानात् (युष्मदस्मदर्थयोः अनुद्देश्यत्वात्) प्रथमपुरुषस्यैव प्रयोगप्रसंग इति दोषः । ततः 'दृश्ययोश्चेत्यारभ्य'समन्वयायोगात्' इत्यन्तंअपरंदूषणम्।दृश्ययोरित्यस्यज्ञातयोःइत्यर्थकत्वात्युष्मदस्मदर्थयोः उद्देश्यत्वसूचनम् । 'मृत्पिण्डांशभूते मणिके इव घटशरावाकारयोरिति दृष्टान्तः । तथा च उद्देश्यभूतयुष्मदस्मदर्थयोः सदंशभूतेश्वराभेदोक्तिरिति समन्वयोऽपि न घटते । उभयोरपि अंशत्वाविशेषात् । अंशिना ह्यभेदोऽंशानाम् । न तु परस्परमभेदः । न हि मृदंशभूतेन मणिकेन घटशरावाकारयोः अभेदः - इति भावः। अथ 'त्वमहमर्थयोः' इत्यारभ्य 'शक्यः' इत्यन्तं इतरद्दूषणम् । युष्मदस्मदर्थोद्देशेन न सदंशभूतेश्वराभेदनिरूपणेनोक्तदोषः । किन्तु अंशिभूतसदाकारत्वनिरूपणमेव तत्तद्वाक्यार्थ इति चेत् तदपि न । न हि युष्मदस्मदर्थयोः विषये कस्यचित् अस्तित्वेन अप्रतिपत्तिः । किन्तु नित्यमेव सर्वैरपि ज्ञातेऽर्थे कथमपूर्ववत् विशिष्य विधेयता? कथं विशिष्यानुसन्धेयता च ? अतः न केनापि प्रकारेण यादवप्रकाशमते वाक्यद्वयार्थनिर्वाहसंभवः - इति ।

वाक्ये त्वमहंभावायोगात् ; त्वंता - अहंताविशिष्टं सत् इति विशिष्टविवक्षायामपि प्रथमपुरुषोपनिपातप्रसंगात् दृश्ययोश्च युष्मदस्मदर्थयोर्मृत्पिण्डांशे मणिक इव घटशरावाकारयोः सदंशभूतेश्वराकारेऽपि समन्वयायोगात् ;त्वमहमर्थयोः सत्ताद्याकारस्य नित्यप्रतिपन्नतया विशेषतोऽनिर्देश्यत्वात् अननुसन्धेयत्वाच्च न कथंचिदपि 'तत्त्वमसि'। (छां.उ.6-8-7) 'सोऽहमस्मि' इत्यादेर्निर्वाहश्शक्यः । [1]दृष्टिविधिस्तु मोक्षार्थविद्यासु वेदान्तवादिना नांगीक्रियते ।

यद्यप्यत्र 'त्वं राजासि' 'अहं राजास्मि' इत्यादिवत्तादधीन्याद्युपचारविवक्षया मध्यमोत्तमयोस्सामंजस्यं, तथापि लोकवेदयोश्चेतनपर्यन्तदेवमनुष्यादिव्यवहारन्यायेन जातिगुणशब्दगतिलाभात् तदुपेक्षा ।

[2]नन्वेवं पुरुषाख्यस्वेतरात्मसामानाधिकरण्यक्लेशं परित्यज्य 'योऽसावसौ पुरुषस्सोऽहमस्मि' इति परिशुद्धस्वरूपमात्राऽनुसन्धानपरमिदं वाक्यमस्तु, मैवम्, 'तत्त्वमसि' (छां.उ.6-8-7) 'त्वं वा अहमस्मि' (वरा.उ.2-34) इत्यादिषु तदनुपपत्तेः अत्रापि तत्समानन्यायतया तथैवानुसन्धानस्यौचित्यात् ।

'ब्रह्मात्मकोऽहमस्मि' इति परविद्यांगभूतस्वात्मानुसन्धानपरत्वेऽपि तच्छब्देन तादधीन्यादिकं लक्षणीयं स्यात् ।।

## ईशावास्यप्रकाशिका

पुनरपि तया दृष्ट्या द्रष्टव्यं विशिंषन् दर्शनं तत्साधनं चाभ्यर्थयते - पूषन् इति।

---

1. दृष्टिविधिरिति 'मनो ब्रह्मेत्युपासीत' 'नाम ब्रह्मेत्युपास्ते' इत्यादिवाक्यैः मन आदीनां ब्रह्मदृष्ट्या उपासनं विहितम्। प्रतीकोपासनमिति च तस्यैव नामधेयम्। तन्न्यायेन स्वात्मनि ब्रह्मदृष्ट्या सोहमिति उपासनमिदं किं न स्यात्? इति न शक्यम् । 'अप्रतीकालंबनान्नयति--' 'विशेषं च दर्शयति' इत्यादिसूत्रेषु प्रतीकोपासननिष्ठानां पूर्णब्रह्मानुपासकत्वात् अर्चिरादिगति-परमपदप्राप्त्यादिविरहस्य व्यासेन प्रतिपादितत्वात् मुमुक्षूणां तादृशदृष्ट्युपासनासिद्धेः । इति भावः ।
2. 'नन्वेवं पुरुषाख्येति' - अत्रेदं बोध्यम् । मन्त्रे पुरुषशब्देन स्वेतरं (उपासकादभिन्नं) कंचित् परमपुरुषं आदित्यमण्डलवर्तिनं गृहीत्वा, तेन स्वस्य सामानाधिकरण्यनिर्वाहाय शरीरशरीरिभावादिक्लेशस्वीकारापेक्षया, मुक्तिदशाभाविपरिशुद्धस्वस्वरूपमेव पुरुषशब्दनिर्दिष्टमिति कृत्वा तादृशपरिशुद्धस्वरूपवानहमिति सामानाधिकरण्यं निर्बाधं कुतो नेष्यते? न चैवं सति उत्तमपुरुषादिसमर्थनप्रयासोऽपि । अत्रोत्तरम् - मैवम् इत्यादि । प्रकृतवाक्ये पुरुषशब्दस्य तथा शुद्धात्मपरतया निर्वहणेऽपि, 'तत्त्वमसि'- 'त्वं वा अहमस्मि' इत्यादिषु स्पष्टं तत् त्वं इत्यादिशब्दैः पुरुषान्तरं जगत्कारणभूतं निर्दिश्यैव सामानाधिकरण्यस्य जीवे साधनीयत्वात्, तत्र परिशुद्धात्मपरत्यासंभवात्, प्रकृतेऽपि तत्तुल्यतया दृष्टे वाक्ये तथैव निर्वहणौचित्यात् । इति भावः ।

**पूषन्** - आश्रितपोषक। एकश्चासावृषिश्च **एकर्षिः** - अद्वितीयोऽतीन्द्रियार्थ-दृष्टा। 'नान्योऽतोऽस्ति दृष्टा' (बृ.उ.5-7-23) इति श्रुतेः। **यम** - यमयति सर्वान् इति यमः, सर्वान्तर्यामिन्। 'यः पृथिवीमन्तरो यमयति - - - - - - य आत्मानमन्तरो यमयति' (शत.ब्रा.14-5-7, 30) इत्यादिश्रुतेः। **सूर्य** - स्वभक्तबुद्धीनां सुष्ठु प्रेरक। **प्राजापत्य** - प्रजापतिः चतुर्मुखः, तस्य सुताः प्राजापत्याः, तेषामन्तर्यामिन्। यद्वा - प्रजापतिरेव प्राजापत्यः, वैश्वानर इतिवत्, विश्वानर एव हि वैश्वानरः ; तथा च प्रजानां पतिरिति व्युत्पत्त्या प्रजापतिः विष्णुः 'प्रजापतिश्चरति गर्भे अन्तः' (तै.ना.1-1) इति श्रुतेः। **व्यूह रश्मीन्** - भवदीयदिव्यरूपदर्शनानुपयुक्तान् स्वोग्ररश्मीन्, **व्यूह** - व्यपोह विगमयेत्यर्थः। यत्तु दर्शनौपयिकं प्रभात्मकं सौम्यं तेजः - तत् **समूह** - समूहीकुरु। तत्किमर्थमित्याशंक्य अर्जुनादिवद्द्रष्टुमिच्छामि ते रूपमित्याह - यत् इति। 'आदित्यवर्णं तमसः परस्तात्' (पु.सू) इत्यादिषु प्रसिद्धमित्यर्थः। **ते** - 'आनन्दो ब्रह्म' (तै.भृ.2-1) इति निरतिशयभोग्यस्य तव अतिकल्याणतमं सौन्दर्यादि-गुणातिशयेन प्रियतमं सर्वेभ्यः कल्याणगुणेभ्योऽतिशयितं कल्याणं च शुभाश्रयभूतमित्यर्थः। **ते** - यद्दिव्यं रूपं तत् **पश्यामि** - पश्येयमिति लिङर्थो ग्राह्यः। लकारव्यत्ययश्छान्दसः। द्रष्टुमिच्छामि इति भावः।

### भगवद्विग्रहस्य दिव्यत्वम्

'अकायमव्रणम्'(ई.उ.8) 'अशरीरं शरीरेषु' (क.उ.2-22) 'अपाणिपादो जवनो ग्रहीता' (श्वे.उ.3-19) इत्यादि सामान्यवचनानि, 'अजायमानः' (पु.सू) 'अजोऽपि सन्नव्ययात्मा' (भ.गी.4-6) 'न चास्य प्राकृता मूर्तिः' (वरा.पु.75-42) इत्यादि विशेषवचनसिद्धहेयशरीरप्रतिषेधपराणि।

ननु 'यत्ते रूपं कल्याणतमं' 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' (छा.उ.1-6-6) 'ईशावास्यमिदं सर्वम्' (ई.उ.1) 'पतिं विश्वस्यात्मेश्वरम्' (तै.ना. ) 'सर्वकर्मा सर्वगन्धः' (छा.उ.3-14-2) 'स्वाभाविकी ज्ञानबलक्रिया च' (श्वे.उ.6-8) 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति' (छा.उ.8-3-4) 'तस्योदिति नाम' (छा.उ.1-6-7) इत्यादिभिः शास्त्रैर्गुणविग्रहादयो ब्रह्मणोऽपि विधीयन्ते ; 'निगुर्णम्' (आत्मोपनिषत्) 'निरंजनम्' (श्वे.उ.6-19) 'अविकाराय' (वि.पु.1-2-1) 'अकायमव्रणम्' (ई.उ.8) 'नेह नानास्ति किंचन' (क.उ.4-11) 'निष्कलं निष्क्रियम्' (श्वे.उ.6-19) 'अगोत्रमवर्णम्' (मु.उ.1-1-6) अगोत्रमिति - अनामकमित्यर्थः। एवमादिभिश्शास्त्रैः गुणादयः

प्रतिषिध्यन्ते । तथा च विधिप्रतिषेधयोः विरोधादन्यतरबाधोऽवश्यंभावी, तत्र निषेधस्य प्रसक्तिपूर्वकतया पश्चात्प्रवृत्तं प्रतिषेधशास्त्रम[1]पच्छेदाधिकरणन्यायेन प्रबलम् । अतः प्रतिषेधबलेन गुणादिविधयः सर्वे बाधिताः । ततश्च अविद्याख्यदोषपरिकल्पिता गुणविग्रहादयो मिथ्याभूता इति ।

तदिदमनादरणीयम् [2]पशुच्छागनयेन, [3]उत्सर्गापवादनयेन च विधिनिषेधयोः

---

1. **अपच्छेदेति** - उपनिषत्स्वपि परस्परविरोधे प्राप्ते सगुणवाक्यापेक्षया निर्गुणवाक्यानां प्राबल्यं निरूपयद्भिः अद्वैतिभिः पूर्वमीमांसागतोऽयमपच्छेदाधिकरणन्यायः निदर्शितः ।

अत्रेदं तदधिकरणस्वरूपम् । ज्योतिष्टोमे बहिष्पवमानस्तोत्राय प्रसर्पतां ऋत्विजां अन्वारम्भणमुक्तम् । अन्वारम्भणं नाम-स्पर्शः । स च पुरःप्रसर्पतः पश्चात्तनेन कच्छग्रहणरूपः । प्रमादात् तद्विच्छेद एव अपच्छेदः । सति तस्मिन् प्रायश्चित्तान्युक्तानि यथा 'यदि प्रस्तोता अपच्छिन्द्यात्, ब्रह्मणे वरं दद्यात् । यदि प्रतिहर्ता सर्ववेदसं दद्यात् यद्युद्गाता, अदक्षिणं तं यज्ञं इष्ट्वा तेन पुनर्यजेत - तत्र तत् दद्यात् यत् पूर्वस्मिन् दास्यन् स्यात्' । इति अपच्छेदकर्तृभेदेन प्रायश्चित्तभेदोक्तिः । एतदुपरिविचारः जैमिनीये (6) अध्याये (5) पादे (5) अधिकरणे कृतः । तत्र एकैकापच्छेदे प्रायश्चित्ताचरणार्थं न विवादः । तथा अपच्छेदयोः यौगपद्ये तु प्रायश्चित्तद्वयं, विकल्पो वा, इति यथासंभवमनुष्ठेयमिति पूर्वाधिकरणेपूक्तम् ।

क्रमेणापच्छेदे एव प्रकृतो विचारः । तत्र असंजातविरोधित्वात् उपक्रमाधिकरणन्यायेन पूर्वस्यैव प्राबल्यमिति पूर्वपक्षे - प्राप्ते - 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' इति सूत्रेण परस्यैव प्राबल्यमिति निर्णीतम् । यत्र परस्य अर्थग्रहणादौ पूर्वसापेक्षता, तत्रैव उपक्रमाधिकरणन्यायप्रसरः । न चात्र तथा । द्वितीयप्रायश्चित्तविषयकशास्त्रस्य पूर्वानपेक्षत्वात् । प्रत्युत - 'पूर्वविरुद्धतयैव उत्पन्नस्य परस्य स्थानेपि पूर्वस्यैव प्रवेशे, तस्य निरवकाशत्वप्राप्त्या तेनैव पूर्वबाधः एष्टव्यः । एवं निरवकाशत्वात् प्राबल्यम् - इति निर्णयेन परापच्छेदप्रायश्चित्तस्यैव प्रवृत्तिरिति सिद्धान्तः । एतन्न्यायेन निरवकाशत्वादेव निर्गुणवाक्यानि पराणि प्रबलानीति अद्वैतिनां मतम् ।

2. **पशुच्छागनयेति** - अस्ति 'अग्नीषोमीयं पशुमालभेत' इति विधिः । तत्र यागद्रव्यभूतः पशुः क इति विचारः । 'गामानय बलीवर्दं' इति वाक्ये इव उक्तविधिवाक्ये विशेषाश्रवणात् यः कोऽपि पशुरिति अनियम एवेति पूर्वपक्षः । तत्र 'छागो वा मन्त्रवर्णात्' इति षष्ठाध्यायान्तिमाधिकरणसूत्रेण जैमिनीयेन छागपशुरेव यागद्रव्यमिति सिद्धान्तितम् । 'छागस्य वपायाः' इत्यादिवाक्यान्तरे एतद्यागप्रकरणगते छागरूपविशेषणपदश्रवणात् पशुपदस्य सामान्यवाचिनः छागरूपविशेषे पर्यवसानमेव । विशेषस्य भिन्नवाक्यगतत्वेऽपि तत्पर्यवसानं युक्तमेव सामान्यशब्दस्य । अयमेव छागपशुन्यायः सामान्यविशेषन्याय इति चोच्यते । अनेनैव न्यायेन सगुणनिर्गुणश्रुतिविरोधः परिहार्यः, नापच्छेदन्यायेन । तथा हि - 'साक्षी चेता केवलो निर्गुणश्च' इत्यादीनि, 'अकायमव्रणं' इत्यादीनि च ब्रह्मणि सामान्येन गुणानां शरीरस्य च अभावं बोधयन्ति । तथा 'अपहतपाप्मा विजरो विमृत्युः विशोकः' इत्यादीनि विशिष्य हेयगुणाभावं, 'न तस्य प्राकृता मूर्तिः मांसमेदोऽस्थिसम्भवा' इत्यादीनि विशिष्य प्राकृतशरीराभावं च बोधयन्ति । अतश्च उक्तच्छागपशुन्यायेन 'निर्गुणं' 'अकायं' इत्यादिसामान्यनिषेधानां उक्तहेयगुणविशेषनिषेधे प्राकृतशरीरविशेषनिषेधे च पर्यवसानमिति स्वीकरणात् सगुणसशरीरवाक्यान्तरैः निर्गुण-अशरीरश्रुतीनां विषयभेदादेव न विरोधः इति न बाध्यबाधकभाव इति परिहारसारांशः ।

3. **उत्सर्गापवादनयेति** सामान्यवाचिनो वाक्यस्य क्वचित्तदपवादविशेषदर्शने विरोधपरिहाराय तदतिरिक्तविषयकत्वेन व्यवस्थापनं एतन्न्यायार्थः । यथा - 'न हिंस्यात् सर्वा भूतानि' इति सामान्येन हिंसानिषेधः । 'अग्नीषोमीयं पशुमालभेत' इति यागविशेषे पशुहिंसाविधिः तदपवादः । एवमनयोः विरोधे वैधहिंसाव्यतिरिक्तहिंसाविषये सामान्यनिषेधपर्यवसानमिति निर्णयः । एतन्न्यायानुसारेण सर्वज्ञत्वादि-कल्याणगुणविशेषविधिवाक्यदृष्ट्या निर्गुणेत्यादिगुणसामान्यनिषेधस्य तदतिरिक्तहेयगुणराहित्यपरतया पर्यवसानस्वीकारात् विरोधपरिहारः इति, अन्यतरस्याप्यबाधेन वाक्यद्वयप्रामाण्यं रक्षितं भवति ।

भिन्नविषयत्वोपपादनेन तयोर्विरोधगन्धाभावात्। विधीनां प्रतिषेधबाध्यत्वानुपपत्तेः। तदुक्तं वरदाचार्यैस्तत्त्वसारे -

[1]'यद्ब्रह्मणो गुणविकारशरीरभेदकर्मादिगोचरविधिप्रतिषेधवाचः।
अन्योन्यभिन्नविषया न विरोधगन्धमर्हन्ति तन्न विधयः प्रतिषेधबाध्याः'।। (त.सा.69)
इति।

अथ अन्तर्यामिणम् अहंग्रहेणानुसन्धत्ते - योऽसावसौ पुरुषस्सोऽहमस्मि इति। असावसाविति वीप्सा आदरार्था। यद्वा - अदश्शब्दौ विभज्य यत्तच्छब्दाभ्याम् अन्वेतव्यौ। कथमिति चेत् - इत्थं - योऽसौ पुरुषः, अहं सोऽसावस्मीति।

**पुरुषशब्दस्य परमात्मार्थकत्वस्थापनम्**

यद्यपि पुरुषशब्दः 'प्रकृतिं पुरुषं चैव विध्यनादी उभावपि' (भ.गी.13-19) 'योगो योगविदां नेता प्रधानपुरुषेश्वरः' (वि.स.3) इत्यादिषु जीववाचितया प्रसिद्धः; तथापि 'तेनेदं पूर्णं पुरुषेण सर्वम्' (श्वे.उ.39, मु.उ.1-1-7) 'पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वम्' (तै.आर.1-23) 'महान् प्रभुर्वै पुरुषस्सत्त्वस्यैष प्रवर्तकः' (श्वे.उ.3-12) इत्यादिश्रुत्या पूर्णत्वपूर्वसत्त्वादिगुणकसर्ववेदपठितपुरुषसूक्तादिप्रसिद्धो महापुरुष एव इह पुरुषशब्देन विवक्षितः।

---

1. 'यदब्रह्मणः' इति। ब्रह्मणः सगुणत्वं सविकारता सशरीरत्वं विविधभेदवैशिष्ट्यं सृष्ट्यादिकर्मयत्ता च कानिचित् श्रुतिवाक्यानि ब्रुवन्ति। कानिचित् तु स्पष्टमेव तदभावम्। एवं तेषां परस्परविरोधे निर्गुणादिश्रुतीनां निरवकाशत्वात् परत्वाच्च प्राबल्याम्, सगुणादिश्रुतीनां तु अविद्याकृतगुणादिवैशिष्ट्यबोधकत्वेन सावकाशत्वमिति दौर्बल्यं च, इति निषेधश्रुतीनां बाधकत्वं सगुणत्वादिविधिश्रुतीनां बाध्यत्वं च अद्वैतिनां मतम्। एवं तैः निषेधश्रुतीनां प्रामाण्यरक्षणेन गुणादिविधिश्रुतिषु प्रामाण्यतिरस्करणं न स्थाने।

नित्यनिर्दोषतया प्रतिपन्नस्य श्रुतिभागस्य सर्वस्यापि समप्रामाण्यात्। अन्यतरस्य तथात्वे इतरस्य अतथात्वे च विनिगमनाविरहात्। कथमन्यथा स्पष्टदृष्टविरोधपरिहारः? इति चेत् - विधिनिषेधयोः विषयभेदप्रदर्शनेन विरोधः एव नेति बाध्यबाधकभावकथापि नात्र प्रसरति। अस्तिनास्तिवचनयोः एकविषयकत्वे हि विरोधः। एवं उभयविधवाक्यप्रामाण्यरक्षणं सिद्धम्। तत्र विषयभेदश्चैवम् - यथा - सगुणश्रुतयः कल्याणगुणवैशिष्ट्यपराः। निर्गुणश्रुतयः हेयगुणराहित्यपराः। सविकारश्रुतयः स्वविशेषणीभूतचिदचिद्द्वारा विकाराश्रयत्वपराः। निर्विकारश्रुतयः ज्ञानानन्दमये ब्रह्मणः स्वरूपे साक्षाद्विकाराभावबोधनपराः। सशरीरश्रुतयः अकर्मकृताप्राकृत-दिव्यशरीरवैशिष्ट्यपराः। अशरीरश्रुतयः कर्मकृतभौतिकशरीरराहित्यपराः। भेदश्रुतयः चिदचिदीश्वराणां ईशेशितव्यभाव-व्याप्यव्यापकभावादिभेदस्वरूपनिरूपणपराः। अभेदश्रुतयः पूर्वोक्तविधया सर्वस्वस्य ब्रह्मव्याप्यत्वेन कार्यत्वेन च सिद्धेः विशिष्टैक्यपराः। अत एव भेदनिषेधश्रुतयः अतथाविधवस्त्वभावपराः। कर्मवत्ताश्रुतयः अवतारादिवत् परार्थकर्मवैशिष्ट्यपराः। निष्कर्मताश्रुतयः स्वार्थकर्मराहित्यपराः। एवं ईदृशविषयभेदव्यवस्था श्रुत्यैव दर्शितेति न विरोधलेशावकाश इति - अत्र बाध्यबाधकभावप्रसंजनं न स्थाने इति यदब्रह्मणः' इत्यादि श्लोकस्य अभिप्रायः।

### जीवब्रह्मणोस्सामानाधिकरण्यम्

ननु 'योऽसौ पुरुषस्सोऽसावहमस्मि' (म.स्मृ.1-7) इति कथं सामानाधिकरण्यम्, अहंपदार्थस्य जीवात्मनः परमपुरुषाद्भिन्नत्वात् इति चेत् न - अहंशब्देनापि अस्मदर्थान्तर्यामिण एवाभिधानेन अहं स इति निर्देशस्य सुसंगतत्वात् । ननु च अहंशब्दस्य प्रत्यगर्थान्तर्यामिपरत्वे सोऽस्मीत्युत्तमपुरुषो न घटते, नहि मदन्तर्यामी परमपुरुषोऽस्मीति अन्वयो युज्यते - इति चेत् उच्यते । मदन्तर्यामीत्यादिशब्दान्तरेणोपस्थापिते प्रत्यगर्थान्तर्यामिणि उत्तमपुरुषान्वयासम्भवेऽपि अहमित्यस्मत्पदोपस्थापिते तस्मिन्नुत्तमपुरुषान्वयो युज्यत एव । तथा हि पाणिनिसूत्रम् 'अस्मद्युत्तमः' (पा.सू.1-4-107) इति । प्रत्यगर्थबोधकास्मच्छब्दोपपदे उत्तमपुरुषो भवतीत्यर्थः । न पुनरस्म-च्छब्दस्यप्रत्यगर्थद्वारापरमात्मपर्यन्ततायामुत्तमनिवृत्तिरिति,'अधिकंतुप्रविष्टं न तु तद्धानिकरम्' इति न्यायात् ।

एवं 'तत्त्वमसि' (छां.उ.6-8-7) इत्यादिष्वपि असीति मध्यमपुरुषो निर्वाह्यः ; त्वंपदेनाभिमुखचेतनद्वारैव तदन्तर्यामिणोऽभिधानाभ्युपगमात् । तत्रापि 'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' (पा.सू.1-4-105) इत्येतावदेव हि स्मर्यते । न तु युष्मच्छब्दस्य स्वाभिमुखचेतनद्वारा तदन्तर्यामिपर्यन्तत्वे मध्यमनिवृत्तिरपि ।

### अद्वैतिना मते मध्यमोत्तमपुरुषानुपपत्तिः

ये तु 'तत्त्वमसि' (छां.उ.6-8-7) 'सोऽहमस्मि' (छां.उ.4-11-1) इत्यादावहंत्वमादिशब्दे युष्मदस्मदर्थपरित्यागेन निर्विशेषचिन्मात्रस्वरूपैक्यमेव वाक्यवेद्यमाहुः, तानेव 'तत्त्वमसि' (छां.उ.6-8-7) इत्यादिवाक्येषु असिरिव 'सोऽहमस्मि' इति वाक्यस्थास्मिरपि खण्डयति । श्रोतर्यनुसन्धातरि च युष्मदस्मदी हि तैः परित्यक्ते । नहि तेषामसिना कश्चित्प्रतिबोधनीयोऽस्ति, न च कश्चिदस्मिना विशिष्यानुसन्धेयः ।

ननु प्रकृते युष्मदस्मदर्थयोः अविवक्षायामपि तयोः व्युत्पन्नयुष्मदस्मच्छब्दोपपदमात्रोपजीवनेन अस्मत्पक्षेऽपि क्वचिन्मध्यमोत्तमयोरुपपत्तिरिति चेन्न, ततोऽप्यपरित्यक्तप्रवृत्तिनिमित्तकस्य अस्माकं निर्वहणस्यैवानुसर्तुमुचितत्वात् ।

### पक्षान्तरे मध्यमोत्तमपुरुषोपपत्तिः

अपरेत्वाहुः 'योऽसावसौ पुरुषस्सोऽहमस्मि' इत्यत्र पुरुषशब्देन परमपुरुषो न विवक्षणीयः, तथा सति अस्मीत्युत्तमस्य 'पुरुषः' [1]इत्याख्यायाः 'सोऽहम्' इति च सामानाधिकरण्यस्य क्लेशेन निर्वाह्यत्वात् । ततो वरमत्र पुरुषशब्दस्य परिशुद्धजीवात्मपरत्वम् आश्रयितुम् । एवं च सति यः पुरुषो मुक्तदशाभाव्याकारः परिशुद्धजीवात्मा सोऽहमस्मीत्यन्वयात् उत्तमस्य 'पुरुषः' इत्याख्यायाः सामानाधिकरण्यस्य च अतिस्वरसो निर्वाह इति।

नायं पक्षस्साधुः - तथा भवत्वेवमिह निर्वहणं, तथापि 'तत्त्वमसि' (छा.उ.6-8-7) इत्यत्र तत्पदस्य 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' (वरा.उ.2-34) इत्यादिषु त्वंपदस्य च परदेवतावाचकत्वेन त्वदुक्तनिर्वाहस्य तत्राभावात् अकामेनापि तत्र अस्मदुक्तनिर्वाहस्य समाश्रयणे तत्समानन्यायतया अत्रापि तस्यैव अनुसर्तुम् उचितत्वात् इति ।

### मध्यमोत्तमपुरुषव्यवस्थासमर्थनम्

स्यादेतत् । 'त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि' (वरा.उ. 2-34) इत्यत्र कथं पुरुषव्यवस्था? त्वमहं पदयोरुभयोरपि श्रवणात् ।

उद्देश्यविषयकमेव युष्मदादिपदम् उपपदत्वेन पाणिनिसूत्राभिमतम्, तथा च उद्देश्यसमर्पकोपपदवशादेव अत्र मध्यमोत्तमयोर्व्यवस्था सिद्ध्यतीति चेत् अस्त्येवमिह समाधानं ; तथापि 'तत्त्वमसि' (छा.उ.6-8-7) इत्यत्र पुरुषव्यवस्था न घटते, तत्र त्वंपदयोगवत् तत्पदयोगस्यापि सत्त्वात् । तथा च असीतिवत् अस्तीति प्रथमपुरुषस्यापि प्रसंगः, न ह्यत्रापि त्वंपदम् उद्देश्यसमर्पकं, येन त्वंपदमेव पुरुषनिमित्तं न तत्पदमपीति व्यवस्था स्यात् ।

तथा च तत्त्वमसिनिरूपणावसरे भाष्यं 'नात्र किंचिदुद्दिश्य किमपि विधीयते' (श्री.भा. 1-1-1) इति । तस्मात् 'तत्त्वमसि' (छा.उ.6-8-7) इतिवत् तत्त्वमस्तीति प्रयोगोऽपि दुर्निवार इति ।

---

1. अत्रेदं पूर्वपक्षवाक्यं सन्दिग्धार्थकम् ।

अत्रोच्यते - 'तत्त्वमसि' (छां.उ.6-8-7) इत्यत्रापि त्वंपदार्थ उद्देश्य एव। ततश्च उद्देश्यविषयकयुष्मत्पदवशात् तत्र मध्यम एवेति न प्रथमपुरुषप्रसंगः।

नन्वेवं भाष्यविरोध इति चेन्न - भाष्यस्य विधेयांशमात्रनिषेधपरतया उद्देश्यांशनिषेधकत्वाभावात्। तथा हि न ह्येवं भाष्याभिप्रायः, नात्र किंचिदुद्दिश्यते, न च किंचिद्विधीयते इत्यपि।

तर्ह्येवं भाष्याभिप्राये त्वंपदेन किंचिदुद्दिश्यत एव, किन्तूद्दिष्टेन किंचिद्विधीयत इति कथमिदमवगम्यत इति चेन्न, प्राप्तस्यैव उपसंहारकत्वोपपादकभाष्येणैव विधेयांश एव निषिध्यते इत्यभिप्रायस्य व्यक्तत्वात्।

### उपचारपक्षनिराकरणम्

अन्योऽप्याह - 'त्वं राजासि' 'अहं राजास्मि' इत्यादिवत् तादधीन्याद्युपचारविवक्षया 'तत्त्वमसि' 'सोऽहमस्मि' (छां.उ.4-11-1) इत्यादिषु मध्यमोत्तमसामानाधिकरण्यानां सामंजस्यमिति, तदप्युपेक्षणीयमेव। लोकवेदयोश्चेतनपर्यन्तदेवमनुष्यादि-व्यवहारबलेन जातिगुणशब्दवत् मुख्यवृत्त्यैव निर्वाहसम्भवे उपचारकल्पनस्य अन्याय्यत्वात् इत्यलं विस्तरेण॥

## श्रीरंगाचार्यभाष्यम्

'पूषन्' इत्यादिरयम्मन्त्रो माध्यन्दिनपाठे नास्ति; काण्वैस्तु षोडशमन्त्रतया पठ्यते। परन्तु एतन्मन्त्रोत्तरार्धांश एव किंचित् अन्यथारूपः - 'हिरण्मयेन' इत्यादिपूर्वमन्त्रोत्तरभागतया माध्यन्दिनैः पठ्यते। अयं मन्त्रः उपास्य-परमपुरुषोद्देश्यकतदीयाप्राकृतदिव्यमंगलविग्रहप्रदर्शनप्रार्थनापरः।

अस्य मन्त्रस्य प्रतिपदविवरणम् - प्राजापत्य - प्रजापतेः कश्यपात् आदित्यां सम्भूतापत्यरूप, सूर्य - सुष्ठु ईरयति प्रेरयतीति सूर्यः, लोकबुद्धिप्रेरकः, तस्य सम्बोधन, पूषन् - [1]लोकपोषकरव्याख्य देवताविशेषशरीरक, एकर्षे-अद्वितीयातीन्द्रिय-सर्वार्थ-यथावस्थित-साक्षात्कारकारिन्, 'यस्सर्वज्ञस्सर्ववित्' (मु.उ.2-2-7) इत्युक्तगुणविशिष्टेति यावत्। हे यम - सर्वनियन्तृभूतपरमात्मन्।

---

1. लोकपोषकेति। लोकपोषको यो रविः - इत्याख्यया युक्तो देवताविशेषः, तच्छरीरक! इति सम्बोधनम्।

अत्र प्राजापत्य - सूर्य - पूषशब्दैः यमशब्दार्थसर्वनियन्तृभूतपरमात्मनो विशेषणम् अस्या विद्याया आदित्यमण्डलान्तर्वर्तिपरमपुरुषविषयत्वेन अन्तरादित्य-विद्यारूपत्वज्ञापनार्थं । सूर्यविशेषणयोः लोकप्रेरकत्वपोषकत्वयोर्धर्मयोः तद्विद्यायाम् उपास्य तदन्तरात्मभूतपरमात्मगुणतयाऽनुसन्धानसिद्ध्यर्थं च, शरीरवाचकानां शब्दानां शरीरिणि अपर्यवसानवृत्तिमूलेन अत्रत्यसामानाधिकरण्यनिर्देशेन सूर्याख्यदेवताविशेषस्य परमात्मशरीरताया बोध्यमानत्वात्, परमात्मनाऽन्तःप्रविश्य नियम्यमानस्यैव परमात्मशरीरत्वेन शरीरगतक्रियामुख्यकारणत्वस्य आत्मगुणत्ववत् परमात्मना सर्वात्मना नियम्यमानतच्छरीरभूतदेवताविशेषगतलोकप्रेरणपोषणमुख्य-कारणत्वस्यापि 'य आदित्यमन्तरो यमयति' (बृ.उ.5-7-9)

'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ।।' (भ.गी.18-61)

इत्यादिश्रुतिस्मृतिबलात् परमात्मगुणत्वसिद्धेश्च दर्शितसामानाधिकरण्यनिर्देशेन अस्यां विद्यायां लोकप्रेरणपोषणक्रियामुख्यकारणत्वस्यापि शब्दव्युत्पत्तिबलात् धर्मिपारतन्त्र्येण परमात्मनि भानसम्भवात् ।

यमसंज्ञा च दर्शितप्रेरणपोषणक्रियाकारणत्वलक्षणनियन्तृत्वरूपप्रवृत्तिनिमित्त-बलात् रविमण्डलान्तर्वर्तिभगवतः

'यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः ।
तेन चेदविवादस्ते मा गंगां मा कुरून् गमः ।।' (म.स्मृ.8-82)

इति स्मृतिवचनेनापि सिद्धा । अत्र हि वैवस्वतशब्दः विवस्वति भव इति व्युत्पत्त्या सूर्यमण्डलवर्तिभगवत्पर एव, न तु दक्षिणदिक्पतिपरः, 'यस्तवैष हृदि स्थितः' इत्युक्तस्य भगवदसाधारणधर्मस्य सर्वभूतहृद्देशवर्तित्वस्य तत्रासम्भवात् ।

रश्मीन् - त्वदधिष्ठानभूतसूर्यमण्डलसम्बन्धिन उग्रकिरणान् समन्ततः प्रसृतान्, व्यूह - क्वचिदेकदेशे पुंजीकुरु, तेजः - त्वदीयरूपसम्बन्धि प्रभामण्डलं च समन्ततः प्रसृतं, समूह - क्वचिदेकदेशे पुंजीकुरु 'ऊह वितर्के' (पा.धा.648) इत्यस्य धातोरात्मनेपदिनः पुंजीकरणार्थकत्वं परस्मैपदं च उपसर्गवशाद् भवति । उपसर्गवशात्

प्रहाराहारादिशब्देषु हरणार्थकस्य धातोरिव इहापि अर्थान्तरमुपपद्यते । अस्य धातोरात्मनेपदस्य - 'उपसर्गादस्यत्यूह्योर्वेति वाच्यम्' (वा.920) इति वार्तिकेन उपसर्गपूर्वकत्वदशायां वैकल्पिकत्वविधानादिह परस्मैपदम् ।

अप्राकृतदिव्यविग्रहस्य श्रुतिप्रतिपाद्यत्वम्

रविमण्डलरश्मीनां रूपप्रभामण्डलस्य च क्वचित्पुंजीकरणं किमर्थमित्यत्राह - यत्ते इत्यादिना । यत्, कल्याणतमं - सर्वेषु कल्याणेषु उत्तमं कल्याणं, स्वेतरसर्वातिशायिमांगल्यपरमशुभाश्रयभूतम्, ते - तव, रूपम् - अप्राकृतदिव्यविग्रहः, अस्ति, यदिति - 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसस्तु पारे' (पु.सू.) 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् (मु.उ.3-1-3) 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्मयश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः । तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्यः उदितः । 'उदेति हवै सर्वेभ्यः पाप्मभ्यो य एवं वेद' (छां.उ.1-6-6,7) 'तस्य हैतस्य पुरुषस्य रूपं यथा माहारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथाग्न्यर्चिर्यथा पुण्डरीकम् । यथा सकृद्विद्युत्तं सकृद्विद्युत्तेव हवा अस्य श्रीर्भवति य एवं वेद' (बृ.उ.4-3-6) इत्यादिश्रुत्त्यन्तरप्रसिद्धिरुच्यते ।

ते, तत् रूपम्, पश्यामि - द्रष्टुमिच्छामि, त्वदधिष्ठानादित्यरश्मिमण्डलस्योग्रस्य अस्मददृष्टिप्रसरणप्रतिबन्धकत्वात् त्वद्रूपस्य समन्ततः प्रसृतेन प्रभामण्डलेन दुर्दर्शत्वाच्च तदुभयमुपसंहरसि चेत् त्वद्रूपं साक्षात्कर्तुं कांक्षामि, तथा कुर्विति प्रार्थनं क्रियते ।

'आशंसायां भूतवच्च' (पा.सू.3-3-132) इत्यनुशासने चकारेणाशंसायां भविष्यत्यपि वर्तमानवद्भावविधानात् अत्र पश्यामीति लट्प्रयोगः ।

मद्रूपदर्शने तवाधिकार एव कथम् -

'नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ।।
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ।।' (भ.गी.11-53,54)

इत्यादिभिर्मय्यनन्यभक्तिमत एव हि मद्रूपदर्शनेऽधिकारस्सिद्धः । मय्यनन्यभक्तिश्च सर्वात्मनां मन्नियाम्यत्वरूपमदधीनभावपर्यवसन्नमद्दास्यैकरूपा ।

तद्रहितस्य कथं तवाधिकार इत्यत्राह योऽसौ इत्यादिना । असावसौ-अत्यन्तमद्विप्रकृष्टादित्यमण्डलान्तर्वर्ती, पुरुषः - 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' (छां.उ.1-6-6) इत्याद्युक्तलक्षणः, यः- त्वमसि, अहं, सः- तादृशपुरुष-रूपस्त्वमेव, अस्मि, त्वदात्मक एवास्मीत्यर्थः ।

### सामानाधिकरण्यनिर्देशफलम्

अत्र जीवपरयोः शरीरशरीरिभावमूलेन सामानाधिकरण्यनिर्देशेन शरीरशरीरिभावप्रतीत्या स्वस्य परमात्मशरीरभावज्ञापनमुखेन सर्वात्मना तन्नियाम्यत्वरूपतदधीनत्वप्रदर्शनेन तादृशभगवद्रूपदर्शनाधिकार एव ज्ञापितो भवति ।

यद्यपि - 'यस्य सर्वाणि भूतानि शरीरम्' (बृ.उ.5-7-19) इत्यादिभिः सर्वेषामेव चिदचिद्वस्तूनां परमात्मशरीरत्वं तुल्यम् तथापि तादृशवस्तुस्वरूपस्थितेः सर्वसाधारण्येऽपि तदभ्युपगमपूर्वकतदनुगुणवर्तनं हि न सर्वसाधारणम् । तादृशवर्तनमेव च अत्र अस्मि इत्यनेन विवक्षितम् । तदेव च तद्दर्शनाधिकारप्रयोजकम् इतरव्यावृत्तम् इह दर्शितम् - ईदृशमेव च वर्तनम् अविवादशब्देन मनुनापि दर्शितं

'यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः ।
तेन चेदविवादस्ते मा गंगां मा कुरून् गमः ।।' (म.स्मृ.8-92)

इत्यत्र । तादृशमेव च वर्तनं भक्त्यादिलक्षणपरविद्यापरमकाष्ठापीत्यत एव भगवद्रूपदर्शने स्वस्य अधिकारो दर्शितो भवतीति भावः इति ।

### शंकरव्याख्या प्रतिक्षेपः

एतेन 'तव प्रसादात्तव रूपं पश्यामि ; किंच - अहं न त्वां भृत्यवद्याचे ; योऽसावादित्यमण्डलस्थो व्याहृत्यवयवः पुरुषः, स एवाहमस्मि' इत्युपासकस्य स्वस्मिन् सूर्यादिशब्दाभिलपनीयपुरुषस्वरूपैक्यानुसन्धानपरं शंकरकृतं व्याख्यानम् असमंजसमेवेति सिद्धम् - 'तव प्रसादात्त्वद्रूपं पश्यामि इत्यनुसन्दधतः उपासकस्य स्वस्मिन् उपास्यस्वरूपैक्यानुसन्धानायोगात्, प्रसादस्य सेव्यसेवकभावलक्षण-भेदसापेक्षत्वात्, परविद्याप्रकरणे सूर्यशब्दाभिलपनीयदेवताविशेषरूपदर्शनयाचनस्य तदर्थम् अनपेक्षिततदैक्यानुसन्धानस्य च अप्रसक्तत्वात् अनुपयुक्तत्वाच्च ।

परमात्मनो देवतान्तरव्यावृत्ताकारकत्वम्

किंच - 'यत्ते कल्याणतमं रूपं - तत्ते पश्यामि' इति प्रसिद्धवदभिधीयमानस्य कल्याणतमरूपस्य 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' (छा.उ.1-6-6) इत्यादिश्रुत्यन्तरप्रसिद्धपरमात्मदिव्यरूपतायाः प्रत्यभिज्ञायमानत्वेन तादृशरूपस्य पुरुषस्य सूर्याख्यदेवताविशेषरूपत्ववर्णनमपि न साधु दर्शितश्रुत्यन्तरस्य 'अन्तस्तद्धर्मोपदेशात्' (ब्र.सू.1-1-21) इत्यधिकरणे स्वासाधारणदिव्यरूपविशिष्टपरमात्मलक्षणपरमपुरुषपरतायास्तस्य पुरुषस्य सूर्याख्यदेवता विशेषव्यावृत्तधर्मविशेषनिर्देशप्रत्यक्षतद्भेदनिर्देशादिभिर्हेतुभिः सूत्रकारेणैव स्थापितत्वात्। अत्र प्रत्यगात्मपरस्य अहं शब्दस्य परमपुरुषपरस्य 'पुरुष' शब्दस्य च सामानाधिकरण्यनिर्देशः तयोः शरीरशरीरिभावनिबन्धनः। न तु स्वरूपैक्यनिबन्धनः। ततश्च - 'अहं स पुरुषोऽस्मि' इत्यनेन सामानाधिकरण्यनिर्देशेन स्वस्मिन् परमपुरुषशरीरभूतत्वप्रतिसन्धानपरेण भक्तिपर्यवसन्नस्य शरीरवत् सर्वात्मना तदधीनवृत्तिकत्वस्य ज्ञापनसिद्ध्या भगवद्दिव्यरूपदर्शने स्वस्य अधिकारो ज्ञापितो भवति।

सामानाधिकरण्याऽसम्भवशंका, तत्परिहारश्च

ननु कथमत्र अहंपद-पुरुषपदयोः सामानाधिकरण्यं सम्भवति ? तत्पदप्रयोज्यविषयतानिरूपिततादात्म्यनिष्ठसंसर्गतानिरूपितशाब्दबोधीयविषयताप्रयोजकत्वस्यैव तत्पदेन एतत्पदस्य सामानाधिकरण्यरूपत्वात्, सम्प्रति पुरुषपदार्थस्य अस्मीतिधात्वर्थ एवान्वयेन अहंपदार्थे अन्वयस्यैव अभावात्। एवम् - अस्तेर्धातोः आधेयत्वमर्थः, 'भूतले घटोऽस्ति' इत्यादौ घटादिषु भूतलादिनिरूपिताधेयताया एव बोधदर्शनात्। इत्थं च 'अहं स पुरुषोऽस्मि' इत्यत्र असधात्वर्थाधेयतायां पुरुषपदार्थस्य परमात्मन। आधेयतासम्बन्धेन तद्विशेषणपुरुषत्वस्य अवच्छेद्यतासम्बन्धेन चान्वये 'पुरुषत्वावच्छिन्नपरमात्मनिष्ठाधेयतावानहम्' इत्येव बोधसम्भवेन वाक्यस्य बाधितार्थकत्वप्रसंगो दुर्वारः, पुरुषत्वावच्छिन्नपरमात्मनिष्ठाधेयताया अहंपदार्थप्रत्यगात्मनि बाधात् इति चेत् न; पुरुषपदस्य अत्र पुरुषात्मकपरत्वेन पुरुषात्मकत्वरूपपुरुषपदार्थतावच्छेकधर्मावच्छिन्नप्रत्यगात्मनिष्ठाधेयतायाः एव अस-धात्वर्थतया

तस्याः प्रत्यगात्मनि बाधप्रसंगाभावात् । परब्रह्मान्तर्यामिकत्वरूपपुरुषात्मकत्वस्य प्रत्यगात्मन्येव सम्भवात्, दर्शिताधेयताभानबलेन अत्र पुरुषपदार्थब्रह्मात्मकत्व-विशिष्टस्यापि धर्मिपारतन्त्र्येण तादात्म्यसम्बन्धेन अहं पदार्थे भाननैयत्येन अहंपदेन पुरुषपदस्य यथोक्तलक्षणसामानाधिकरण्यसम्भवे क्षतिलेशाभावाच्च ।

#### शरीरिवाचकपदस्य शरीरबोधकत्वम्

ययोः शरीरशरीरिभावोऽस्ति, तयोः शरीरवाचकानां शरीरिबोधकत्वमिव शरीरिवाचकानां शरीरबोधकत्वमप्यस्त्येव, शरीरशरीरिभावलक्षणापृथक्सिद्धि-महिम्ना इति इह पुरुषशब्दस्य ब्रह्मात्मकत्वेन प्रत्यगात्मपरत्वम् अव्याहतम् ।

#### प्रकारिवाचकपदस्य प्रकारार्थकत्वे पुराणसम्मतिः

अत एव श्रीविष्णुपुराणे -

'ज्ञानं विशुद्धं विमलं च नित्यमशेषलोभादिनिरस्तसंगम् ।
एकं सदैकं परमः परेशस्स वासुदेवो न यतोऽन्यदस्ति ।।' (वि.पु.2-12-43)

इति श्लोके विशुद्धप्रत्यगात्मस्वरूपवाचिज्ञानपदस्य वासुदेवपदेन -

'एकस्समस्तं यदिहास्ति किंचित् तदच्युतो नास्ति परं ततोऽन्यत् ।
सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम् ।।' (वि.पु.2-16-23)

इति श्लोके चेतनाचेतनवाचिशब्दानां परमात्मवाचिशब्दैश्च सामानाधिकरण्य-व्यपदेशः कृतो यथोक्तनीत्यैव ।

#### श्रीभाष्यकारकृतसामानाधिकरण्योपपादनम्

अत्र प्रथमश्लोकं व्याकुर्वद्भिः भाष्यकारैः जिज्ञासाधिकरणभाष्ये 'तच्च वासुदेवशरीरमिति तदात्मकम्, अतदात्मकस्य कस्यचिदप्यभावात्' इति ज्ञानशब्दवाच्यम् आत्मस्वरूपं तच्छब्देन परामृश्य तस्य वासुदेवशरीरतया वासुदेवात्मकत्वोपपादनेन ज्ञानपदार्थप्रत्यगात्मस्वरूपनिष्ठविशेष्यतानिरूपित-तादात्म्य-सम्बन्धावच्छिन्न-वासुदेवात्मकत्वावच्छिन्न-प्रकारताशालि-बोधजनकत्वं दर्शयित्वा 'ज्ञानं वासुदेवः' इति शब्दयोः सामानाधिकरण्यम् उपपादितम् ।

#### सामानाधिकरण्येन व्यपदेशे श्रीविष्णुचित्तार्यसम्मतिः

एवमेव श्रीविष्णुचित्तार्यैरपि एतदनुसारिभिरत्र व्याख्यानं कृतम् ।

उदाहृतद्वितीयश्लोकेऽपि - यदिहास्ति किंचित्तत्समस्तम् एकोऽच्युत एव-तदात्मकमित्यर्थ इति व्याकुर्वद्भिः तैस्तद्रीत्यैव सामानाधिकरण्यम् उपपादितं चेतनाचेतनरूपसर्वद्रव्यवाचिसमस्तपदेन भगवद्वाचिनोऽच्युतपदस्य, एवम् -

'ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च ।

नद्यस्समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य ।।' (वि.पु.2-12-38)

इति श्लोकेऽपि ज्योतिरादिशब्दानां भगवद्वाचिशब्देन सामानाधिकरण्यनिर्देशो भगवद्वाचिशब्दस्य भगवदात्मकपरत्वाभिप्रायेणैव कृतः ।

### ईदृशसामानाधिकरण्ये श्रीभाष्यसम्मतिः

उक्तं हि जिज्ञासाधिकरणश्रीभाष्ये पुराणघट्टे - 'तदिदं शरीरात्मभावायत्तं तादात्म्यं सामानाधिकरण्येन व्यपदिश्यते - 'ज्योतींषि विष्णुः' इति । अत्र अस्त्यात्मकं नास्त्यात्मकं च जगदन्तर्गतं वस्तु विष्णोः कायतया विष्ण्वात्मकम् इत्युक्त्या अत्रत्यविष्णुपदस्य विष्ण्वात्मकपरत्वं भाष्यकारैः ।। एवम् - 'सर्वत्र प्रसिद्धोपदेशात्' (ब्र.सू.1-2-1) इति सूत्रभाष्ये - 'सर्वं खल्विदं ब्रह्म' (छा.उ.3-14-1) इति श्रुतौ ब्रह्मपदस्य ब्रह्मात्मकपरत्वमाश्रितं भाष्यकारैः इत्यवगम्यते ।

### अत्र गीताभाष्यसम्मतिः

एवम् - 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत' (भ.गी.13-2) इति गीताश्लोकभाष्ये-'देवमनुष्यादिक्षेत्रेषु वेदितृत्वैकाकारं क्षेत्रज्ञं च मां विद्धि - मदात्मकं विद्धि' इति व्याकुर्वद्भिर्भाष्यकारैः शरीरशरीरिभावनिबन्धन-सामानाधिकरण्य-निर्देशस्थलेषु शरीरिभूतब्रह्मवाचकशब्दानां ब्रह्मात्मकपरतयापि सामानाधिकरण्यनिर्देश-निर्वाहः सम्भवतीति दर्शितम् ।

### इदं नामरूपव्याकरणश्रुतिसिद्धं च

न च नामरूपव्याकरणश्रुत्या शरीरवाचकानां शब्दानाम् अपर्यवसानवृत्त्या शरीरि-बोधकतासिद्धया शरीरभूतचेतनाचेतनवाचिशब्दानां तच्छरीरकपरमात्मपर्यन्त-बोधकतासिद्धावपि शरीरिभूतपरमात्मवाचिशब्दानां तदात्मकचेतनाचेतनपर्यन्त-बोधकत्वासिद्धेः इह परमात्मवाचिनः पुरुषशब्दस्य परमपुरुषात्मकत्वेन प्रत्यगात्मपरत्वं विना लक्षणां न सम्भवति, लक्षणाकल्पनं च अयुक्तं -

'तत्त्वमसि' (छां.उ.6-8-7) इत्यादौ त्वंपदस्येव अत्रापि अहंपदस्य प्रत्यगात्मवाचिनः तच्छरीरकपरमात्मपरतासम्भवेनमुख्यवृत्त्यैवसामानाधिकरण्यनिर्वाहसम्भवात्इति-वाच्यम् ।

'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छां.उ.6-3-2) इत्यादिनामरूपव्याकरणश्रुत्या 'अनुप्रविश्य' इत्यनुप्रवेशस्य नामरूपव्याकरण-प्रयोजकतां प्रदर्श्य तद्बलेनैव तत्तन्नाम्नां शक्तिव्यस्थापनदर्शनेन तत्र यया युक्त्या चेतनाचेतनशब्दानां परमात्मवाचकता सिद्ध्यति, तयैव युक्त्या परमात्मवाचि-शब्दानां तदात्मकत्वेन तच्छरीरवाचकताया अपि सिद्धेः, तदपह्नवायोगात् ।

**चेतनाचेतनयोः परमात्मवाचकशब्दवाच्यत्वम्**

इदमत्रावधेयम् - इयं श्रुतिर्लोकव्युत्पत्तिसिद्धतत्तत्पदार्थवाचकताकशब्दाना परमात्मपर्यन्तवाचितां कथं प्रतिपादयतीति तावद्विवेचनीयम् । तत्तच्छब्दवाच्येषु पदार्थेषु अपृथक्सिद्धतया परमात्मनस्सम्बद्धत्वात् पृथक्सिद्ध्यनर्हसम्बन्धविशेषेण तत्तत्पदार्थविशिष्टेऽपि तत्तन्नाम्नां शक्तिः इति युक्त्यैव परमात्मपर्यन्तवाचिता तत्तन्नाम्नां प्रतिपादिता इत्यवगम्यते । एवमेव च परमात्मवाचिशब्दानामपि तत्तत्पदार्थानां परमात्मन्यपृथक्सिद्धतया सम्बद्धत्वादेव पृथक्सिद्ध्यनर्हसम्बन्ध-विशेषेण तद्विशिष्टवाचकतापि तयैव श्रुत्या सिद्ध्यतीति न तदपह्नवः कर्तुं शक्यः । तदपृथक्सिद्धतया वर्तमानत्वमेव च तद्वाचकवाच्यत्वे तन्त्रमिति । चेतनाचेतनानुप्रवेशेन तदपृथक्सिद्धतया वर्तमानत्वेन यथा चेतनाचेतनवाचक-शब्दवाच्यत्वं परमात्मनस्सम्भवति, तथैव परमात्मापृथक्सिद्धतया वर्तमानत्वेन परमात्मवाचकशब्दवाच्यत्वं चेतनाचेतनयोरपि सम्भवतीत्यभिप्रायेणैव च भाष्यकारैरपि प्रागुदाहृतस्थलेषु भगवद्वाचकशब्दानां तदात्मकत्वेन चेतनाचेतन-परता भाणिता । 'क्षेत्रज्ञं चापि मां विद्धि' (भ.गी.13-2) इति श्लोकगीताभाष्ये - चेतनाचेतनवाचिसमानाधिकरणतया प्रयुक्तस्य मामितिपरमात्मवाचिशब्दस्य 'मां विद्धि मदात्मकं विद्धि' इति भगवदात्मकवाचितां व्याख्याय तदुपष्टम्भकतया 'यथा क्षेत्रं क्षेत्रज्ञविशेषणतैकस्वभावतया तदपृथक्सिद्धेस्तत्सामानाधिकरण्येनैव

निर्देश्य, तथा क्षेत्रं क्षेत्रज्ञं च मद्विशेषणतैकस्वभावतया मदपृथक्सिद्धेः मत्सामानाधिकरण्येनैव निर्देश्यौ विद्धि' इति भाषमाणैर्भाष्यकारैः तदपृथक्सिद्धतया वर्तमानत्वमात्रमेव तद्वाचकवाच्यत्वे तन्त्रं, न तु तद्विशेष्यतया वर्तमानत्वमपीति स्पष्टमेव दर्शितं भवति ; अन्यथा इह मामित्यस्य मदात्मकत्वेन चेतनाचेतनवाचकत्वोपष्टम्भकतायास्तद्ग्रन्थस्यासिद्धेः ।

तदेतत्सर्वं - नामरूपव्याकरणश्रुतिबलेन सिद्ध्यति वाच्यवाचकभावे नाम्ना लोकव्युत्पत्तिसिद्धस्वार्थविशिष्टत्वरूपशक्यतावच्छेदकशरीरे अपृथक्स्थितिप्रयोजकसम्बन्धविशेष एव स्वार्थवैशिष्ट्यघटकतया प्रविष्टः - न तु तत्र विशेष्यभावनियामकत्वमपि सम्बन्धे निवेश्यं, प्रयोजनाभावात् गौरवाद्विपरीतानां बहूनां स्वारसिकप्रयोगाणां मुख्यत्वानिर्वाहप्रसंगात्, सम्भवति मुख्यतया निर्वाहे तदुपेक्षणायोगाच्च ।

**अहं स पुरुषोऽस्मि इत्यत्र सामानाधिकरण्यस्य मुख्यता**

इत्थं च चेतनाचेतनवाचिशब्दानां शरीरितासम्बन्धेन तद्विशिष्टपरमात्मवाचितावत्परमात्मवाचिशब्दानामपि शरीरतासम्बन्धेन तद्विशिष्टचेतनवाचित्यमपि सम्भवति, शरीरशरीरिभावसम्बन्धस्य चेतनाचेतनयोः परमात्मनश्च अपृथक्स्थितिनियामकतया तेषां परस्परापृथक्सिद्धताया अव्याहतत्वात् । तस्मात् चेतनाचेतनवाचिशब्दानां परमात्मवाचिशब्दानां च परमात्मविशेष्यकबोधजनकसामानाधिकरण्यनिर्देशवत् चेतनाचेतनविशेष्यकबोधजनकसामानाधिकरण्यनिर्देशोऽपि मुख्य एवेत्यभिप्रायेणैव कृतः इति स्पष्टमेव अवगम्यते । इत्थं च - 'नद्यः समुद्रान्तःप्रविष्टाः समुद्र एव भवन्ति' - 'पल्लवपुष्पफलशाखादिकं सर्वं वृक्ष एव' इत्यादयः स्वारसिकनिर्देशा अपि मुख्यतयैव निर्व्यूढा भवन्ति । न च शरीरवाचकानां शरीरिवाचकत्वाभिप्रायकबहुतरनिर्देशदर्शनेन भाष्यकृतां शरीरवाचकशब्दानां शरीरिण्येव शक्तिः, शरीरिवाचकानां तु शरीरबोधकतया क्वाचित्को निर्देशो गौण इत्येवाभिप्राय इति - वाच्यम् ; तत्र तत्र भाष्यकृतां शरीरवाचकशब्दानां शरीरिवाचकत्ववर्णनस्यापि शरीरशरीरिभावस्थले अपृथक्सिद्धिनैयत्येन तद्बलेनैव तेषां तद्वाचकत्वसम्भवाभिप्रायकत्वेन, शरीरवाचकशब्दानामेव शरीरिवाचकत्वम् इत्यभिप्रायकत्वासम्भवात् ; अन्यथा-

'रसोऽहमप्सु कौन्तेय' (भ.गी.7-8) 'पुण्यो गन्धः पृथिव्यां च' (भ.गी.7-9) इत्यादिसामानाधिकरण्यनिर्देशानाम् अनिर्वाहप्रसंगाच्च । तत्र हि रसगन्धादिषु द्रव्यत्वघटितशरीरत्वाभावेन तद्वाचकरसगन्धादिशब्दानाम् उक्तरीत्याश्रयणे परमात्मवाचिशब्देन सामानाधिकरण्यं दुरपपादम् । अस्मत्पक्षे तु स्वाश्रयापृथक्सिद्धेरपि तत्रापृथक्स्थितिप्रयोजकत्वेन तत्सम्बन्धेन रसादिविशिष्टत्वेन परमात्मबोधकत्वसम्भवेन - 'रसोऽस्मि' 'गन्धोऽस्मि' इत्यादि सामानाधिकरण्यं सूपपादम् । तस्मात् इह - 'अहं स पुरुषोऽस्मि' इत्यहंपदार्थप्रत्यगात्मविशेष्यक-पुरुषपदार्थपरमपुरुषात्मकत्वावच्छिन्न-प्रकारकबोधपर-सामानाधिकरण्यनिर्देशोऽपि मुख्य एव सम्भवति।

### अहं स पुरुषोऽस्मीत्यत्र एकदेशान्वयसमर्थनम्

अथ - 'अहं स पुरुषोऽस्मि' इत्यत्र पुरुषपदस्य परमपुरुषात्मकपरत्वे तदेकदेशभूतपरमपुरुषे तत्पदार्थान्वयो न सम्भवति, 'पदार्थः पदार्थेनान्वेति, न तु पदार्थैकदेशेन' इति व्युत्पत्तिविरोधात् । परमपुरुषात्मकेऽपि तदन्वयो न सम्भवति, तत्पदार्थादित्यमण्डलान्तर्वर्ति परमपुरुषाभेदस्य प्रत्यगात्मनि बाधात् इति चेत् न ; 'चैत्रस्य गुरुः' 'गृहस्य पतिः' इत्यादौ गुरुत्वपतित्वादिपदार्थैकदेशे षष्ठयन्तपूर्व-पदार्थचैत्रादिनिरूपितत्वान्वयदर्शनेन तादृशस्थलेष्विव 'गौरश्चैत्रो जानाति' 'अयं ब्राह्मण आत्रेयो विद्वान्' इत्यादिषु चैत्रब्राह्मणादिपदार्थशरीर-विशेषावच्छिन्नात्मैकदेशशरीरे गौरात्रेयादिपदार्थान्वयदर्शनेन तादृशस्थलेष्वपि दर्शितव्युत्पत्तेः संकोचावश्यकत्वेन अत्र पुरुषपदार्थैकदेशपरमपुरुषे तत्पदार्थान्वयस्वीकारे बाधकाभावात् । दर्शितव्युत्पत्तेः शब्दान्तरप्रयोज्य-प्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रतिशब्दान्तरप्रयोज्योपस्थितेः मुख्यविशेष्यतासम्बन्धेन हेतुत्वमित्येतत्परतया तत्र प्रकारताभिन्नत्वरूपमुख्यत्व-घटकप्रकारतायां ससम्बन्धिकपदाप्रयोज्यत्वापृथक्सिद्धिसम्बन्धानवच्छिन्नत्वयोः निवेशे हि नोक्तद्विविधस्थलेष्वनुपपत्तिः, 'चैत्रस्य गुरुः' 'गृहस्य पतिः' इत्यादौ गुरुपत्यादीनां ससम्बन्धिकपदत्वेन तत्प्रयोज्यगुरुत्वपतित्वादिनिष्ठप्रकारतायां

तादृशपदाप्रयोज्यप्रकारताभिन्नत्वानपायात्, 'गौरश्चैत्रो जानाति' 'अयं ब्राह्मण आत्रेयो विद्वान्' इत्यादौ चैत्रब्राह्मणपदप्रयोज्यशरीरविशेषविशिष्टप्रत्यगात्मरूप-तदर्थैकदेशशरीरनिष्ठप्रकारताया अपृथक्सिद्धिसम्बन्धावच्छिन्नत्वेन तदनवच्छिन्न-प्रकाराभिन्नत्वानपायाच्च मुख्यविशेष्यतारूपत्वानपायेन तादृशविशेष्यतासम्बन्धेन गुरुत्वपतित्वशरीरादिषु शब्दान्तरप्रयोज्योपस्थितेः जागरूकत्वात् । इत्थं च अत्रापि पुरुषशब्दार्थपरमपुरुषविशिष्टघटकपरमपुरुषे तादृशविशेष्यतासम्बन्धेन पुरुष-शब्दप्रयोज्योपस्थितेस्सत्त्वेन तत्र तत्पदार्थान्वये न काचिदपि क्षतिरुपलभ्यते।

यस्तुतस्तु शरीरवाचकानां शरीरिणि वृत्तेः शरीरिवाचकानां शरीरे वृत्तेश्च प्रागुपदर्शितशरीरशरीरिभावापन्नार्थद्वयपरशब्दसामानाधिकरण्य-निर्देशाद्यनुरोधेन क्लृप्ततया तादृशवृत्तिज्ञानपूर्वकमेव तादृशस्थलेषु शाब्दबोधजननात्, शरीरिवाचकशब्दानां तदात्मकविषयकवृत्तिज्ञानस्य तेषां शरीरिभूततत्तत्पदार्थ-वाचकत्वरूपवृत्तिज्ञानपूर्वकतायाः शरीरवाचकशब्दानां तच्छरीरकविषयकवृत्ति-ज्ञानस्य तेषां शरीरभूततत्तत्पदार्थवाचकत्वरूपवृत्तिज्ञानपूर्वकतायाश्च नियतत्वेन तत्र प्राथमिकवृत्तिज्ञानाधीनपदार्थोपस्थित्योः शरीरिभूतेषु शरीरभूतेषु च तत्तत्पदार्थेषु मुख्यविशेष्यतासम्बन्धेन नियमेन सत्त्वात् तत्र पदार्थान्तरान्वयस्वीकारे नानुपपत्तिगन्धः ।

### तादात्म्यसम्बन्धघटितसामानाधिकरण्योपपादनम्

अत एव - 'गभीरायां नद्यां घोषः' इत्यादौ नदीशब्दार्थनदीतीरैकदेशनद्यां गभीरपदार्थान्वयबोधोऽपि संगच्छते, तत्र शक्त्यधीननद्युपस्थिति पूर्वकमेव लक्षणाधीननदीतीरोपस्थितेः जननात् शक्त्यधीननद्युपस्थितेः तत्र कारणत्वसम्भवात्। इत्थं च प्रकृतस्थले पुरुषपदजन्यपरमात्मोपस्थितेः तन्मूलकतत्पदजन्यतदात्म-कोपस्थितेश्च द्वयोरपि जननात् तत्र प्रथमोपस्थितिबलेन पुरुषशब्दार्थैकदेश-परमात्मनि 'स' इति पदप्रतिपन्नार्थान्वयबोधजनने न कश्चिद्विरोधः ।

### एकदेशान्वये दोषराहित्यप्रतिपादनम्

अथवा चिदचिद्वाचिशब्दार्थविशेष्यकपरमात्मवाचिशब्दार्थप्रकारकबोधपर-

सामानाधिकरण्यनिर्देशस्थलेषु परमात्मवाचिशब्दानां भगवदात्मके शक्त्यस्वीकारेऽपि तदर्थपरमात्मन एव तादात्म्यसम्बन्धेन चेतनाचेतनयोरन्वय-स्वीकारेणापि सामानाधिकरण्यव्यपदेशनिर्वाहः सम्भवति । तादात्म्य-निष्ठसंसर्गतानिरूपितविषयताप्रयोजकत्वस्यैव सामानाधिकरण्यरूपत्वात्, भगवदात्मकत्वरूपतत्तादात्म्यस्य चेतनाचेतनयोः अनपायाच्च । इत्थं च प्रागुदाहृतेषु स्थलविशेषेषु परमात्मपरशब्दानां तदात्मकपरतया भाष्यकारकृत-व्याख्यानं तादात्म्यसंबन्धेन परमात्मप्रकारकबोधजनकत्वाभिप्रायकं बोध्यम्। इत्थं च एकदेशान्वयप्रयुक्तानुपपत्तिशंकागन्धस्यैव नावकाशः ।

न च - 'नीलमुत्पलम्' इत्यादौ स्वरूपैक्यलक्षणतादात्म्यस्यैव नीलपदार्थोत्पल-पदार्थयोस्संसर्गतया भानदर्शनेन तस्यैव सामानाधिकरण्यव्यपदेशनियामकता युक्ता ; तत्कथं तादात्म्यशब्दसाधारण्यमात्रेण तदन्तर्यामिकत्वरूपतादात्म्यस्यापि तत्सामानाधिकरण्यव्यपदेशनियामकत्वं । सुवचम् इति वाच्यम्, तदन्तर्यामिकत्वरूपतादात्म्यस्यापि प्रयोगानुरोधेन सिध्यन्त्याः सामानाधिकरण्य-व्यपदेशनियामकताया दुरपह्नवत्वात् ।

**प्रकारिवाचकस्य प्रकारार्थकत्वे उपनिषत्प्रमाणप्रदर्शनम्**

तैत्तिरीयोपनिषदि नारायणे - 'विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति' (तै.ना. 91) इति । 'येन सर्वमिदं प्रोतं पृथिवीचान्तरिक्षं च द्यौश्च दिशश्चावान्तरदिशाश्च स वै सर्वमिदं जगत् स च भूतं स भव्यम्' (तै.ना.146) इति च श्रुत्या - 'सर्वगत्वादनन्तस्य स एवाहमवस्थितः' (वि.पु.1-19-85) इति स्मृत्या च तदन्तर्यामिकत्वरूपतादात्म्यस्यापि सामानाधिकरण्यव्यपदेशनियामकताज्ञापनपूर्वकं चिदचिद्वाचिपदार्थविशेष्यक-परमात्मवाचिपदार्थप्रकारकबोधपरसामानाधिकरण्यनिर्देशो हि कृतो दृश्यते ।

**सामानाधिकरण्ये विष्णुपुराणश्लोकार्थोपपत्तिः**

किं च - श्रीविष्णुपुराणे प्रागुदाहृते - 'ज्ञानं विशुद्धम्' (वि.पु.2-12-43) इत्यादिश्लोके 'एकस्समस्तम्' (वि.पु.2-16-23) इति श्लोके च चिदचिद्वाचि-पदार्थविशेष्यक-परमात्मवाचिपदार्थ-प्रकारकबोधपर-सामानाधिकरण्य-निर्देशस्य चिदचितोर्भगवदन्तर्यामिकत्वलक्षणतादात्म्यं मूलमिति स्पष्टमेवावगम्यते । अत्र

प्रथमश्लोके ज्ञानशब्दवाच्य-प्रत्यगात्मस्वरूप-विशेष्यकवासुदेव-शब्दार्थप्रकार-बोधपरतया -'ज्ञानं स वासुदेवः' इति सामानाधिकरण्यनिर्देशं कृत्वा 'न यतोऽन्यदस्ति' इत्यनेन जगति भगवदन्तर्यामिकत्वलक्षणतदभेदरूपं तत्तादात्म्यमेव तत्र हेतुरिति हि दर्शितम् । द्वितीयश्लोकेऽपितच्छब्दवाच्यचिदचिद्रूपकृत्स्नजगद्विशेष्यकाच्युत-पदार्थप्रकारकबोधपरतया 'तदच्युतः' इति सामानाधिकरण्यनिर्देशं कृत्वा 'नास्ति परं ततोऽन्यत्' इत्यनेन जगति यथोक्तलक्षणं तादात्म्यमेव तत्र हेतुरिति दर्शितम् ।

तादात्म्याभेदैक्यशब्दानां सामानाधिकरण्यनिर्देशनिर्वाहकत्वम्

तादात्म्याभेदैक्यादिशब्दानां पर्यायत्वात् तच्छब्दनिर्देश्यसम्बन्धनिष्ठसंसर्गता-निरूपितविषयताप्रयोजकत्वमेव सामानाधिकरण्यं शब्दानाम् इति हि तदभिप्रायोऽवगम्यते । अत्राभिधीयमानो जगतो ब्रह्माभेदो न स्वरूपतो भेदाभावरूपः, जगद्ब्रह्मणोः स्वरूपतो भेदस्य अन्यत्र सुप्रतिष्ठापितत्वात्, स्वरूपतो जडाजडयोः अभेदस्य अत्यन्तमेवासम्भावितत्वाच्च। ब्रह्मेतरवस्तुमात्रप्रतिषेधपरोऽयं 'न यतोऽन्यदस्ति' इति निर्देश इत्यपि न शक्यं, भेदेन निर्दिष्टयोः जीवात्मपरमात्मनोः प्राक्कृतसामानाधिकरण्यनिर्देशनिर्वाहानौपयिकत्वेन तथाविधप्रतिषेधस्य इह उपयोगाभावात्, ब्रह्मेतरस्य वस्तुनः प्रसिद्धत्वे तत्प्रतिषेधायोगात्, अप्रसिद्धत्वे च प्रतियोग्यप्रसिद्ध्या सुतरामेव तत्प्रतिषेधायोगाच्च तथाविधप्रतिषेधस्य प्रमाणभूत-शास्त्रवेद्यताया एव असम्भवाच्च । अपितु - स्वरूपतो वासुदेवभिन्नं किमपि द्रव्यम् अपृथक्सिद्धिलक्षण-तादात्म्यसम्बन्धावच्छिन्न-वासुदेवनिष्ठ-प्रतियोगिताक-भेदवत् नास्तीति । तादृशभेदाभावरूपवासुदेवतादात्म्यमेव इह सामानाधिकरण्य-निर्देशनिर्वाहकतया अभिधीयते । अयमर्थश्च दर्शितद्वितीयश्लोके 'तदच्युतो नास्ति परं ततोऽन्यत्' इत्यत्र स्पष्टमेव अवगम्यते, अत्र 'परमन्यत्' इति द्वयोः पदयोस्सत्त्वेन 'परम्' इत्यस्य स्वरूपतः अच्युतभिन्नवस्तुपरत्वात् 'अन्यत्' इत्यस्य अपृथक्सिद्धि-लक्षणतादात्म्यसम्बन्धावच्छिन्नाच्युतनिष्ठप्रतियोगिताकभेदवत्परत्वाच्च । अतः तदैकार्थ्येन प्रथमश्लोकेऽपि यथोक्तलक्षणभेदप्रतिषेध एव - 'स वासुदेवो न यतोऽन्यदस्ति' इत्यनेन विवक्षितः । तादृशभेदश्च ब्रह्मणि रूपादिगुणेषु च प्रसिद्ध

एवेति ब्रह्मेतरचिदचिदात्मकद्रव्येषु तत्प्रतिषेध उपपन्न एव । तथा च अत्र सामानाधिकरण्यनिर्देशनिर्वाहौपयिकतया दर्शितभेदाभावस्य प्रदर्शनाद्दर्शितभेदाभावपर्यवसन्नं दर्शिततादात्म्यमपि सामानाधिकरण्यनिर्देशनिर्वाहकमेव ।

### तत्र अहिकुण्डलाधिकरणभाष्यप्रामाण्यप्रदर्शनम्

न च - स्वरूपतो भिन्नयोरीदृशाभेदव्यपदेशो लाक्षणिक एव न मुख्य इति वाच्यम् अहिकुण्डलाधिकरणतृतीयसूत्रभाष्ये 'जीववदपृथक्सिद्धविशेषणत्वेन अचिद्वस्तुनो ब्रह्मांशत्वं, विशिष्टवस्त्वैकदेशत्वेन अभेदव्यवहारो मुख्यः विशेषणविशेष्ययोः स्वरूपस्वभावभेदेन भेदव्यवहारो मुख्यः' (ब्र.सू.3-2-28) इत्यपृथक्सिद्धविशेषणे स्वरूपैक्यलक्षणतादात्म्यसम्बन्धावच्छिन्नविशेष्यनिष्ठप्रतियोगिताकाभावरूपविशेष्यभेदव्यवहारस्य अपृथक्सिद्धिलक्षणतादात्म्यसम्बन्धावच्छिन्नविशेष्यनिष्ठप्रतियोगिताकाभावरूपविशेष्यभेदाभावव्यवहारस्य च द्वयोः मुख्यतायाः स्पष्टमेव भाषितत्वात् ।

### तादात्म्यनिर्देश्यसामानाधिकरण्ये श्रीभाष्यसम्मतिः

एवं जिज्ञासाधिकरणभाष्ये भेदतन्निषेधश्रुत्यविरोधसमर्थनघट्टे 'कृत्स्नस्य जगतो ब्रह्मकार्यतया तदन्तर्यामिकतया च तदात्मकत्वेन ऐक्यात् तत्प्रत्यनीकनानात्वं प्रतिषिध्यते' (ब्र.सू.1-1-1) इत्युक्त्या, तदपृथक्सिद्धिलक्षणं तदात्मकत्वमपि एकत्वरूपम् इति तथाविधैकत्वाभावोऽपि तद्वस्तुप्रतियोगिकभेदरूप इति च स्पष्टमुपदर्शितम् । एवं तत्रैव पुराणघट्टे 'तदिदं शरीरात्मभावायत्तं तादात्म्यं सामानाधिकरण्येन व्यपदिश्यते - 'ज्योतींषि विष्णुः' (वि.पु.2-12-38) इति । अत्र अस्त्यात्मकं नास्त्यात्मकं च जगदन्तर्गतं वस्तु विष्णोः कायतया विष्ण्वात्मकम्' इत्युक्त्या दर्शिततादात्म्यस्यापि सामानाधिकरण्यव्यपदेशनिर्वाहकत्वमभिहितम् ।

### ऐक्यशब्दस्य सामानाधिकरण्यनिर्वाहकत्वम्

एवम् अंशाधिकरणेऽपि जीवस्य ब्रह्मांशत्वसाधने तदिभन्नत्व-तदैक्यनिर्देशयोः हेतुतया अभिधानात्, तद्भाष्ये तदैक्यनिर्देशस्य 'तत्त्वमसि' (छां.उ.6-8-7) 'अयमात्मा ब्रह्म' (बृ.उ.4-5-19) इत्यादि निर्देशरूपत्वाभिधानात् एवम् उभयव्यपदेशमुख्यत्वसिद्धये 'जीवोऽयं ब्रह्मणोऽंशः' इत्यभ्युपगन्तव्य इत्युक्तेश्च ब्रह्मात्मकत्वरूपतदैक्यस्यापि स्वरूपैक्यवत् सामानाधिकरण्यनिर्देशनिर्वाहकत्वं

सम्भवतीति तादृशसामानाधिकरण्यनिर्देशस्यापि मुख्यत्वमेव इति च दर्शितम्। एवं 'तमः परे देव एकीभवति' (सु.उ.2) इति श्रुत्या 'एको घटः' 'एकः पटः' इत्यादिव्यवहारैश्च पृथक्सिद्ध्यनर्हसम्बन्धविशेषस्यापि एकत्वरूपताया अवगमात्, तदैक्यस्यैव तत्सामानाधिकरण्यनिर्देशप्रयोजकत्वाच्च तत्स्वरूपैक्यवत् तदात्मकत्व-रूपतदैक्यस्यापि तत्सामानाधिकरण्यनिर्देशनिर्वाहकत्वं दुरपह्नवम् । जडाजडयोः स्वरूपैक्यासम्भवेन 'तमः परे देव एकीभवति' इत्यत्र अनेकावयवसंघातात्मक-घटपटादिषु स्वरूपैक्यासम्भवेन 'एको घटः' 'एकः पटः' इत्यादिषु च पृथक्सिद्ध्यनर्ह-सम्बन्धविशेष एव हि एकशब्देन प्रतिपाद्यते ।

### तादात्म्यस्य सामानाधिकरण्यनिर्वाहकत्वम्

इत्थं च - प्रागुदाहृतविष्णुपुराणश्लोकेषु - 'ज्ञानं स वासुदेवः' 'तदच्युतः' 'ज्योतींषि विष्णुर्भुवनानि विष्णुः' (वि.पु.2-12-38) इत्यादि स्थलेषु 'सर्वं खल्विदं ब्रह्म' (छां.उ.3-4-1) 'ब्रह्मा च नारायणः । शिवश्च नारायणः । शक्रश्च नारायणः । द्यावापृथिव्यौ च नारायणः । कालश्च नारायणः । दिशश्च नारायणः' (ना.उ.2) इत्यादि श्रौतनिर्देशस्थलेषु च ज्ञानादिशब्दवाच्यचेतनाचेतननिष्ठविशेष्यतानिरूपित-वासुदेवादिशब्दवाच्यपरमात्मनिष्ठस्वान्तर्यामिकत्वलक्षणतादात्म्यसम्बन्धावच्छिन्न-प्रकारताशालिबोधपरतयैव सामानाधिकरण्यनिर्देशो निर्वोढुम् उचितः, तत्रत्यपदसन्दर्भाणां चेतनाचेतनविशेष्यकबोधजनन एव स्वारसिकत्वात् । 'अहं स पुरुषोऽस्मि' इति प्रकृतस्थलेतु - असधात्वर्थाधेयतायां स्वनिरूपितापृथक्सिद्ध्य-वच्छिन्नत्वसम्बन्धेन पुरुषपदार्थपरमात्मनोऽन्वयेऽपि तथाविधाधेयताश्रयत्वस्य अहं पदार्थे प्रत्यगात्मनि भानबलेन धर्मिपारतन्त्र्येण पुरुषपदार्थपरमात्मनोऽपि स्वनिरूपितापृथक्सिद्धिलक्षणतादात्म्यसम्बन्धेन तत्र भाननैयत्येन अहंपदपुरुष-पदयोस्सामानाधिकरण्यं सम्भवतीति बोध्यम् ।

### अविभागशब्दस्य सामानाधिकरण्यद्योतकत्वम्

अत एव - 'अविभागेन दृष्टत्वात्' (ब्र.सू.4-4-4) इत्यधिकरणभाष्ये - 'किमयं परं ज्योतिरूपसम्पन्नस्सर्वबन्धविनिर्मुक्तः प्रत्यगात्मा स्वात्मानं परमात्मनः पृथग्भूतम्

अनुभवति, उत तत्प्रकारतया तदविभक्तम्' इति विशयमुपदर्श्य सिद्धान्ते, 'अतोऽविभागेन' 'अहं ब्रह्मास्मि' इत्येवानुभवति इति निर्दिशता भाष्यकृतापि अहंपदार्थप्रत्यगात्मनिष्ठविशेष्यतानिरूपिताविभागशब्दितापृथक्सिद्धिलक्षणतादात्म्य-सम्बन्धावच्छिन्नब्रह्मपदार्थपरमात्मनिष्ठप्रकारताशालिबोधपरत्वम् - 'अहं ब्रह्मास्मि' इति निर्देशस्य उपदर्शितम् ।

### सामानाधिकरण्यस्य प्रकारान्तरेण प्रतिपादनम्

अत्र प्रत्यगात्मनि ब्रह्मायिभागस्य धर्मिपारतन्त्र्येण भानाभिप्रायेणैव इत्थमुक्तम्, अन्यथा ब्रह्मपदार्थस्य असधात्वर्थ एव अन्वयेन ब्रह्माविभागस्य प्रकारविधया वा संसर्गविधया वा प्रत्यगात्मनि भानासम्भवात् । अत्र अहंपदार्थब्रह्मपदार्थयोः अविभागेन अनुभवपरतायाः 'अहं ब्रह्मास्मि' इति सामानाधिकरण्यनिर्देशस्य अभिधानेन स्वरूपाभेदलक्षणतादात्म्यवत् अविभागशब्दितशरीरशरीरिभाव-लक्षणतादात्म्यस्यापि सामानाधिकरण्यनिर्वाहकत्वं भाष्यकारैः स्पष्टम् अभिहितं भवति । न च 'भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिस्सामानाधिकरण्यम्' इति शाब्दिकोक्तसामानाधिकरण्यं स्वप्रयोज्यविषयतासम्बन्धेन शब्दानामर्थ-लक्षणैकाधिकरणवृत्तित्वरूपं हि अवगम्यते । 'अहं स पुरुषोऽस्मि' इत्यत्र पुरुषपदार्थस्य परमात्मनः स्वान्तर्यामिकत्वलक्षणतादात्म्यसम्बन्धेन अहंपदार्थे जीवात्मनि अन्वयस्वीकारेऽपि अहंपदपुरुषपदयोः तादृशं सामानाधिकरण्यं कथं सम्भवति ? तत्प्रयोज्यविशेष्यताप्रकारतयोः एकाधिकरणनिष्ठत्वाभावादिति वाच्यम् ; दर्शितसामानाधिकरण्यलक्षणे स्वप्रयोज्यविषयतानिरूपितसंसर्गतावत्त्वसम्बन्धेन समानविभक्त्यर्थैकत्वरूपैकार्थवृत्तित्वस्य स्वप्रयोज्यविषयतानिरूपितत्वसम्बन्धेन एकत्वनिष्ठसंसर्गतालक्षणैकाधिकरणवृत्तित्वपर्यवसन्नस्यैव अन्ततस्सामानाधि-करण्यशब्देन विवक्षणीयत्वात्, स्वान्तर्यामिकत्वादिलक्षणतादात्म्यादि-पृथक्सिद्ध्यनर्हसम्बन्धविशेषाणां सर्वेषामेव एकत्वरूपताया दर्शितत्वाच्च अत्र अहंपदपुरुषपदयोर्यथोक्तलक्षणसामानाधिकरण्यस्य अव्याहतत्वात्, अन्यादृश-सामानाधिकरण्यस्य अनेकदोषसम्भवेन इह विवक्षणासम्भवाच्च ।

### लक्षणान्तरेषु दोषप्रदर्शनम्

तथाहि - स्वप्रयोज्यविषयतासम्बन्धेनार्थलक्षणैकाधिकरणवृत्तित्वं तावत् नेह विवक्षितुं शक्यं, 'सम्पन्नेन चैत्रेणानाहूतोऽपि मैत्रस्तस्य प्रीतिसम्पादनाय सततं तस्य अनुपदं गच्छति' इत्यत्र तृतीयान्तसम्पन्नपदचैत्रपदयोः षष्ठयन्ततत्पदस्य च सामानाधिकरण्यव्यवहारप्रसंगात् । एवं - स्वनिरूपितत्वस्वसामानाधिकरण्योभय-सम्बन्धेन तच्छब्दप्रयोज्यविषयताविशिष्टविषयताप्रयोजकत्वम् एतच्छब्दस्य तच्छब्देन सामानाधिकरण्यम् इति पर्यवसानकरणेऽपि 'घटाभावे घटाभावः' 'सर्वस्मिन्नभिधेये प्रमेयत्वम्' इत्यादिषु अतिप्रसंगः, 'शंखं पीतं जानाति' इत्यादौ अप्रसंगश्च भवतः ; प्रथमस्थले धर्मिपारतन्त्र्येण आधेयतासम्बन्धेन घटाभावस्य घटाभावे प्रकारतया भानेन द्वितीयस्थले अभिधेयपदार्थस्य प्रमेयत्वपदार्थे तथा भानेन च सप्तम्यन्तप्रथमान्तपदप्रयोज्यप्रकारताविशेष्यतयोः एकनिष्ठत्व-निरूप्यनिरूपकभावोभयसत्त्वात्, तृतीयस्थले शंखपद-पीतपदप्रयोज्यविषयतयोः एकनिष्ठत्वासम्भवाच्च । तस्माद्यथोक्तरीत्यैव सामानाधिकरण्यलक्षणपर्यवसानं कार्यमिति न कश्चिद्दोषः ।

### निष्कृष्टलक्षणेऽव्याप्तिदोषनिरासः

नचैवमपि, 'शंखं पीतं जानाति' इत्यत्र शंखपीतशब्दयोः सामानाधिकरण्य-लक्षणस्य अप्रसंगो दुर्वारः, तत्र पीतपदार्थस्य धर्मिपारतन्त्र्येण तादात्म्येन शंखपदार्थे भाने वाक्यस्य अप्रामाण्यप्रसंगेन तथाभानासम्भवात् इति - वाच्यम् स्वरूपैक्यलक्षणतादात्म्येन तस्य तत्र तथाभानासम्भवेऽपि तथाविधतादात्म्य-सम्बन्धावच्छिन्नप्रकारतानिरूपकत्वावच्छिन्ननिरूपकताकविशेष्यतावत्वसम्बन्धेन तथाभानसम्भवात् तादृशविशेष्यतावत्त्वसम्बन्धस्यापि एकत्वादिरूपत्वानपायाच्च एकत्वतादत्म्याभेदादिशब्दाना पर्यायत्वात् पृथक्सिद्ध्यनर्हसम्बन्धविशेषाणां सर्वेषामपि अभेदरूपतायाः दर्शितत्वाच्च समानाधिकरणवाक्यस्थले नामार्थयोः भेद एव संसर्ग इति व्युत्पत्तेरपि न विरोधः ।

### 'अग्निर्माणवकः' इत्यत्रातिप्रसंगनिरासः

एतेन - अपृथक्सिद्धेरभेदातिरिक्तत्वेऽपि समानाधिकरणवाक्यस्थले तत्सम्बन्धेन

नामार्थयोः अन्वयं स्वीकृत्य मुख्यत्वनिर्वाहे - 'अग्निर्माणवकः' इत्यादिसर्वसम्प्रतिपन्न-गौणव्यवहाराणामपि मुख्यत्वापत्तिः दुर्वारा; तत्रापि सादृश्यसम्बन्धेन नामार्थयोः अन्वयस्वीकारसम्भवादिति शंकापि दूरोत्सारिता; अपृथक्सिद्धेरभेदरूपतासम्भवात्, भेदगर्भस्य सादृश्यस्य तथात्वासम्भवाच्च । अपृथक्सिद्धेः अहिकुण्डलाधिकरणादि-भाष्योदाहरणेन अभेदरूपता हि प्रागुपदर्शिता । एवं जिज्ञासाधिकरणभाष्ये भेदतन्निषेधश्रुत्यविरोधसमर्थनघट्टश्रुतप्रकाशिकायामपि 'कृत्स्नस्य जगतो ब्रह्म-कार्यतया तदन्तर्यामिकतया च तदात्मकत्वेनैक्यात्' इति पंक्तिव्याख्यानावसरे 'तदात्मकत्वं नाम जगतः तत्प्रकारतैकस्वभावतया पृथगवस्थानाभावात्तदन्तर्गतत्वम् ; तेन प्रकारेणैक्यम्, न तु स्वरूपैक्यम् विशिष्टान्तर्भाव एवैक्यमित्यर्थः' इति पंक्त्या पृथक्सिद्ध्यनर्हसम्बन्ध-विशेषस्यैक्यरूपता स्पष्टमभिहिता । ऐक्यं चाभेदरूपमेवेति स्पष्टम् ।

### अभेदापृथक्सिद्धशब्दयोस्समानार्थकत्वम्

किंच - 'भिदिर् विदारणे' (पा.धा. 1440) इत्यनुशासनेन भिदेर्धातोर्विभागो ह्यर्थः, विभागश्च पृथक्स्थितिः तदभावो ह्यविभाग इत्यभेदापृथक्सिद्धिशब्दयोः पर्यायता हि स्फुटा । 'अविभागेन दृष्टत्वात्' (ब्र.सू.4-4-4) इत्यधिकरणे सूत्रतद्भाष्ययोः सूत्रकारभाष्यकाराभ्याम् 'अहं ब्रह्मास्मि' इति सामानाधिकरण्य-निर्देशस्य अविभागं प्रयोजकम् अभिदधद्भ्यां स्वरूपैक्यवदपृथक्सिद्धि-लक्षणैक्यस्यापि सामानाधिकरण्यनिर्देशप्रयोजकत्वम् अतिस्फुटमभाणि । न च- - अपृथक्सिद्धेरेकत्वरूपता, तादृशैकत्वस्य सामानाधिकरण्यनिर्देशप्रयोजकता च न मुख्येतिवाच्यम् ; एकशब्दव्यवहारेषु 'इह घट एकः' 'इह पट एकः' 'एकस्यामिह वेद्यां घटपटौ स्तः' इत्यादिषु स्वरूपैक्यात् अन्यादृशैक्यस्य, 'इह विद्वानेकः' 'जगत ईश्वर एकः' इत्यादिषु स्वरूपैक्यस्य च स्वरसत एव भाने सम्प्रतिपन्ने तत्र एकस्य मुख्यताया अन्यस्यामुख्यतायाश्च स्वीकारे नियामकस्य 'नीलमुत्पलम्' इत्यादौ सामानाधिकरण्यनिर्देशे स्वरूपैक्यस्य प्रयोजकतायां 'पुष्पितो वृक्षः' 'मणीलाञ्छितः पटः' इत्यादिसामानाधिकरण्यनिर्देशे स्वरूपैक्यात् अन्यादृशैक्यस्य प्रयोजकतायां च स्वरसत एव प्रतीयमानायां तत्रैकस्या मुख्यताया अन्यस्य अमुख्यतायाश्च स्वीकारे नियामकस्य च दुर्लभत्वात् अन्यथा विपरीतप्रसंगस्यापि दुर्वारत्वाच्च ।

घटपटवेद्यादीनाम् अनेकावयवसंघातात्मकानां स्वरूपैक्यं न सम्भवतीति अपृथक्सिद्धिसम्बन्धेन सम्बद्धावयवसंघातवृत्तिसमुदायत्वरूपमेकत्वमेव 'इह घट एकः' इत्याद्युदाहृतव्यवहारेषु विषयो भवितुमर्हति। स्कन्धमूलशाखापल्लवाद्यवयव-संघातात्मके वृक्षे पुष्पवदवयवव्यक्तिस्वरूपैक्यस्य स्कन्धमूलाद्यवयवान्तरेषु तन्तुसंघातात्मके पटे मषीलाञ्छनाधिकरणतन्तुव्यक्तिस्वरूपैक्यस्य शुद्धतन्तुलक्षणावयवान्तरेषु च असत्त्वाद्दर्शितसमुदायत्वविशेषलक्षणैकत्वस्यैव 'पुष्पितो वृक्षः' 'मषीलाञ्छितः पटः' इत्यादिषु सामानाधिकरण्यनिर्वाहकता दुर्वारा। समुदायघटकैकदेशे विशेषणसद्भावमात्रेण तादृशव्यवहारस्तु न सम्भवति, तथा सति 'पृथिवीजलद्वयं गन्धवत्' इत्यपि सामानाधिकरण्यव्यवहारप्रसंगात्। दर्शितसमुदायत्वविशेषलक्षणैकत्वस्यापि सामानाधिकरण्यनिर्देशनिर्वाहकत्वादेव च 'नीलं नभः' इति व्यवहारस्यापि उपपत्तिः, पंचीकरणलक्षणसम्बन्धविशेषेण सम्बद्धपदार्थसंघातवृत्तिसमुदायत्वरूपैकत्वसम्बन्धेन नीलपदार्थपार्थिवभागस्य नभः पदार्थे अन्वयसम्भवात्।

### सामानाधिकरण्यघटकसम्बन्धविशेषनिर्णयः

तथा च - तादात्म्यादिशब्दाभिलप्यैकत्वनिष्ठसंसर्गतानिरूपितविषयता-प्रयोजकत्वमेव शब्दानां सामानाधिकरण्यमिति 'अहं स पुरुषोऽस्मि' इत्यत्र पुरुषपदार्थपरमात्मन एव दर्शितलक्षणैकत्वसम्बन्धेन अहंपदार्थे धर्मिपारतन्त्र्येण अन्वयेनैव अहंपदपुरुषपदयोः सामानाधिकरण्यसम्भवात् न एकदेशान्वयप्रसंग-गन्धावकाशः। न च दर्शितरीत्या नानाविधानां तादात्म्यादिशब्दाभि-लप्यैकत्वपदार्थानां सामानाधिकरण्यलक्षणे कस्य प्रवेशः? स्वरूपाभेद-लक्षणैकत्वस्य प्रवेशे 'अहं स पुरुषोऽस्मि' इत्यादि व्यवहारेषु तदप्रसंगः, अन्यादृशैकत्वपदार्थप्रवेशे तु 'नीलमुत्पलम्' इत्यादिव्यवहारेषु तदप्रसंगश्च दुर्वार इति वाच्यम् 'कर्मणि द्वितीया' (पा.सू.2-3-2) इत्याद्यनुशासनस्य कर्मादि-संज्ञानिमित्तानां नानाविधत्वेऽपि आवृत्त्या वा कर्मसंज्ञाप्रवृत्तिनिमित्तवत्त्वेन क्रोडीकार-सम्भवाभिप्रायेण या सर्वविधकर्मसंज्ञावद्विषयत्ववत् एकशब्दप्रवृत्तिनिमित्तानां

नानाविधत्वेऽपि आवृत्त्या वा एकशब्दप्रवृत्तिनिमित्तत्वेन क्रोडीकारेण वा सामानाधिकरण्यलक्षणेऽपि तादात्म्यादिशब्दाभिलप्यसर्वविधैकत्वपदार्थप्रवेश-सम्भवेन क्षत्यभावात्।

शरीरवाचकशब्दानां शरीरिणि शक्तेः स्वीकारावश्यकता

न च ईदृशरीत्यैव तत्त्वमस्यादिसामानाधिकरण्यनिर्देशनिर्वाहसम्भवे किमर्थं शरीरवाचकानां शरीरिणि शक्तिस्स्वीकार्या, किमर्थं वा तत्साधनप्रयासो भाष्यकारैर्बहुधा कृत इति वाच्यम् ; ब्रह्मचेतनाचेतनवाचकशब्दानां सामानाधि-करण्यस्य तादृशशक्तिं विनैव निर्वाहसम्भवेऽपि 'अहम्मनुरभवं सूर्यश्च' (बृ.उ.3-4-10) 'अहं सर्वम्' (वि.पु.1-19-85) इत्यादीनां परस्परविभिन्न-चेतनाचेतनवाचिशब्दसामानाधिकरण्यनिर्देशानां 'तत्तेज ऐक्षत' (छां.उ. 6-2-3) 'ता आप ऐक्षन्त' (छां.उ.6-2-4) 'तं पृथिव्यब्रवीत्' (तै.सं.5-5-2) इत्यादि निर्देशानां देवतिर्यङ्मनुष्यादिशब्दैश्चेतननिर्देशानां च निर्वाहासम्भवेन शरीर-वाचकशब्दानां शरीरिणि शक्तेः आवश्यकत्वात् । अत्र प्रथमनिर्देशेषु परस्परविभिन्नयोः चेतनाचेतनयोः शरीरशरीरिभावस्य स्वरूपाभेदस्य वा विरहात् तद्वाचिनोश्शब्दयोःतत्तच्चेतनाचेतनशरीरकपरमात्मपरत्वमाश्रित्यैवसामानाधिकरण्यं निर्वाह्यम् । द्वितीयतृतीयनिर्देशेषु स्वयं विशेष्यपरतयैव निर्दिष्टानां तेज आदिशब्दानां देवादिशब्दानां च तथाविधशक्तिमन्तरेण निर्वाहो न सम्भवति।

एवं नामरूपव्याकरणश्रुतिबलेन सिध्यन्त्याः शरीरवाचकानां शरीरिणि शक्तेः न कथंचिदपि अपह्नवः कर्तुं शक्यः । नचैवं - प्रमाणबलात् प्रयोगप्राचुर्यबलाच्च अवर्जनीयतया अवश्यमंगीकर्तव्यया अनन्यथासिद्धया शरीरवाचकानां शरीरिणि शक्त्यैव अत्रापि निर्वाहः सम्भवति, अहंशब्दस्य स्वात्मशरीरकपरमात्मपरत्वं पुरुष-शब्दस्य यथाश्रुतपरत्वं च आश्रित्य स्वरूपाभेदलक्षणैक्यसम्बन्धेनैव पुरुष-शब्दार्थस्याहंशब्दार्थे अन्वयस्वीकारसम्भवात् कृतश्चेदृश एव निर्वाहः तत्त्वमस्यादिवाक्येषु भाष्यकारैरसकृत् एवं सति किमर्थमिह पुरुषशब्दस्य परमपुरुषात्मके शक्तिं वा स्वार्थकेवलपरमात्मनः स्वान्तर्यामिकत्वलक्षणतादात्म्य-सम्बन्धेन अहंपदार्थे जीवात्मनि अन्वयबोधौपयिकशक्तिं वा स्वीकृत्य

प्रकारान्तरेण बोधवर्णनप्रयासादरणमिति - वाच्यम् । स्वात्मनस्सर्वप्रकार-परमात्मनियाम्यत्वस्यऐकान्तिकात्यन्तिकभक्तत्वपर्यवसायिनोभगवद्दिव्यमंगलविग्रह-दर्शनाधिकारप्रयोजकतया प्राधान्येन विधेयतया ज्ञापनस्य इह अभिमतत्वेन अहंपदस्यजीवशरीरकपरमात्मपरत्वस्वीकारेविशेष्यतावच्छेदकतयैवतद्भानसिद्धया तथाविधतद्भानस्य प्राधान्येन विधेयतया यथोक्तलक्षणाधिकारप्रयोजकतया तज्ज्ञापनरूपत्वासिद्धेः । स्वात्मशरीरकपरमात्मनि आदित्यमण्डलान्तर्वर्तिविलक्षण-दिव्यविग्रहादिविशिष्टपुरुषविशेषाभिन्नत्वस्यैव प्राधान्येन विधेयतया भानेन तस्य यथोक्तलक्षणाधिकाराप्रयोजकतया तज्ज्ञापनस्य प्रकृतानुपकारकत्वाच्च। अहंपदस्य केवलजीवात्मपरत्वमाश्रित्य तद्विशेष्यकसर्वप्रकारपरमात्मनियाम्यत्व-विधेयकानुसन्धानपर्यवसायिनः स्वाधिकारज्ञापनोपकारकबोधस्यैव इह आश्रयणीयत्वेन तदर्थम् उक्तप्रयासादरणस्य आवश्यकत्वात् ।

### प्रकारवाचकस्य प्रकारिपर्यन्तशक्तिस्वीकारफलम्

चिदचिद्विशेष्यकसर्वप्रकारपरमात्मनियाम्यत्वविधेयकबोधस्य आवश्यकत्वमभि-सन्धाय चिदचिद्वाचकशब्दस्य परमात्मपर्यन्तवाचित्वस्वीकारे तादृशबोधानिर्वाहाभि-प्रायेणैव च प्रागुदाहृतेषु केषुचित् स्थलविशेषेषु चिदचिद्वाचिशब्दानां केवल-चेतनाचेतनवाचित्वं भगवद्वाचिशब्दानां भगवदात्मकपरत्वं च आश्रित्य सामानाधिकरण्योपपादनं भाष्यकारैः कृतम् । 'तत्त्वमसि' (छां.उ.6-8-7) इत्यत्रापि उक्तरीत्या त्वंपदस्य केवलजीवात्मपरत्वमाश्रित्यैव निर्वाहसम्भवेऽपि तत्प्रकरणे पूर्वमेकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तदुपपादनाय कार्यकारणयोरैक्यं स्वस्यैव बहुभवनसंकल्पपूर्वकं परस्यैव ब्रह्मणो बहुभावं च अभिधाय तदीय-बहुभावोपपादनाय स्वात्मविशिष्टप्रत्यगात्मना अचिदन्तःप्रवेशपूर्वकं परेण ब्रह्मणा स्वात्मन एव सर्वनामरूपकरणं च अभिधाय तदुपपादनस्यैव श्रुत्या प्रक्रान्तत्वात् उपसंहारस्य तदानुगुण्यसिद्धये त्वंशब्दस्य जीवशरीरकपरमात्मपरत्वमाश्रित्य सामानाधिकरण्योपपादनं भाष्यकारैः कृतम् । त्वंशब्दस्य जीवात्ममात्रपरत्वं स्वीकृत्य तत्पदस्य ब्रह्मात्मकपरत्वं स्वीकृत्य वा ब्रह्ममात्रपरत्वमाश्रित्य यथोक्तलक्षणतादात्म्यसम्बन्धेन तत्पदार्थं ब्रह्मणस्त्वंपदार्थेऽन्वयं स्वीकृत्य वा

सामानाधिकरण्योपपादने हि उपक्रमानुगुण्यमुपसंहारस्य न सम्भवति, कार्यकारणयोः स्वरूपैक्येन कारणविज्ञानेन कार्यविज्ञानसम्भवमभिप्रेत्यैव तदनुगुणदृष्टान्तप्रदर्शनपूर्वकं कारणभूतैकब्रह्मविज्ञानेन तत्कार्यकृत्स्नवस्तुविज्ञानस्यैव प्रतिपिपादयिषितत्वेन कार्यरूपत्वं पदार्थस्य तत्पदार्थब्रह्मरूपकारणस्वरूपैक्यप्रतिपादनं विना तदसिद्धेः, जीवमात्रस्य त्वंपदार्थत्वे तस्य ब्रह्मस्वरूपैक्याभावेन तत्त्वंपदार्थयोरिह स्वरूपैक्यप्रतिपादनायोगाच्च ।

शरीरशरीरिभावनिबन्धनसामानाधिकरण्यस्य निगमनम्

तदिदं सर्वमभिप्रेत्योक्तं जिज्ञासाधिकरणभाष्ये संग्रहेण सिद्धान्तोपन्यासघट्टे भाष्यकारैः - एवं सर्वावस्थावस्थितचिदचिद्वस्तुशरीरतया तत्प्रकारः परमपुरुष एव कार्यावस्थकारणावस्थजगद्रूपेणावस्थित इतीममर्थं ज्ञापयितुं काश्चन श्रुतयः कार्यावस्थं कारणावस्थं च जगत् स एव इत्याहुः 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छां.उ.6-2-1) 'तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत' (छां.उ.6-2-3) इत्यारभ्य 'सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः' (छां.उ.6-8-4) 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' (छां.उ.6-8-7) इति । अत्र हि भाष्ये कार्यावस्थ-कारणावस्थजगद्रूपेणावस्थितपरमपुरुषपरताम् अस्याः श्रुतेः अभिदधानैः भाष्यकारैः उपक्रमानुगुण्याय कार्यावस्थाचिद्विशिष्टचिच्छरीरकब्रह्मपरत्वमेव त्वंपदस्य वक्तव्यमिति स्फुटीकृतम् । तथा च 'तत्त्वमसि' (छां.उ.6-8-7) इति श्रुतौ तत्रत्यप्रकरणानुगुण्येन त्वंपदस्य अचिद्विशिष्टजीवशरीरकपरमात्मपरत्वेऽपि प्रकृतस्थले - 'अहं स पुरुषोऽस्मि' इत्यत्र अहंपदस्य जीवात्ममात्रपरत्वमेव स्वीकृत्य पुरुषपदस्य परमपुरुषात्मकपरत्वं वा यथोक्तलक्षणतादात्म्यसम्बन्धेन पुरुषपदार्थपरमात्मनः तत्र अन्वयं वा आश्रित्यैव [1]निर्वाहः कार्यः, तथा सत्येव यथोक्तलक्षणस्वाधिकारविशेषज्ञापनसिद्धेः इति बोध्यम् ।

1. 'निर्वाहः कार्यः' इति - महता प्रबन्धेनात्र श्रीरंगाचार्यैरुत्थापिते वादे किंचिदस्ति वक्तव्यम् ।
शरीरवाचिशब्दाना शरीरिणि पर्यवसानमिति सिद्धान्ते येन सम्बन्धेनागीकृतम् - तेनैव पृथक्सिद्ध्यनर्हसम्बन्धविशेषेण तदात्मकत्वरूपविशिष्टैक्यशब्दाभिलप्येन सामानाधिकरण्यनिर्वाहकेण, शरीरिवाचिनामपि शरीरपर्यवसायित्वं सुघटमिति कृतं निरूपणं अदसीयं नवीनमिव भायात् । अत्र एतैः प्रमाणितानां श्रीभाष्यकारादिसूक्तीनां फलितार्थकथनरूपत्वेन अन्यथासिद्धिं भावयद्भिः जातिगुणादिवत् अपृथक्सिद्धविशेषणतैव शरीरवाचिना विशेष्यशरीरिपर्यवसायित्वे तन्त्रमिति दर्शनात् विशेष्यपरमात्मवाचिना न तदात्मकविशेषणपर्यवसायिता इति कृतः यः प्रत्याक्षेपः, न तत्र दृढं विनिगमकं किंचित् पश्यामः । उक्तं हि अपृथक्सिद्धविशेषणत्वं तथा इति चेत्-, विशेषणविशेष्यभावस्य वैवक्षिकत्वात् अपृथक्सिद्धिसम्बन्धमात्रस्य तत्र तन्त्रत्वेन स्वीकरणौचित्यात्, तावता

### व्याख्यानान्तरापेक्षया स्वव्याख्यायाः श्रेष्ठता ।

[1]एतेन - 'अहं' शब्दोऽत्र जीवद्वारा परमात्मपर्यन्त इति अहंशब्दस्य परमात्मपर्यन्तपरत्वाभिधानं, तथात्वास्वीकारे 'ब्रह्मात्मकोऽहमस्मि' इति परविद्यांगभूतस्वात्मानुसन्धानपरत्वेऽपि तच्छब्देन तादधीन्यादिकं लक्षणीयं स्यात् इत्यभिधानं च वेदान्ताचार्यतदनुयायिनामयुक्तमेव इति सिद्धम्, अहंशब्दस्य जीवशरीरक-परमात्मपरत्वाश्रयणे प्रकरणविवक्षितार्थस्य प्राधान्येन विधेयतया बोधनासिद्धेः प्रागुपदर्शितत्वात्, स्वस्मिन् परमात्मशरीरभावस्य सर्वप्रकारपरमात्मनियाम्यत्वादिलक्षणविवक्षितार्थरूपस्य पुरुषशब्देन ब्रह्मात्मकपरेण यथोक्तरीत्या शक्त्यैव बोधनसिद्धेः तत्र लक्षणाविरहस्य च प्रागुपपादितत्वात्, तत्र लक्षणप्रसंगाभिधानस्य गीताभाष्यतात्पर्यचन्द्रिकायां - 'क्षेत्रज्ञं चापि मां विद्धि' (भ.गी.13-2) इत्यत्र 'माम्' इत्यस्य मदात्मकम् इत्यर्थपरत्वमाश्रित्य भाष्यकारैः व्याख्यातस्य सामानाधिकरण्यनिर्देशस्य मुख्यताप्रतिपादकस्वोक्तेरेव विरुद्धत्वाच्च ।

### पुरुषशब्दस्य परमात्मपरत्वम्

अत्रत्यपुरुषशब्दो न स्वात्मरूपजीवपरो भवितुमर्हति, विप्रकृष्टवाचि अदश्शब्देन सूर्यमण्डलान्तर्वर्तिपुरुषपरामर्शात्, 'हिरण्मयेन' (ई.उ.15) इत्यादिमन्त्रे माध्यन्दिनपाठे

---

चेतनाचेतनविशेष्यकब्रह्मात्मकत्वप्रकारकबोधोपयोगितया शरीरपरमात्मवाचिशब्दानां सामानाधिकरण्येन तदर्थपरत्वेऽपि न क्षतिरिति भाव्यम् । किंच - श्रीभाष्यकारैः गीताभाष्ये 'मां' इत्यस्य मदात्मकं इत्यर्थकथनवत् कठवल्लीगतस्य 'ब्रह्मजज्ञं देवमीड्यं विदित्वा' इत्येतन्मन्त्रस्य व्याख्यानावसरे 'विशेषणाच्च' इत्येतत्सूत्रभाष्ये 'ब्रह्मजज्ञो जीवः । ब्रह्मणो जातत्वात् ज्ञात्वाच्च । तं, देवं विदित्वा - जीवात्मानमुपासकं ब्रह्मात्मकत्वेन अवगम्येत्यर्थः' - इत्यपि अनुगृहीतमवधेयम् । अत्रापि हि ब्रह्मवाचिदेवशब्दस्य जीववाचिज्ञशब्दसमानाधिकरणस्य ब्रह्मात्मकत्वपरत्वेन अर्थवर्णनं स्पष्टम् ।

एवं श्रीरंगरामानुजार्यैरपि कठवल्ल्यां (4-7) 'एतद्वैतत्' इत्यत्र ब्रह्मवाचिनः तच्छब्दस्य 'तदात्मकं' इत्यर्थमुक्त्वा, ततः श्रीभाष्यगीताभाष्यसूक्तिद्वयं च निदर्शनीकृत्य अन्ते एवमुक्तम् - यथा '------ इति श्रीभाष्यकृतैव व्याख्यातत्वात्, अपृथक्सिद्धविशेषणवाचिशब्दस्य विशेष्ये इव, अपृथक्सिद्धविशेष्यवाचिशब्दस्यापि विशेषणे निरूढत्वात्, तत् तदात्मकम् - इत्यर्थो युक्तः इति । अतोऽत्र श्रीरंगाचार्यभाष्योपरि परकृतं प्रत्यवमर्शनं न स्थाने । निदर्शितविविधश्रीभाष्यकारोक्ति-श्रुतप्रकाशिकासूक्ति-स्पष्टतरश्रीरंगरामानुजार्योक्तिभिः प्रतिष्ठापितस्य अत एव साम्प्रदायिकस्य अस्यार्थस्य परिग्रहात्वे क्षतिविरहात् ।

1. 'एतेन - अयुक्तमेव ' इति । एवं 'तत्त्वमसि' इत्यादाविव प्रकृतेऽपि जीववाचिनः अहंशब्दस्यैव तच्छरीरकब्रह्मपर्यन्तत्वाश्रयणेन श्रीदेशिकादिनिरूपितार्थवर्णनेनापि उपासके जीवे तच्छरीरत्वकृततन्नियाम्यत्वरूपाभिप्रायसिद्धेः निष्प्रत्यूहत्वेन, श्रीरंगाचार्यकृतं तद्व्याख्यादूषणमपि न रोचयामहे । अत्र मन्त्रगतचतुर्थपादावतारिकात्वेन 'अथ अन्तरात्मनोऽहंग्रहेण अनुसन्धानमाह' इति विलिखितश्रीदेशिकसूक्त्यापि भवदभिप्रायस्य अर्थात्सिद्धया न तद्दूषणौचित्यम् । अहंग्रहेणोपासनं हि स्वस्मिन् तन्नियाम्यत्वपर्यवसितपारतन्त्र्यप्रदर्शनपरमेवेति तन्मुखेनापि भगवद्दिव्यरूपदर्शने स्वाधिकाराविष्करणसिद्धेः ।

'योऽसावादित्ये पुरुषस्सोऽसावहम्' इति सूर्यमण्डलान्तर्वर्तिपुरुषपरतायाः स्पष्टत्वेन तदैककण्ठ्येन अत्रापि तादृशपुरुषपरताया दुर्वारत्वाच्च । नापि आदित्यसूर्यादि-शब्दाभिलप्यजीवविशेषपरः, 'यत्ते रूपं कल्याणतमं तत्ते पश्यामि' इत्यनेन - 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते। हिरण्मश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः । तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम । स एष सर्वेभ्यः पाप्मभ्यः उदितः' (छा.उ.1-6-6,7) इति श्रुत्युक्तविलक्षणरूपवत्त्वज्ञापनेन तादृशरूपवत्पुरुषविशेषपरतायाः प्रत्यभिज्ञाप्यमानत्वात्, तादृशरूपवत्पुरुषस्य च पुण्डरीकाक्षत्वापहतपाप्मत्वादिधर्मैः परमपुरुषरूपतायास्स्पष्टत्वात्, 'अन्तस्तद्धर्मोप-देशात्' (ब्र.सू.1-1-21) इत्यधिकरणे सूत्रकारेण तस्य जगत्कारणपरब्रह्मलक्षणपरम-पुरुषरूपतायाः स्थापितत्वात्, 'हिरण्मयेन' (ई.उ.15)इत्यादिमन्त्रे माध्यन्दिनपाठे 'ओं खं ब्रह्म' इति वाक्यशेषेण एतत्प्रकरणविवक्षितादित्यमण्डलान्तर्वर्तिपुरुषस्य आकाशवत्सर्वव्यापिप्रणववाच्यपरब्रह्मरूपतायास्स्पष्टमेव श्रवणेन तदैककण्ठ्येनापि तत्सिद्धेः दुर्वारत्वाच्च। अतोऽत्रत्यपुरुषशब्दः परमपुरुष पर एव। तस्माद्यथोक्तरीत्या 'अहं स पुरुषोऽस्मि' इत्यत्र अहंपदस्य केवलजीवात्मपरत्वमेवाश्रित्य पुरुषपदस्य पुरुषात्मकपरत्वं दर्शितलक्षणतादात्म्यविशेषरूपैत्यसम्बन्धेन पुरुषपदार्थ-परमात्मनोऽहंपदार्थप्रत्यगात्मनि अन्वयं वा स्वीकृत्य अहंपदार्थप्रत्यगात्मविशेष्यकस्य सर्वप्रकारपरमात्मनियाम्यत्वादिलक्षणशरीरत्वविधेयकस्य तत्सम्बन्धेन परमात्म-विधेयकस्य वा बोधस्यैव कल्याणतमदिव्यरूपसाक्षात्काराधिकारज्ञापनपर्यवसायिन-स्स्वीकार आवश्यक इत्यलं विस्तरेण ।।

## आनन्दभाष्यम्

एवं परमात्मदृष्टिप्रतिबन्धकचित्तावरणनिराकरणाय प्रार्थनाप्रकारमुपदिश्य परमकृपालुराचार्यः भगवतः कल्याणतमरूपदर्शनप्रतिबन्धकतदीयोग्ररश्मिसंहरणाय दर्शनौपयिकं सौम्यरश्मिसंग्रहणाय च प्रार्थनामुपदिशति - पूषन्नेकर्षे इति ।

**भगवत्कल्याणरूपसन्दर्शनप्रार्थना**

हे **पूषन्** - आश्रितपोषणस्वभाव ! यद्वा सर्वशरीरकत्वेन सर्वैः शब्दैः परमात्मनः वाच्यत्त्वात् हे पूषन् एतच्छब्दवाच्येत्यर्थः । **एकर्षे** - एकः अद्वितीयः

ऋषिः अतीन्द्रियार्थद्रष्टा तत्सम्बुद्धौ एकर्षे सर्वप्रकारेण सर्वस्मिन् काले सर्ववस्तुसाक्षात्कारसमर्थेत्यर्थः । यम - यमयति अन्तःप्रविश्य सर्वानिति यमः । तत्सम्बुद्धौ यम! सर्वान्तर्यामिन् इत्यर्थः । सूर्य - सुष्ठु ईरयति प्रेरयति स्वाश्रितानां बुद्धिं यः स सूर्यः । तत्सम्बुद्धौ सूर्य ! स्वोपासकजनबुद्धियोगदायिन् इत्यर्थः । 'ददामि बुद्धियोगं तम्' (भ.गी.10-10) इति हि भगवतैव गीतम् । प्राजापत्य - प्रजानां पतिः प्रजापतिः स प्रजापतिः एव प्राजापत्यः तत्सम्बुद्धौ प्राजापत्य ! स्वार्थे ष्यञ् । हे विष्णो विश्वस्वामिन् इत्यर्थः । 'प्रजापतिश्चचरति गर्भे अन्तः' (पु.सू) इति श्रुत्या भगवतोऽपि प्रजापतित्वावगमात् । यद्वा प्रजापतिश्चतुर्मुखः तस्यापत्यानि प्राजापत्याः तेषामन्तर्यामिन् इत्यर्थः । रश्मीन् - स्वकीयदिव्यशरीरगतान् उग्रान् किरणान् दर्शनप्रतिबन्धकान् व्यूह - उपसंहर । तेजः - भवदीयदिव्यदर्शनोपयुक्तं प्रभारूपं तेजः समूह - एकत्रीकुरु ।

कस्मै प्रयोजनाय उग्ररश्मीनाम् उपसंहरणं सौम्यतेजसः पुंजीकरणं च प्रार्थयसे इत्याकांक्षायां प्रयोजनं वदति, यत्ते ते - तव निरतिशयानन्दरूपस्य ब्रह्मणः यत्कल्याणतमं - निरतिशयलावण्यादिगुणोपेततया अतिशयितकल्याणं सर्वातिशायि-मंगलावहं रूपं दिव्यशरीरम् 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' (छा.उ.1-6-6) 'यदा पश्यः पश्यते रुक्मवर्णम्' (मुं.उ. 3-1-3) 'आदित्यवर्णं तमसः परस्तात्' (पु.सू) इत्यादिषु श्रुतिषु प्रसिद्धम् इत्यर्थः, तत् श्रुतिप्रसिद्धं ते तव रूपं दिव्यमंगलविग्रहात्मकं पश्यामि - पश्येयम् । छान्दसत्वात् लिङर्थे लट् । भवदीयदिव्यरूपदर्शनोत्कटेच्छयैव एतत्प्रार्थये इति भावः।

ननु पात्रभूतमेव जनं स्वकल्याणतमरूपं दर्शयामि । न सर्वमित्याशंकायां स्वस्य पात्रत्वं परमपुरुषम् अन्तर्यामितयाऽनुसन्धाय प्रदर्शयति - योऽसौ पुरुषः सोऽसौ अहमस्मीति । योऽसौ पुरुषः- 'तेनेदं पूर्णं पुरुषेण सर्वम्' (तै.ना.85) 'पुरुष एवेदं सर्वम्' (पु.सू) इत्यादिषु श्रुतिषु प्रसिद्धः सर्वव्यापितया सोऽसौ अहमस्मि - अस्मात् शब्दस्य अस्मदर्थान्तर्यामिपरत्वेन श्रुतिप्रसिद्धः पुरुषः मदन्तर्यामीत्यर्थः ।

अत्र अहंशब्देन परमपुरुषरूपोऽन्तर्यामी अनुसंहितः । तेन स्वातन्त्र्यभ्रमनिवृत्तिः सूचिता, तथा च त्वत्परतन्त्रोऽहम् तव कृपायोग्यतया पात्रभूत एवेति कृपावत्सलेन त्वया मह्यं स्वदर्शनं दातव्यमिति प्रार्थना फलिता भवति ।

ननु 'सोऽसौ अहमस्मि' इत्यत्र अहं पदस्य अस्मदर्थान्तर्यामिपरत्वे सशब्दस्यैव विशेष्यत्वात् तत्र उत्तमपुरुषप्रयोगः कथं घटतेति न शंकनीयम् । 'अधिकं प्रविष्टं न तु तद्धानिः' इति न्यायेन अन्तर्यामिरूपस्य अधिकस्यार्थस्य प्रवेशेऽपि अस्मच्छब्दार्थस्य लोकप्रसिद्धस्य प्रत्यगर्थरूपस्याऽक्षतेः उत्तमपुरुषप्रयोगस्य निराबाधत्वात् । उत्तमपुरुषविधाने 'अस्मद्युत्तमः' (पा.सू.1-4-107) इति सूत्रस्य प्रत्यगर्थ-बोधकास्मच्छब्दरूपोपदमात्रापेक्षणात् ।।

## सुबोधिनी

एवं परमात्मसाक्षात्काराय मनसो नैर्मल्यप्रार्थनमुक्तम् । अथ निर्मलेऽपि मनसि तदीयदिव्यमंगलविग्रहतेजोराशेर्दुष्प्रेक्षतया तदेकदर्शनलालसस्य परमात्मभक्तस्य दुष्प्रेक्षोग्रतरतेजोराशेः उपसंहरणार्थः प्रार्थनाप्रकार उच्यते - पूषन् इति ।

**दुष्प्रेक्षतेजोराशेरुपसंहरणार्थप्रार्थना**

**पूषन्** - सर्वशरीरत्वात् सर्वशब्दवाच्यत्वेन पूषन्नित्युक्तिः ।

यद्वा - **पूषन्** - आश्रितपोषक ! **एकर्षे** - ऋषिरतीन्द्रियदर्शी ; एकर्षिः-अद्वितीयोऽतीन्द्रियदर्शी, सर्वं सर्वतः सर्वदा स्वयं साक्षात्कर्तुम् क्षम इति यावत् । यमयतीति यमः, सर्वमन्तःप्रविश्य नियमयसीत्येतत् । **सूर्य** - सुष्ठ्वाश्रितानां धियम् ईरयति यः तस्य सम्बुद्धिः, 'ददामि बुद्धियोगं तम्' (भ.गी. 10-10) इति स्मरणात् । **प्राजापत्य** - स्वार्थे ष्यञ्, हे प्रजापते ! 'पतिं विश्वस्य' (तै.ना.92) इति श्रुतेः । **रश्मीन्**-भवदीयदिव्यदेहरश्मीन् **व्यूह** - क्षणमात्रमुपसंहर, वयम् असमर्थाः तद्दर्शने इति भावः । **यत्तेजः** - अस्मन्नयनसुखावहं तत्समूह - पुंजीकुरु । **यत्कल्याणतमं ते रूपम्**-सकलमंगलावहं ते रूपम्, तत्पश्यामि - पश्येयमित्यर्थः । छान्दसः प्रयोगः।

कोटिसूर्यप्रकाशवत् अत्युग्रं तेज उपसंहृत्य मादृशजनदर्शनक्षमं सौम्यं तेजः स्वीकृत्य दिव्यामृतमत्याह्लादकं दिव्यरूपं मम लोचनसात्कुरु इति भावः । ईदृशो दिव्यतेजसि प्रणष्टदृष्टयः कतिचन भगवत्प्रसादविमुखा अविग्रहं भगवन्तम् आहुः । श्रुतिस्तु जागर्ति, या भगवतः परब्रह्मणो दिव्यरूपं बोधयति । 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः' (छां.उ.1-6-6)'रुक्माभंस्वप्नधीगम्यम्'(म.स्मृ.12-122)'आत्मैवेदमग्रआसीत्पुरुषविधः' (बृ.उ.3-4-1) 'आदित्यवर्णं तमसस्तु पारे' (पु.सू.तै.आ.3-12-16) 'सर्वकर्मा सर्वगन्धः सर्वरसः' (छां.उ.3-14-2) 'यदा पश्यः पश्यते रुक्मवर्णम्' (मुं.उ.3-1-3) इति।

**योऽसौ पुरुषः अहं सोऽसावस्मि -** सकलजगद्व्यापकत्वेन यः पुरुषः उक्तः सोऽहमस्मि। एतेन स्वातन्त्र्यभ्रमनिवृत्तिरुक्ता। एवं त्वत्पारतन्त्र्यानुसन्धानयुक्ताय मह्यं कल्याणतमं रूपं दर्शय इति भावः ।

यद्वा - योऽसौ पुरुषः 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः' (छां.उ.8-7-1,3) इति स्वाभाविकरूपेण श्रूयमाणः पुरुषः प्रत्यगात्मा सोऽहमस्मि इत्यर्थः । एतेन देवाद्याकारभ्रमनिवृत्ति-पूर्वकपरिशुद्धात्म-स्वरूपानुसन्धानमुक्तम्। तदेवं प्रकृतिविविक्तात्मज्ञानवते मह्यं पात्रभूताय दिव्यरूपं दर्शयेति भावः ।।

* * * * * *

## सप्तदशो मन्त्रः

वायुरनिलममृतम्-अथेदं भस्मान्तँ शरीरम् ।
ओं कृतो स्मर कृतँ स्मर-कृतो स्मर कृतँ स्मर ।। 17 ।।

## प्रतिपदार्थदीपिका

कृतुस्वरूपे भगवति प्रारब्धपापनिवृत्तिपूर्वकरक्षणप्रार्थना

शरीरेन्द्रियादिभ्यो विविक्तं स्वात्मानं प्रथमं विशोध्य विशुद्धस्वरूपं ब्रह्मणि समर्प्य स्वाधिकारानुगुणं प्रार्थयते - वायुः इति ।

सर्वत्र वाति-गच्छति इति वायुः- अनेन अणुपरिमाणत्वं सिद्धं जीवस्य । **अनिलम्**- क्वचिदपि व्यवस्थितत्वाभावात् अनिलम् **अमृतम्** - मृतिरहितम्, तथा च परिशुद्धजीवः अमृतत्वाणुत्वापहतपाप्मत्वादिगुणविशिष्ट इत्यर्थः ।

अथ शरीरस्य मृतत्वं चाह - अथ - जीवोत्क्रमणानन्तरम् इदं **शरीरं भस्मान्तम्**- भस्मादिसंज्ञकम्, विट्क्रिम्यादिसंज्ञकं भवतीत्यर्थः । **ओं कृतो स्मर** - ओं-प्रणव-शब्दवाच्य **कृतो** - कृतुस्वरूप, यद्वा **कृतो** - भक्तियोगगोचर **स्मर** - अनुग्रहबुध्या मां विषयीकुरु, **कृतं स्मर** । कृतम् - मत्कृतम् आनुकूल्यादिकं यत्किंचित् तत्सर्वम् स्मर कृतज्ञत्वमनुसन्धाय मां रक्ष इत्यर्थः । **कृतं स्मर** - प्रारब्धकर्मभिः काष्ठ-पाषाणवत् कृतं मां स्मर 'अहं स्मरामि मद्भक्तं नयामि परमां गतिम्' ( वरा.च.श्लो.) इतिवत् स्मृत्वा रक्ष इति भावः ।।

## वेदान्ताचार्यभाष्यम्

वायवादिशब्दानां प्रत्यगात्मपरत्वम्

अनन्तरं तु परिशुद्धात्मस्वरूपमुच्यते वायुरनिलममृतम् इति ।

विद्याकर्मानुसारेण तत्र तत्र गन्तृत्वात् वायुः । निलयनरहितत्वात् क्वचिदपि व्यवस्थितत्वाभावाच्च, अनिलम् । अमृतम् - म्रियमाणेऽपि देहसन्ताने स्वयममृतम् ।

इदं विजरत्वादीनामपि उपलक्षणम् ; परिशुद्धजीवविषये 'प्रजापतिवाक्ये' 'विजरो विमृत्युर्विशोकः' ( छां.उ.8-7-1) इत्यादि सहपाठात् ।

अत्र 'वायुश्चान्तरिक्षं चैतदमृतम्' (बृ.उ.4-3-3) इत्यादिपरामर्शात् वाय्वादि-शब्दानां भूतद्वितीयविषयत्वं न शंकनीयम् ; पूर्वापराभ्याम् असंगतेः । यद्यप्यमीषां परमात्मविष्यत्वं विशिष्टवृत्या योगतो वा युज्यते, तथापि वरमिह नश्वरस्य देहस्य अनन्तरं वचनात् तद्व्यावृत्तप्रत्यगात्मपरत्वम् ; प्राणविषयत्वेऽपि अत्र मन्दं प्रयोजनम् ।

श्वेताश्वतरीयाश्च भोग्यभोक्तृनियन्तॄणां विवेचने भोक्तृशब्दविवक्षितप्रत्य-गात्मानम् अमृतशब्देन आमनन्ति -

'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः ।' (श्वे.उ.1-10) इति
'क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याऽविद्ये ईशते यस्तु सोऽन्यः।' (श्वे.उ.5-1)

इति च ।

**क्षराऽमृतशब्दवाच्यौ शरीरशरीरिणौ**

एवं प्रत्यगात्मस्वरूपस्य 'न जायते म्रियते वा विपश्चित्' (क.उ.2-18) इत्यादिप्रसिद्धम् अमृतत्वमभिधाय क्षेत्रज्ञशरीरस्य 'मृतत्वम् अवश्यम्भावीत्याह - **अथेदं भस्मान्तं शरीरम्** इति ।

प्रकृतादर्थात् अर्थान्तरविवक्षया अत्र अथशब्दः, आत्मोत्क्रमणानन्तर्यार्थो वा, कर्मवश्यकात्स्न्र्यपरो वा । तथा च स्मर्यते -

गंगायां सिकताधारा यथा वर्षति वासवे ।
शक्या गणयितुं लोके न व्यतीताः पितामहाः ।। (द.स्मृ.)

इति, 'ब्रह्मादिषु प्रलीनेषु' (परा.स्मृ.) इत्यादि च ।

इदम् इति विशेषणम् ईश्वरशरीरत्वेन नित्यत्वेन च प्रमाणसिद्धानां व्यवच्छेदार्थम् । भस्मान्तम् इति संस्कारमात्रव्यंजकम् । कीटान्तत्वादेरन्यत्र प्रसिद्धस्य उपलक्षणं वा । [1]शरीरशब्दे व्युत्पत्तिनिमित्तानुसारेण विशरणस्वभावत्वं गम्यते ।

1. शरीरशब्दे व्युत्पत्तिनिमित्तेति - शीर्यते इति शरीरमिति व्युत्पत्त्या इह विशरणशालित्वं प्रकरणानुसारतो ग्राह्यम् । अस्मत्सिद्धान्तानुसारेण आधेयत्वविधेयत्वशेषत्वादिकं यत् शरीरशब्दप्रवृत्तिनिमित्तं न तदिह ग्राह्यम्-प्रकृतानुपयोगात् । शब्दानां अन्यच्च व्युत्पत्तिनिमित्तं, अन्यदेव च प्रवृत्तिनिमित्तम् । यथा - गच्छतीति गौरिति गोशब्दस्य गमनशालित्वं व्युत्पत्तिनिमित्तमेव । न तत्-प्रवृत्तिनिमित्तम् । शयाने गवि तत्प्रयोगाभावप्रसंगात् । अतः सास्नादिमत्त्वरूपजातिरेव प्रवृत्तिनिमित्तमिति सर्वसंप्रतिपन्नम् । उक्तं हि वाक्यपदीये 'न हि गौः स्वरूपेण गौः नाप्यगौः गौत्वाभिसम्बन्धात्तु गौः' इति । अतः प्रकृते शरीरशब्दस्य व्युत्पत्तिनिमित्तग्रहणोक्तिरिति भाव्यम् ।।

## परमात्मनः प्रणववाच्यत्वम्

एवं 'भोक्ता भोग्यं प्रेरितारं च मत्वा' (श्वे.उ.1-12) इति क्रमेण चिदचिद्विवेकमुक्त्वा प्रेरितारं प्रकृतं महापुरुषं प्रणवेन उपादत्ते ओम् इति। यथा आमनन्ति आथर्वणाः - 'यः पुनरेतं त्रिमात्रेण ओमित्येतेनैवाक्षरेण परमपुरुषमभिध्यायीत' (प्र.उ.5-5) इति। उक्तं च योगानुशासने [1]'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः', 'स पूर्वेषामपि गुरुः कालेनानवच्छेदात्', 'तस्य वाचकः प्रणवः' (पा.यो.सू. 1-24,26,27) इति। आह च [2]सर्वज्ञः 'ओमित्येवं सदा विप्राः पठध्वं ध्यात केशवम्' (हरिवं.वि.133-10) इति। स्वयं च अगायत् 'ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्' (भ.गी.8-13) इति। एवं सर्वत्र दृष्टव्यम्।

अथ क्रतुरूपिणं भगवन्तं ज्ञानयज्ञगोचरम् अभिमुखीकुर्वन् तदनुग्रहं याचते क्रतो स्मर कृतं स्मर इति। क्रतो! क्रत्वात्मक! यथाऽऽह 'अहं क्रतुरहं यज्ञः' (भ.गी.9-16) इति। 'यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति, सक्रतुं कुर्वीत' (छा.उ.3-14-1) 'एवं क्रतुर्हि' (अग्नि.र.1-10-6) इत्यादिष्विव अत्रापि [1]प्रकरणादेव क्रतुशब्दः उपासनपरो वा, तद्गोचरे तु भगवति तच्छब्दः उपचारात्।

स्मर - सानुग्रहया बुद्ध्या विषयीकुरु, 'स्नेहपूर्णेन मनसा यन्नः स्मरसि केशव' इतिवत्। उक्तं च भगवता [3]'स्थिते मनसि' (वरा.च.श्लो.) इत्यारभ्य -

---

1. क्लेशकर्मेति - इदं योगसूत्रम्। क्लेशाः अविद्या-अस्मिता-रागः-द्वेषः-अभिनिवेशश्च-इत्यमी पंच जीवं क्लेशयन्तीति क्लेशहेतुत्वात् क्लेशत्वोक्तिः। कारणे कार्यशब्दोपचारः। आयुर्वै घृतमितिवत्। कर्माणि च-धर्माधर्महेतुभूतानि सत्याहिंसादीनि। अत्रापि पूर्ववदुपचारः। तज्जन्यं फलं विपाकः। स च जन्म-आयुः-सुखदुःखभोगरूपः। तदनुगुणाश्च तत्तदात्मनिष्ठाः वासनाख्यसंस्काराःआशयशब्देनोच्यन्ते। एतैः अपरामृष्टः - वियुक्तः ईश्वर इति प्रथमसूत्रार्थः। स ईश्वरः पूर्वेषां हिरण्यगर्भादियोगप्रवर्तकानामपि गुरुः। प्रथमोपदेष्टा। कालानवच्छेदात्। हिरण्यगर्भाद्यास्तु शतायुष्ट्वादिरीत्या कालावच्छिन्नाः। ईश्वरस्तु न तथेति सर्वगुरुत्वम्। इति द्वितीयसूत्रार्थः। तृतीयं सूत्रं तु स्पष्टार्थम्।

2. सर्वज्ञः इति - शंकर इत्यर्थः। कोशात् - 'ईश्वरात् ज्ञानमन्विच्छेत्' इत्यादिव्यवहाराच्च। स हि दिव्यसूरिभिरपि 'नुणुउणर्विल नीलार् कण्डत्तम्मान्' इत्यादिना सूक्ष्मज्ञानविशेषवत्तया प्रशस्यते।

3. 'स्थिते मनसि' इति। अयमत्र पूर्णः श्लोकः - यथा -

'स्थिते मनसि सुस्वस्थे शरीरे सति यो नरः।
धातुसाम्ये स्थिते स्मर्ता विश्वरूपं च मामजम्॥ इति।

'ततस्तं म्रियमाणं' इत्यादिः एतदनन्तरश्लोकः उपरि व्याख्यायामेव दृष्टः। श्लोकयुग्ममिदं संहत्य वराहचरमश्लोकतया ख्यातम्।

---

1.प्रकरणात्। एवं - क.

'ततस्तं म्रियमाणं तु काष्ठपाषाणसन्निभम् ।
अहं स्मरामि मद्भक्तं नयामि परमां गतिम्' ।। (वरा.च.श्लो.)

इति । सर्वदा सर्वं साक्षात्कुर्वतः स्मर्तृत्ववचनमिह पूर्वकृतप्रत्यवेक्षणाभिप्रायम् ।

कृतं स्मर - इत्यत्रापि तथैव विवक्षा । मत्कृतं यत्किंचिदनुकूलमनुसन्धाय कृतज्ञस्त्वं मां रक्ष इति भावः । [1]एतावदन्तं त्वत्कृतमानुकूल्यं प्रतिसन्धाय त्वमेव शेषपूरणं कुर्विति वा । स्मरन्ति हि 'जायमानं हि पुरुषम्' ( म.भा.शां.358) इत्यादि । स्वयमप्याह - 'तेषां सततयुक्तानाम्' (भ.गी.10-10) इत्यादि । 'कृतो स्मर कृतं स्मर' इत्यावृत्तिः, उक्तार्थे त्वरातिशयात् ।।

## ईशावास्यप्रकाशिका

एवं परावरतत्त्वविवेकपरमनिश्श्रेयससाधनभूतसांगभक्तियोगं तन्निष्ठस्य अनुसन्धेयमन्त्रद्वयं च उपदिश्य इदानीं भक्तियोगे ज्ञानशक्त्यादिशून्यतया शरणागतिमवलम्बमानानां तदनुष्ठानमन्त्रौ उपदिशति ।

### शरणागतिपरतया मन्त्रविवरणम्

[1]यद्यप्यागमे आचार्यैः इमौ शरणागतिमन्त्राविति रहस्यत्वात् कण्ठरवेण नाऽभिहितौ ; तथापि प्राज्ञानाम् अर्थसामर्थ्यात् यथा तत्परत्वावगमः सुशकः ; तथा तयोः श्लोकयोः अर्थवर्णनं कृतम् । अभाषि च इत्थमन्ते -

'व्यक्ताव्यक्ते वाजिना संहितान्ते व्याख्यामित्थं वाजिवक्त्रप्रसादात् ।
वैश्वामित्रो विश्वमित्रं व्यतानीद्विद्वच्छात्रप्रीतये वेंकटेशः।। ( ई.उ.वे.भा.18)

इति । अत्र 'विद्वच्छात्रप्रीतये' इत्यनेन स्वप्रबन्धस्य निगूढाभिप्रायत्वं व्यंजितम् ।

एवमाचार्याभिप्रायविषयत्वात् शरणागतिपरतया मन्त्रद्वयं व्याख्यास्यते । तत्र 'वायुरनिलम्' इति प्रथमश्लोकः [2]पूर्वखण्डसमानार्थकः । 'अग्ने नय' (ई.उ.18) इत्यादिश्च अपरश्लोक उत्तरखण्डसमानार्थकः । तथा च -

---

1. आगमे अचार्यैः इति । श्रीमद्वेदान्ताचार्यैः स्वविरचिते ईशावास्यभाष्ये प्रकृतमन्त्रस्थले - इत्यर्थः ।
2. 'पूर्वखण्ड-उत्तरखण्ड' इति । अत्र पूर्वोत्तरखण्डशब्दाभ्यां पूर्वोक्तयराहचरमश्लोकयुग्मे पूर्वः उत्तरश्च श्लोकः विवक्षितः ।

1. एतावन्त - क.

'प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः ।
प्राप्त्युपायं फलं प्राप्तेस्तथा प्राप्तिविरोधि च' ।। (हा.सं.)

इत्येवमाद्याः पूर्वोत्तरखण्डयोर्विशोधिता ये पदार्थाः, ये च वाक्यार्थभेदाः, ते सर्वेऽपि इह पूर्वोत्तरयोः श्लोकयोः अनुसन्धेयाः ।

**ब्रह्मणि आत्मसमर्पणम्**

[1]'सर्वोपायविनिर्मुक्तं क्षेत्रज्ञं ब्रह्मणि न्यसेत् ।
एतज्ज्ञानं च योगश्च शेषोऽन्यो ग्रन्थविस्तरः' ।। (द.स्मृ.)

इत्यादिशास्त्रैः प्रोक्षणादिभिः समिदादिकमिव परिशुद्धस्वरूपयाथात्म्यज्ञानेन संस्कृत्यैव आत्महविस्समर्पणीयमित्युक्तत्वात् इहापि शरीरेन्द्रियादिभ्यो विविक्तं स्वात्मानं प्रथमं विशोध्य ब्रह्मणि समर्प्य स्वाधिकारानुगुणमर्थयते - वायुः इति । 'भोक्ता भोग्यं प्रेरितारं च मत्वा' (श्वे.उ.1-12) इत्यादिश्रुत्यन्तरप्रसिद्धः चिदचिदीश्वरतत्त्वक्रमः इहापि द्रष्टव्यः । वायुः - विद्याकर्मानुगुणभगवत्संकल्पवशेन तत्र तत्र गन्तृत्वाद्वायुः अनेन जीवस्य अणुपरिमाणत्वं परमात्माधीनत्वं च सिद्ध्यति । 'वा गति-गन्धनयोः' (पा.धा.1050) इति धातुः । निलयनरहितत्वात्क्वचिदपि व्यवस्थितत्वाभावाच्च- अनिलम् । अमृतम् - म्रियमाणेऽपि देहसन्ताने स्वयममृतं स्वरूपतो धर्मतश्च अविनाशीत्यर्थः। 'अविनाशी वा अरेऽयमात्मा अनुच्छित्तिधर्मा' ( बृ.उ.6-5-14) 'न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते' (बृ.उ.6-3-30) न विद्यते उच्छित्तिः विनाशो यस्य सः अनुच्छित्तिः नित्य इत्यर्थः । अनुच्छित्तिः धर्मो यस्यासावनुच्छित्तिधर्मेति पुनर्बहुव्रीहिः । नित्यज्ञानवान् इति भावः । आहुश्च यामुनाचार्याः

'तदेव चित्स्वभावस्य पुंसः स्वाभाविकी चितिः ।
तत्तत्पदार्थसंसर्गात्तत्तद्वित्तित्वमश्नुते' ।। (आ.सि.23)

इति । इदममृतत्वम् अपहतपाप्मत्वादीनामप्युपलक्षणम्, परिशुद्धजीवविषये

---

1. सर्वोपायविनिर्मुक्तमिति । अनेन ब्रह्मणि स्वरक्षणभारविन्यासरूपशरणागतेः पूर्वं सर्वोपायविनिर्मुक्तत्वमुच्यते । 'सर्वधर्मान् परित्यज्य' इत्यस्यायमनुवादः । तत्र 'स्नात्वा भुञ्जीत' इत्यत्र स्नानस्य यथा भोजनं पूर्वांगतया विधिः, तथा सर्वोपायत्यागस्यापि शरणागतेः पूर्वांगतया विधिरेवेति केषाञ्चित् सम्प्रदायः । सर्वोपायान् परित्यज्य स्थितश्चेत् इति अनुवादमात्रं न विधिरिति अपरेषां सम्प्रदायः इति बोध्यम् ।

प्रजापतिवाक्ये, 'य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसंकल्पः' (छा.उ.8-7-1) इति पाठात् । 'अनिलममृतम्' इति पदद्वयमपि पुल्लिंगत्वेन विपरिणेयम्, वायुरिति पुल्लिंगत्वेनोपक्रमात् ।

अत्र 'वायुश्चान्तरिक्षं च एतदमृतम्' (बृ.उ.4-3-3) इत्यादिकं परामृश्य वाय्वादिशब्दानां भूतद्वितीयविषयकत्वं नाशंकनीयम् ; पूर्वापराभ्याम् असंगतेः, नापि विशिष्टवृत्त्या वायुगतपरमात्मविषयत्वम् आशंकनीयम् नश्वरस्य देहस्य अनन्तरवचनेन तद्व्यावृत्तप्रत्यगात्मपरत्वस्यैव न्याय्यत्वात् । 'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' (श्वे.उ.1-10) । स्वभोग्यतया प्रधानं हरतीति हरः जीव इत्यर्थः । 'क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः' (श्वे.उ.5-1) इति 'श्वेताश्वतरीये भोग्यभोक्तृनियन्तॄणां विवेचने अमृतशब्देन प्रत्यगात्मनोऽभिसन्धान[1]-दर्शनाच्च अत्रापि अमृतशब्दो जीवात्मपर इत्येव युक्तम् ।

एवं प्रत्यगात्मस्वरूपस्य 'न जायते म्रियते वा विपश्चित्' (क.उ.2-18) इत्यादिप्रसिद्धम् अमृतत्वमभिधाय क्षेत्रस्य शरीरस्य मृतत्वम् अवश्यम्भावीत्याह - अथेदं भस्मान्तं शरीरम् इति । प्रकृतादर्थादर्थान्तरविवक्षयात्राथशब्दः, जीवात्मोत्क्रमणानन्तर्यार्थको वा ; यद्वा कार्त्स्न्यपरः । स्मर्यते च -

'ब्रह्मादिषु प्रलीनेषु नष्टे स्थावरजंगमे ।
एकस्तिष्ठति विश्वात्मा स तु नारायणोऽव्ययः'।। ( म.भा.सभा.)

इति । भस्मशब्दो दाहाख्यसंस्कारपरः । स खननादेरपि उपलक्षकः ।अथवा 'कलेबरं विट्क्रिमिभस्मसंज्ञितम्' इत्यन्यत्र प्रसिद्धक्रिम्यन्तत्वादेरुपलक्षको भस्मान्तशब्दः । त्यागे कृते क्रव्यादभक्षितं शरीरं विट्संज्ञितं भवति ; खनने क्रिमिसंज्ञितम्, दाहे भस्मसंज्ञितमिति भावः ।

### शरीरस्य भस्मान्तोपदेशे प्रयोजनम्

ननु केषुचिच्छरीरेषु प्रत्यक्ष एव विनाशो दृष्टः ; अविनष्टेष्वपि अन्येषु अनुमानात् विनाशित्वं सुनिश्चितम् ; अन्यथा शत्रून्प्रति शस्त्रादिकं न प्रयुज्येत ; स्वयमपि शत्रुप्रयुक्तशस्त्रशरादिकं न निवारयेत् । एवं सम्प्रतिपन्नस्य भस्मान्ततादेः इह

1. ऽभिधान - क,ग.

उपदेशे किं प्रयोजनम् इति चेत् उच्यते, आत्मशरीरयोः अमृतत्व-मृतत्वरूपविरुद्धधर्मप्रदर्शनेन भेदसमर्थनं तावत् एकं प्रयोजनम् ; अपथ्यपरिहाररसायनसेवादिभिः किं नित्यत्वं सम्भवेदिति सन्देहापाकरणं द्वितीयम्, स्वदेहेऽपि वैराग्यजननं तृतीयम् ; विनाशहेतौ सति अवश्यं नश्यतीतिवत् भगवदुपासनादिभिरन्तविनाशस्यापि सम्भावनाद्योतनं चतुर्थम्, शीघ्रं मोक्षोपाये प्रवर्तितव्यम् इति त्वरासंजननं पंचमम् । एवम् उक्तान्यनुक्तानि च प्रयोजनान्तराणि गीताद्वितीयाध्यायतात्पर्यचन्द्रिकायां द्रष्टव्यानि ।

### परमात्मवाचकः प्रणवः

एवं 'भोक्ता भोग्यं प्रेरितारं च मत्वा' (श्वे.उ.1-12) इति क्रमेण चिदचिद्विवेकमुक्त्वा प्रेरितारं [1]प्राकृतं महापुरुषं प्रणवेन उपादत्ते - **ओम्** इति । यथा आमनन्त्याथर्वणाः 'यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परमपुरुषमभिध्यायीत' (प्र.उ.5-5) इति । उक्तं च योगानुशासने 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः सर्वेषामपि गुरुः कालेनानवच्छेदात्' (पा.यो.सू.1-24) 'तस्य वाचकः प्रणवः' ( पा.यो.सू.1-27) इति । आह च सर्वज्ञः 'ओमित्येव सदा विप्राः पठध्वं ध्यात केशवम्' (हरिवं.वि.133-10) इति । स्वयं चागायत् 'ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्' (भ.गी.8-13) इति । एवं सर्वत्र द्रष्टव्यम् ।

अथवा शरीरमात्मानं च विविच्य विविक्तमात्मानम् अकारवाच्ये परमपुरुषे समर्पयति - **ओम्** इति । प्रणवस्य आत्मसमर्पणपरत्वम् 'ओमित्यात्मानं युंजीत' (तै.ना.78)

'प्रणवो धनुश्शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
[1] अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्' ।। ( मुं.उ.2-2-4)

इत्यादिषु प्रसिद्धम् ।

### भगवदनुग्रहप्रार्थना

अथ क्रतुरूपिणं भगवन्तं ज्ञानयज्ञगोचरम् अभिमुखीकुर्वंस्तदनुग्रहं याचते - क्रतो

1.अप्रमत्तेन वेद्धव्यम् इति। मुण्डकोपनिषद्गतोऽयं मन्त्रः प्रपत्तिपर इति सम्प्रदायः। प्रणवानुसन्धानपूर्वकं ब्रह्मणि स्वरक्षणभरार्पणस्य विधानात्, प्रणवस्य धनुष्ट्वेन स्वात्मनः शरत्वेन च रूपणं युक्तम्। तथा लक्ष्यब्रह्म-वेधनं नाम - तस्मिन्नात्मार्पणमेव। तच्च अप्रमत्तेन चित्तेन। अनन्यशेषत्वादिभावबन्धनपरिष्कृतेनेति भावः। फलमिह तन्मयत्वम्। मयट् अत्र प्राचुर्ये। अपहतपाप्मत्वादिना ब्रह्मणा परमसाम्यापत्तिविवक्षा तदर्थः।

1.प्रकृतं - क,ग.

स्मर । क्रतो - ज्योतिष्टोमादिक्रियात्मक, यथाह 'अहं क्रतुरहं यज्ञः' (भ.गी.9-16) इति । यज्ञः पंचमहायज्ञा इत्यर्थः । अथवा क्रतो - भक्तिस्वरूप, 'यथाक्रतुरस्मिल्लोके पुरुषो भवति तथेतः प्रेत्य भवति' (छा.उ.3-14-1) 'स क्रतुं कुर्वीत' (छा.उ.3-14-1) 'एवं क्रतुरहम्' (अग्नि.र.10-6-1) इत्यादिषु क्रतुशब्दस्य भक्तियोगेऽपि प्रयोगदर्शनात् भक्तियोगगोचरे भगवति तच्छब्द उपचारात् इत्याचार्याः । रक्षकस्य भक्तियोगस्थाने निवेशनं क्रतो । इति सम्बोधनेन विवक्षितमिति भावः । स्मर - सानुग्रहया बुद्ध्या विषयीकुरु, 'स्नेहपूर्णेन मनसा यत् नः स्मरसि केशव' (वरा.च.श्लो) इतिवत् । उक्तं च भगवता 'स्थिते मनसि' इत्यारभ्य -

'ततस्तं म्रियमाणं तु काष्ठपाषाणसन्निभम् ।
अहं स्मरामि मद्भक्तं नयामि परमां गतिम्' ।। (वरा.च.श्लो.) इति ।

अत्र 'स्मरामि' 'नयामि' इति पदद्वयस्य 'क्रतो स्मर' 'अग्ने नय' इति । प्रार्थनाद्वयापेक्षया प्रतिवचनत्वावगमद्वारा वराहचरमश्लोकद्वयं 'वायुरनिलममृतम्' इत्यादिमन्त्रद्वयोपबृंहणमिति भावः । कृतं स्मर - मत्कृतं यत्किंचिदानुकूल्यमनुसन्धाय कृतज्ञस्त्वं मां रक्षेति वा, [1]एतावदन्तं त्वत्कृतमानुकूल्यं प्रतिसन्धाय त्वमेव शेषपूरणं कुरु इति वा भावः । स्मरन्ति हि 'जायमानं हि पुरुषम्' (म.भा.शां.358) इत्यादि । त्वरातिशयात् 'क्रतो स्मर कृतं स्मर' इत्यावृत्तिः ।।

## श्रीरंगाचार्यभाष्यम्

अयं मन्त्रः काण्वैः सप्तदशमन्त्रतया पठ्यते । माध्यन्दिनैस्तु पंचदशमन्त्रतया । उत्तरार्धे 'ओं क्रतो स्मर क्लिबे स्मर कृतं स्मर' इति भेदेन च पठ्यते । अथ उपासकः स्वोपासनस्य स्वरूपाननुगुणैश्वर्यकैवल्यलक्षणक्षुद्रपुरुषार्थान्तरपर्यवसानप्रसंगपरिजिहीर्षया तत्परिहरणीयत्वविज्ञापनपूर्वकं स्वरूपानुगुणगुणानभवकैंकर्यलक्षणभगवत्प्राप्तिरूपपरमपुरुषार्थप्रदानं प्रार्थयते द्वाभ्यां मन्त्राभ्यां स्वोपास्यं परमपुरुषम् ।

### कैवल्यस्य अतिक्रूरतया तत्परिहारप्रार्थना

तत्रापि ऐश्वर्यपुरुषार्थपर्यवसानेऽपि तस्य नश्वरतया पश्चादपि

---

1.एतायन्त - क.

भगवत्प्राप्तिलक्षणपरमपुरुषार्थसम्पादनयोग्यताया अविलयात्, कैवल्यपुरुषार्थ-पर्यवसाने तु तस्य नित्यतया पश्चात् तादृशयोग्यताया एव विलयाच्च ऐश्वर्य-पुरुषार्थपर्यवसानादपि कैवल्यपुरुषार्थपर्यवसानस्य अतिक्रूरतामभिसन्धाय प्रथममेव तत्परिहारं प्रार्थयते - वायुः इत्यादिना मन्त्रेण । अत एव हि भट्टनाथदिव्यसूरिणा स्वप्रबन्धप्रथमश्रीसूक्ते चतुर्थगाथायां कैवल्यार्थिनाम् ईदृशदुर्गत्यतिशयानुसन्धानेनैव ऐश्वर्यार्थिभ्यः पूर्वमाहवानं हितोपदेशाय कृतमवगम्यते । अत एव च श्रीपराङ्कुशदिव्यसूरिणापि श्रीमुखसूक्ताख्यस्वप्रबन्धप्रथमकाण्डद्वितीयश्रीमुखसूक्ते पंचमगाथायां 'प्रकृतिप्रत्यासत्तिनिवृत्तौ प्राप्त एव भवति मोक्षं चेतनः । तावन्मात्रापेक्षायां तस्य कैवल्यपुरुषार्थ एव पर्यवसानं भवति । तत्प्रसंगं निर्धूय स्वरूपानुगुणपरमपुरुषार्थप्रेप्सायान्तु प्रथममेव तदेकयोग्यतया स्वात्मानं निवेद्य भगवन्तं प्रपद्येत' इत्युक्तम् । अत्र कैवल्यपुरुषार्थपर्यवसानात्प्रागेव स्वापेक्षानिवेदनपूर्वकं भगवत्प्रपदनकर्तव्यताया अभिधानं कैवल्यपुरुषार्थस्य नित्यत्वेन पश्चात् परमपुरुषार्थप्राप्तियोग्यताविलयसम्भवाभिप्रायेणेति स्पष्टम् ।

यद्यपि प्राग्द्वादशे मन्त्रे कैवल्यार्थ्यपेक्षया सम्भूत्युपासकत्वेनाभि-हितैश्वर्यार्थिनां भूयोऽन्धतमसप्रवेशाभिधानेन अपकृष्टत्वमेव प्रतिपन्नम्, तथापि कैवल्यपुरुषार्थात् अल्पत्वास्थिरत्वाभ्याम् ऐश्वर्यपुरुषार्थस्य अपकृष्टत्वाभिप्रायेण तदुक्तम् इह तु कैवल्यपुरुषार्थस्य नित्यत्वेन ऐश्वर्यपुरुषार्थापेक्षया भगवत्प्राप्तिलक्षणपरमपुरुषार्थप्रतिबन्धकतातिशयेन क्रौर्यं विवक्षितम् इति न विरोध इत्यवधेयम् ।

### वायुवादिशब्दानां जीवपरत्वसमर्थनम्

अस्य मन्त्रस्य पदविवरणम् - वायुः - प्राणवायुसहचारी प्रत्यगात्मा 'प्राणो वा आशाया भूयान्' (छां.उ.7-15-1) 'प्राणा वै सत्यम्' (बृ.उ.4-1-20,4-3-6) इत्यादिषु प्राणशब्देनेव अत्रापि वायुशब्देन प्राणवायुसहचरितः प्रत्यगात्मैव विवक्षितः। यद्वा -'वा गतिगन्धनयोः' (पा.धा.1050) इति गत्यर्थकवातिधातुनिष्पन्नोऽयं वायुशब्दः वाति गच्छतीति वायुः इति व्युत्पत्त्या विद्याकर्मानुसारेण तत्र तत्र गन्तृत्वरूपेण प्रवृत्तिनिमित्तेन प्रत्यगात्मपरः, न तु भूतद्वितीयपरः । अनिलम् - न विद्यते-इला यस्य तत् अनिलम्, इला पृथिवी 'पंचम्यामाहुतावापः पुरुषवचसो भवन्ति' (छां.उ.5-9-1) इत्यत्र यथा

अप्छब्द एव अपृथक्सिद्धतया भूतान्तरसन्मिश्रत्वेऽपि जलभागभूयस्तया जलवाचक-निर्देश्यभूतसूक्ष्मपंचकपरः - तथैव अत्र इलाशब्दोऽपि अपृथक्सिद्धतया भूतान्तर-सम्मिश्रत्वेऽपि पार्थिवभागभूयस्तया पृथिवीवाचकनिर्देश्यभूतसूक्ष्मपंचकपरः ; तथा च उज्झितशरीरमित्यर्थः । यद्वा प्रागुक्तरीत्या वायुशब्दवत् 'इल-स्वप्नक्षेपणयोः' (पा.धा.1358) इति निद्रार्थकेलतिधातुनिष्पन्न इलाशब्दोऽपि - इलन्ति स्वपन्ति अत्रेति व्युत्पत्या यौगिकस्सन् प्रत्यगात्ममोहकारणत्वरूपेण प्रवृत्तिनिमित्तेन प्रकृतिपर एव । 'अनीशया शोचति मुह्यमानः' (मुं.उ.3-1-2) 'अजो ह्येको जुषमाणोऽनुशेते' (तै.ना.20,श्वे.उ.4-5) इत्यादिश्रुतिभिः प्रत्यगात्मव्यामोहकारणत्वं प्रकृतेः प्रसिद्धम् । तथा च उज्झितप्रकृतिसम्बन्धमित्यर्थः । सर्वथा विद्याबलात् निश्शेषनिवृत्तप्रकृति-सम्बन्धमिति यावत् । अत एव - अमृतम् - मृतं न भवति इति अमृतम् । यद्वा मृतशब्दो भावक्तप्रत्ययान्तः ;मृतं मरणम् ; तद्रहितम् । मरणवाचिमृतशब्दःअत्र तत्सहचरितपाप्म-जराशोकादिसर्वविकारोपलक्षकः, 'य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः' (छां.उ.8-7-1) इति प्रजापतिवाक्ये प्रकृतिसम्बन्धनिबन्धन-पाप्मादिसर्वदोषविनिर्मुक्तताया एव प्रतिपन्नत्वात् । तथा च प्रकृतिसम्बद्धः प्रत्यगात्मा विद्यामाहात्म्यात् निश्शेषनिवृत्तप्रकृतिसम्बन्धः तत एव हेतोः तदधीनमरणादि-सर्वविकाररहितं विशुद्धं वस्तु भवतीति नात्र संशय इत्यर्थः । प्रकृति-विनिर्मुक्तविशुद्धप्रत्यगात्मस्वरूपस्य स्त्रीत्वपुंस्त्वादिलिंगव्यपदेशानर्हवस्तुत्वाभि-प्रायेण 'सामान्ये नपुंसकम्' (वा.5043) इत्यनुशासनानुरोधेन नपुंसकलिंगशब्देन निर्देशः । अथ - इत्थं विद्याबलात् आत्मनो निवृत्तप्रकृतिसम्बन्धशुद्धभावप्राप्त्यनन्तरम् । इदम् - प्राकृतं शरीरम् । भस्मान्तम् - भस्मैवान्तो यस्य तथाभूतं भवति, निश्शेषं विनष्टं भवति । न पुनरित ऊर्ध्वम् अस्यात्मनोऽभिमतकार्यकरणोपयोगितया प्राकृतशरीरानुवृत्तिस्सम्भावितेति यावत् । इत्थमिह प्राकृतशरीरस्य निश्शेषनिवृत्त्या पुनस्तदनुवृत्तेरसम्भाविततया भगवते निवेदनं स्वशेषवृत्त्युपकारकतया पुनरप्राकृत-दिव्यशरीरप्रदेयताज्ञापनार्थम् । हे क्रतो - स्वप्रयोजकस्वाश्रयापृथक्सिद्धिसम्बन्धेन मदीयोपासनरूपक्रतुविशिष्ट भगवन् मया क्रियमाणस्य भवदुपासनलक्षणक्रतोरपि

स्वयमेव निर्वर्तनशील ! इदं च अनुसन्धानम् उपासने स्वकर्तृत्वादित्यागरूपं भगवति कृतज्ञतानुसन्धानरूपं चेति बोध्यम् । 'एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निन्नीषति' (कौ.उ.3-64)

'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ।।
तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता' ।। ( भ.गी.10-10,11)

इति श्रुतिस्मृतिभ्यां स्वाश्रितानां स्वप्राप्त्यर्थस्वोपासनलक्षणक्रतोर्भगवता स्वयमेव निर्वर्त्यमानत्वं हि स्पष्टमभिधीयते । 'अहं क्रतुरहं यज्ञः' (भ.गी.9-16) इतिवत् अत्रापि क्रतुशब्देन, उक्तसम्बन्धेन क्रतुविशिष्टत्वेन भगवतो निर्देशः । अयं च निर्देशः 'रसोऽहमप्सु कौन्तेय' (भ.गी.7-8) 'पुण्यो गन्धः पृथिव्यां च (भ.गी.7-9) इत्यादिषु रसगन्धादिशब्दैः भगवतो निर्देशवत् मुख्य एव । तत्र सर्वस्य परमपुरुषशरीरत्वेन आत्मभूतपरमपुरुषप्रकारत्वात् सर्वप्रकारः परमपुरुष एव अवस्थित इति सर्वैःशब्दैः तस्य अभिधानम् मुख्यमित्याशयेन हि-'रसोऽहमप्सु कौन्तेय' (भ.गी.7-8) इत्यादिना सर्वैःशब्दैः भगवतः सामानाधिकरण्यनिर्देशः प्रवृत्तः।

**अद्रव्यवाचिनामपि भगवद्वाचकत्वम्**

न च - 'यस्य चेतनस्य यद्द्रव्यं सर्वात्मना नियन्तुं धारयितुं च शक्यं तत्तस्य शरीरम्' इति शरीरलक्षणस्य द्रव्यत्वघटिततया रसगन्धादीनाम् अद्रव्यत्वेन भगवन्तं प्रति शरीरत्वासम्भवात् शरीरवाचकानां शरीरिवाचकत्वन्यायेन इह वृत्त्यसम्भवेन कथं तद्वाचिनां भगवत्परतया निर्देशो मुख्य इति - वाच्यम् ; शरीरवाचाकानामपि शब्दानां शरीरिपरतायां शरीरशरीरिभावस्यापि शरीरशरीरिणोः अपृथक्स्थितिप्रयोजकसम्बन्धे विशेषणविशेष्यभावरूपतयैव नियामकतया, तादूप्येण नियामकत्वाभावेन अपृथक्स्थितिप्रयोजकसम्बन्धेन साक्षाद्वा परम्परया वा विशेषणविशेष्यभावस्थले सर्वत्रैव तादृशविशेषणविशेष्यभावस्य विशेषणवाचकानां तादृशसम्बन्धेन तद्विशिष्टवाचकतानियामकताया दुरपह्नवतायाः प्रागुक्ततया रसगन्धादीनाम् अद्रव्याणामपि तथाविधेन स्वप्रयोजकस्वाश्रयापृथक्सिद्धिसम्बन्धेन भगवति विशेषणतायां अव्याहतत्वेन तद्वाचकानामपि दर्शितसम्बन्धेन तद्विशिष्टत्वेन भगवत्परतायाः तस्या मुख्यतायाश्च दुर्वारत्वात् ।

'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्माऽन्तर्याम्यमृतः' (बृ.उ.5-7-3) इत्यादि अन्तर्यामिब्राह्मणादिसिद्धभगवच्छरीरभावानां पृथिव्यबादीनां तच्छरीरभावो हि अपृथक्स्थितिप्रयोजकतदीयसम्बन्धविशेषायत्तस्वसत्तास्वभावकत्वरूपः, दर्शित-प्रमाणबलसिद्धे प्रागुक्तशरीरलक्षणे तन्नियाम्यत्वस्य तदीयसम्बन्धविशेषायत्त-स्वस्वभावकत्वरूपतायाः तद्धार्यत्वस्य तदीयसम्बन्धविशेषाधीनस्वसत्ताकत्व-रूपतायाश्च अभिमतत्वात् ।

### गन्धरसादीनां स्वाश्रयापृथक्सिद्धसम्बन्धेन भगवत्परत्वम्

इत्थं च पृथिवीजलादिगतगन्धरसादिस्वभावविशेषाणामपि पृथिवीजलादिषु शरीरितया भगवतः अवस्थाननिबन्धनतासिद्धेः स्वाश्रयद्वारा परम्परया अपृथक्स्थिति-प्रयोजकसम्बन्धेनैव भगवति सम्बद्धत्वाच्च तद्वाचिनां गन्धरसादिशब्दानां स्वप्रयोजकस्वाश्रयापृथक्सिद्धिसम्बन्धेन गन्धरसादिविशिष्टत्वेन भगवत्परता सम्भवति। अत एव च 'पृथिव्यां पुण्यगन्धोऽस्मि' 'अप्सु रसोऽस्मि' इत्यादिभिः तत्र तत्र गन्धरसादिनिर्वाहकतया अन्तःप्रविश्य स्थितोऽस्मीत्येव बोधो विवक्षितः। न तु रसादिस्वरूपैक्यबोधः, तस्य परमात्मनि बाधितत्वात् । ईदृशी च भगवत्परता गन्धरसादिशब्दानां यथा मुख्या, तथैव कृत्यादिशब्दस्यापीति नात्र उपचारप्रसंगः ।

### प्रणवस्य परविद्यासु उपादेयत्वप्रदर्शनम्

अथोपासकः परविद्यासु समन्ततः प्रसिद्धं करणतया प्रणवानुसन्धानं पुरस्कृत्य स्वाभीष्टं विवृणोति - ओम् इत्यादिना ।

'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीमि ओमित्येतत् ।।
एतद्धयेवाक्षरं ब्रह्म एतद्धयेवाक्षरं परम् ।
एतद्धयेवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ।।
एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते' ।। (क.उ.2-15,16,17)

'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत' (प्र.उ.5-5) 'तमोंकारेणैवायतनेनान्वेति विद्वान्यत्तच्छान्तमजरममृतमभयं परं चेति' (प्र.उ.5-7)

इत्यादिषु श्रुतिषु परविद्यालम्बनतया प्रणवस्य उपादेयत्वं सर्वतः प्रसिद्धम्। ओम्-सर्वप्रमाणमूलभूतम् ओंकारम् । स्मर - अनुसन्धेहि । 'ओम्' इत्येतत् अत्र प्रणव-स्वरूपपरम् । अव्ययत्वेन 'अव्ययादाप्सुपः' (पा.सू.2-4-82) इत्यनुशासनेन वा 'सुपां सुलुक्' (पा.सू.7-1-39) इत्याद्यनुशासनेन वा अत्र विभक्तिलोपो द्रष्टव्यः।

सर्वप्रमाणमूलप्रमाणसार्वभौमप्रणवप्रतिपन्नं सर्वजीवात्मनाम् अनादिं स्वतस्सिद्धं त्वदनन्यार्हशेषत्वलक्षणं स्वरूपनिरूपकधर्मं सम्यगनुसन्धत्स्व इति यावत् । ततश्च 'नाकिंचित्कुर्वतश्शेषत्वम्' इति न्यायेन कैंकर्यलक्षणकिंचित्कारमन्तरेण शेषत्वासिद्धेः विग्रहपरिग्रहमन्तरा कैंकर्यासिद्धेश्च शेषत्वसंरक्षणार्थं यावदात्मभाविसर्वदेशसर्वकाल-सर्वावस्थोचिताशेषकैंकर्योपकरणविग्रहपरिग्रहयोग्यतागर्भपरमपुरुषार्थलक्षणमोक्षएव पर्यवसानं मे प्रसादय ; यावदात्मभाव्यशरीरित्वगर्भकैवल्यलक्षणमोक्षे पर्यवसानं मा कृथाः इति स्वाभीष्टनिवेदनं फलितम् ।

ननु ओंकारस्मरणमात्रेण कथमेकान्ततो भवदभीष्टलाभो भविष्यति? तस्य केवलं परमात्मस्वरूपपरताया अपि सत्त्वात्, कैवल्यार्थ्युपासनसाधारणत्वाच्च । श्रूयते हि प्रणवकरणकोपासननिष्ठस्य संसारनिवृत्तिमात्रलक्षणकैवल्यमोक्षपर्यवसानं नारायणोपनिषदि 'प्रत्यगानन्दं ब्रह्मपुरुषं प्रणवस्वरूपम्। अकार उकार मकार इति। तानेकधा समभरत्तदेतदोमिति। यमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात्' (ना.उ.4) इति।

उत्तरत्र प्रणवगर्भिताष्टाक्षरमन्त्रोपासननिष्ठस्य वैकुण्ठलोकावाप्तिरूपपरम-पुरुषार्थप्राप्तेः पृथगेव श्रवणात्, अत्र केवलप्रणवोपासननिष्ठस्य कैवल्यमोक्ष एव विवक्षित इति हि स्पष्टम्। अत एव च गीतायामपि -

'ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम्'।। (भ.गी.8-13)

इति कैवल्यमोक्षप्रेप्सोरपि प्रणवकरणकब्रह्मोपासननिष्ठत्वम् अभिहितम्। 'क्लेशकर्म-विपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः स पूर्वेषामपि गुरुः, कालेनानवच्छेदात्, तस्य वाचकः प्रणवः (पा.यो.सू.1-27) इति योगानुशासनेनापि प्रणवस्य

अखण्डस्य केवलसर्वेश्वरवाचकत्वम् अवगम्यते । विधीयते च योगानुशासने कैवल्यमोक्षमेव प्रतिपाद्य तन्निष्ठस्यैव प्रणवजपाद्युपासननिष्ठता । अतो नैकान्ततः प्रणवस्य स्मर्तव्यताज्ञपनमात्रेण उपासकस्य परमपुरुषार्थभूतकैंकर्यलक्षणमोक्षनिष्ठत्वं सुगमम् इत्याशंकायाम् आह - कृतं स्मर इति । अत्र 'कृतम्' इत्यस्य कर्तृतया मयेति तृतीयान्तं सन्दर्भबलेन उपतिष्ठते । अनुषज्यते च 'ओम्' इत्येतदपि । मया कृतमोमित्येतत् स्मर - यमर्थमनुसन्धाय उपासनकरणतया प्रणवस्य अनुसन्धानं मया क्रियते, तमर्थमनुसन्धाय मदभीष्टं प्रसादय इत्यर्थः ।

प्रणवनिष्कृष्टाऽर्थानुसन्धानम्

प्रणवस्य भगवदनन्यार्हशेषत्वप्रतिपादकत्वप्रकारस्तु मूलमन्त्रार्थपरग्रन्थेषु स्पष्ट एवेति तत्रैव सोऽवगन्तव्यः । इह एतन्मन्त्रकरणकोपासननिष्ठस्य अधिकारिणः प्रागुक्तद्वादशत्रयोदशचतुर्दशमन्त्रैः लब्धपुरुषार्थतत्त्वोपदेशस्य परमपुरुषार्थैक-निष्ठतासम्भवात् अस्य मन्त्रस्य यथोक्तरीत्यैव अर्थो वक्तुमुचित इत्यनुसन्धेयम् । आवृत्तिस्तु आदरार्था । माध्यन्दिनपाठे 'क्लिबे' इत्यस्य अधाष्टर्यायेत्यर्थः । धाष्टर्यं हि परवश्यताप्रहाणेन स्वातन्त्र्येण वर्तनम् । तद्धि कैवल्यनिष्ठस्य अस्ति, भगवच्छेषवृत्तिमन्तरेण स्वात्मभोगैकपरायणत्वात्तस्य । तथा च - कैवल्यपुरुषार्थ-पर्यवसाननिबन्धनधाष्टर्यपरिहाराय ओंकारं स्मर इत्यर्थः । अन्यत्सर्वं पूर्ववत् । 'क्लीबृ अधाष्टर्ये' (पा.धा.381) इति धातोर्भावे क्विपि रूपमिदम् । अत्र वर्णवैरूप्यं तु छान्दसमिति बोध्यम् इति ।

शांकरव्याख्यानस्यानुपपन्नता

यत्पुनरत्र मन्त्रे 'वायुरनिलममृतम्' इत्यस्य 'प्रतिपाद्यताम्' इत्यध्याहृतपदघटितस्य मरणसमये प्राणस्य कारणवायौ लयप्रार्थनापरतया व्याख्यानं,' लिंगं चेदं ज्ञानकर्मसंस्कृतमुत्क्रामतु' इति वाक्यस्य लिंगशरीरोत्क्रमणप्रार्थनापरस्य अध्याहार-करणम् 'अथेदं भस्मातं शरीरम्', इत्यस्य 'भूयात्' इत्यध्याहृतपदघटितस्य मरणानन्तरं स्थूलशरीरस्य भस्मान्तत्वापत्तिप्रार्थनापरतया व्याख्यानं, 'स्मर' इत्यस्मिन्पदे प्रथमे समुत्थितकर्माकांक्षाया यथार्हमध्याहृतपदेन परिहाराश्रयणं च शंकरेण कृतम् ; तत्सर्वमसमंजसमेव - यथोक्तरीत्या स्वरसत एव निर्वाहे स्वैरम्

अप्राप्तानावश्यकबहुलाध्याहारकल्पनाया अयुक्तत्वात्, मरणसमये प्राणस्य कारणवायुलयः, लिंगशरीरोत्क्रमणं मरणानन्तरस्थूलशरीरस्य भस्मान्तत्वापत्तिश्च इत्येतेषामंशानां प्रार्थनामन्तरेणैव सर्वाधिकारिसाधारण्येन स्वतः प्राप्नुवतां प्रार्थनाया आवश्यकतालेशानुपलम्भाच्च । तस्मात् यथोक्तरीत्यैव व्याख्यानम् अस्य मन्त्रस्य युक्तम् इति विवेकिनो विद्वांस एव विदांकुर्वन्तु ।।

## आनन्दभाष्यम्

शरीरस्य भस्मान्तत्वेन मृतत्वम् आत्मनश्च अमृतत्वप्रतिपादनेन प्रकृतिविविक्तं जीवात्मानं प्रोक्षणादिना व्रीह्यादीनिव विशोध्य ओंकारबोधिते परमात्मनि समर्प्य तदनुग्रहं प्रार्थयते - वायुरनिलम् इति ।

### वाय्वनिलामृतशब्दानां जीवपरत्वम्

वाति देवमनुष्यादियोनिषु स्वीयविद्यानुगुणेन स्वकर्मानुगुणेन या परम-पुरुषसंकल्पेन गच्छति इति वायुः तत्र तत्र योनौ गमनशीलः, 'वा- गतिगन्धनयोः' (पा.धा.1050) इति गत्यर्थोऽत्र 'वा' धातुः । कृमिकीटादिसूक्ष्मदेहेषु अपि गन्तृत्वात् अणुपरिमाणता अत्र जीवात्मनः दर्शिता भवति ।

अनिलममृतम् इत्यत्र छान्दसं नपुंसकत्वम् । पुल्लिंगेन वायुशब्देन उपक्रमे आभ्यामपि पुल्लिंगाभ्यामेव भाव्यत्वात्, तथैव व्याख्यातव्यत्वात् । निलीयते इति निलः, तद्भिन्नः अनिलः निलयहीनः, जीवात्मा हि स्वरूपतो धर्मतश्च न लीयते तादृश इत्यर्थः । 'अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा' (बृ.उ.6-5-14) इति श्रुत्या जीवस्य तद्धर्मभूतज्ञानस्य च लयराहित्यबोधनात्, अथवा अनिलः पवनः सततगतिशीलतया क्वचित् व्यवस्थितो न भवति तस्मात् अनिल इत्युच्यते । तद्वत् जीवोऽपि क्वचिद्देहे व्यवस्थितो न भवति कर्मभोगे सम्पन्ने ततोऽपक्रामति । अतः अनिलः अनिलसदृश इत्यर्थः ।

अमृतः - जरामरणादिस्वभावे देहे विशन्नपि स्वयं जरामरणादिशून्यः, देहसम्बन्धात् त तजन्मजरामरणादिकं जीवेऽपि आरोप्यते इति तु अन्यदेतत् ।

'अयमात्मा अपहतपाप्मा विजरो विमृत्युः' (छां.उ.8-7-1) इत्यादि श्रुतिभिः जीवस्य मरणादिशून्यतावगमात् ।

अत्रस्थ वायुवादिशब्दानां परमात्मतात्पर्यकत्वाभावस्थापना

ननु - 'वायुरनिलममृतम्' इति शब्दैः परमपुरुष एव प्रतिपाद्यताम्, परमात्मपरत्वस्यापि योगादिना तेषां सम्भवात् इति तु - न शंकनीयम् । 'क्षरः प्रधानममृताक्षरं हरः' (श्वे.उ.1-10) इति श्रुतौ 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च' (भ.गी.15-16) इति स्मृतौ च क्षरशब्दसमभिव्याहृतेन अक्षरशब्देन जीवस्यैव ग्रहणवत् इहापि द्वितीयपादस्थशरीरशब्दसमभिव्याहारेण वायुरनिलममृतम् इति शब्दैः जीवात्मनः एव ग्रहणस्य उचितत्वात् । 'क्षरात्मानावीशते देव एकः' (श्वे.उ.1-10) 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' (भ.गी.15-17) इत्यादिवत् अत्र मन्त्रे परमात्मबोधकशब्दान्तराभावाच्च परमात्मविषयकत्वकल्पनस्य अयोग्यत्वात् ।

जीवस्य अमृतत्वमभिधाय तच्छरीरस्य मृतत्वविवेकं प्रदर्शयितुं वदति - **अथेदं भस्मान्तं शरीरम्** - अथ शब्दः उक्तात् जीवात् अर्थान्तरं बोधयति । इदं दृश्यमानं प्रेमास्पदतया प्रतीयमानं भोगसाधनीभूतं रमणीयं शरीरं विशरणस्वभावं वपुः कर्माधीनं वपुः भस्मांतं - भस्म अन्तः चरमः परिणामो यस्य तादृशम्, दाहसंस्कारे सति भस्मरूपं भवति इत्यर्थः । इदं च विडन्तत्वस्यापि उपलक्षकम् । 'भस्मान्ता या विडन्ता वा' इति श्रुत्यन्तरे विडन्तताया अपि श्रवणात् । व्याघ्रादिना भक्षितस्य जलादौ मकरादिना भक्षितस्य च शरीरस्य विड्रूपचरमपरिणामदर्शनाच्च । एवम् अमृतत्वमृतत्वप्रतिपादनद्वारा जीव-तच्छरीरयोः विवेकः प्रदर्शितः । इदं शब्देन च दृश्यमानशरीरस्यैव भस्मान्तत्वकथनात् अकर्मवश्यस्य भगवच्छरीरस्य व्यावृत्तिः कृता भवति ।

एवं परिशोधितं प्रत्यगात्मानं श्रुत्यन्तरे धनुष्ट्वेन रूपितप्रणवद्वारा परमात्मनि योजयति 'ओम्' इति ।

'प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्' ।। ( मु.उ.2-2-4)

इत्यादि श्रुतिषु प्रणवद्वारकात्मसमर्पणस्य दर्शितत्वात् तदेव इहापि प्रतिपादितम् ।

यद्वा पूर्वार्धेन जीवात्मनो विवेकमुपदर्श्य - 'ओम्' इत्यनेन परमात्मानं विविनक्ति प्रणवस्य परमात्मवाचकत्वात् 'तस्य वाचकः प्रणवः' (पा.यो.सू.1-27) इति योगसूत्रानुसारात् ।

एवं चिदचित्परमात्मतत्त्वं विविच्य क्रतुरूपं परमात्मानं स्वस्मिन्ननुग्रहाय प्रार्थयते - 'क्रतो स्मर' सर्वैः क्रतुभिराराध्यतया परमपुरुष एव क्रतुः, 'अहं क्रतुरहं यज्ञः' (भ.गी.9-16) इति भगवद्वचनात् । साक्षादपि स क्रतुः उपासनवाचकस्य क्रतुशब्दस्य उपास्ये परमपुरुषे उपचारादपि परमपुरुष एव क्रतुः । तत्सम्बुद्धौ क्रतो ! क्रवाराध्य, ज्योतिष्टोमादिस्वरूप, सर्वक्रतुनिकरसमुपास्य इति वा अर्थः । **स्मर-** त्वामुपासीनं मां स्मरणात्मिकया बुद्ध्या विषयीकुरु । **कृतम्** - त्वत्प्रीतये मयाऽनुष्ठितं कर्मयोगाद्युपासनपर्यन्तं कर्म यत्किंचित् तदपि **स्मर** - मत्कृतकर्मसु आनुकूल्यसंकल्पं कृत्वा यदि न पर्याप्तं त्वत्प्रीतये तदा त्वमेव अवशिष्टं पूरय । केचन समर्थाः अन्तकालेऽपि त्वां स्मरन्ति - योगेन स्वहृदये त्वां धारयितुं कृताभ्यासाः, अहन्तु तत्राऽसमर्थः । अतः त्वमेव मदीयं त्वत्प्रीणनात्मकं कर्मजातं स्मर, इति वा अनुग्रहं एतेन प्रार्थयते । द्विरुक्तिः आदरातिशयद्योतनार्था ।।

## सुबोधिनी

अथोपासकस्य प्रकृत्यात्मविवेकाऽनुसन्धानपूर्वकम् अन्तिमस्मरणम् उच्यते- वायुः इति ।

वातीति वायुः - गन्ता, 'वा - गतिगन्धनयोः' (पा.धा.1050) । यद्यपि कर्मणा देवादि नानादेहेषु गच्छति ; तथापि अनिलः - स्वभावतो निलयनरहितः, उपाधितो देहादिसम्बन्धेऽपि स्वभावतस्तद्रहित इति भावः ।

यद्वा - वायुः - वायुवत्सूक्ष्मत्वात्सर्वत्र भूतेषु व्यापनशीलः । व्याप्येभ्यः स्थूलेभ्यो भूतेभ्यः व्यापकोऽयं सूक्ष्मः प्रत्यगात्मा विलक्षण इति भावः ।

**अनिलः** - यथा वायुः सततगमनशीलो न नियतनिलयनः तथाऽयं कर्मणा अन्यान्यदवगाहमानो न नियतदेवादिदेहनिलयनः । यथा सततगतेः वायोः नैकप्रदेशोऽसाधारण्येन निरूपणाय अलम्, तस्मात् देहादिभिः असाधारण्येन यो व्यवहारः स भ्रान्तिकृत इति भावः ।

**अमृतम्** - यथा वायुः तत्र तत्र प्रविष्टोऽपि तदीयदोषेण न लिप्यते तथाऽयं देहेषु विशन्नपि तदीयजरामरणादिभिः न लिप्यते, सन्निकर्षाच्च आरोप्यते केवलं जरामरणादिकं वायाविव गन्धादिकमिति भावः। **अथ** इति प्रकरणभेदे। **इदम्** - रमणीयतया भोगसाधनतया च दृश्यमानम्। **शरीरम्** - विशरणस्वभावं वपुः। **भस्मान्तम्** - अग्निसात्कृतं भस्मान्तम्, इदमुपलक्षणं कीटान्तस्य, तथैव परित्यक्तं कीटान्तम्। रमणीयतया प्रतीयमानस्य अस्य वपुषः परिणामगतिस्तु भस्मकीटाद्यात्मना इति भावः।

एवं प्रकृत्यात्मविवेकमनुसन्धाय ओमिति व्याहरन् तद्वाच्यं परंब्रह्म अनुस्मरति - **ओं क्रतो** इति। उक्तं च 'ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्' (भ.गी.8-13) इति।

**क्रतो** - 'यज्ञो वै विष्णुः' (तै.ब्रा.3-3-31) इति श्रुतेर्भगवतः सम्बोधनमिदम्, सर्वक्रतुसमाराध्यत्वाद्वा। उपासनपरस्य वा क्रतुशब्दस्य उपास्ये उपचारः। मया कृतानां कर्मणाम् उपासनानां च गोचरीभूत। इति व्यज्यते।

* * * * * * * * *

# अष्टादशो मन्त्रः

**अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।**
**युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ।। 18 ।।**

## प्रतिपदार्थदीपिका

पुनरपि अग्निशब्दवाच्यं भगवन्तं इष्टप्राप्तिम् अनिष्टनिवृत्तिं च प्रार्थयते **अग्ने नयेति ।**

### अनिष्टनिवृत्तिपूर्वकेष्टप्रार्थना

**हे अग्ने** - अग्न्यन्तर्यामिन् । यद्वा - अग्रनयनादिधर्मक ! परमपुरुष, **देव**- उपास्यदेव, **विश्वानि वयुनानि** - चतुर्विधपुरुषार्थोपायान् **विद्वान्** - वेत्ता त्वम्, **जुहुराणम्** - कुटिलम् ; भवत्प्राप्तिप्रतिबन्धकम्, **एनः** - पापम्, **अस्मत्** - अस्मत्तः, **युयोधि** - पृथक्कुरु, विनाशय इति भावः । **सुपथा** - शोभनमार्गेण अर्चिरादिमार्गेण, **अस्मान् नय** - भवत्सन्निधिं प्रापय ; वयं पूर्वोक्तचिदचिदीश्वरतत्त्वज्ञाः, **भूयिष्ठाम्**- अनन्यगतिकत्वादिगुणेभ्यश्च भूयसीम् - अधिकाम्, **नम उक्तिम्** - नम इत्युक्तिम् , **ते** - नम इत्युक्तिनिरपेक्षकरक्षकाय तुभ्यम्, **विधेम** - कुर्मः ।।

## वेदान्ताचार्यभाष्यम्

पुनरप्यग्निशब्दवाच्यं भगवन्तं स्वापेक्षितं प्रापय इत्याह - **अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्ययस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम** - इति ।

**अग्ने** - अग्निशरीरक 'यस्याग्निश्शरीरम्' (बृ.उ.5-7-9) इत्यन्तर्यामिब्राह्मणम् ; 'साक्षादप्यविरोधं जैमिनिः' (ब्र.सू.1-2-29) इति न्यायात् ; अग्रनयनादिगुणयुक्तेति वा । **नय** - प्रवर्तयेत्यर्थः । **सुपथा** - शोभनेन मार्गेण ; प्रतिषेधस्पर्शरहितेन उपायेनेति यावत् । **राये** - विद्यार्थशरीरसंरक्षणत्वदर्चनाद्यनुगुणाय धनाय । यद्वा अर्थप्रकरणानुगुण्यात् -

'अतस्करकरग्राह्यमराजकवशंवदम् ।

अदायादविभागार्हं धनमार्जय सुस्थिरम्' ।। (या.स्मृ.2-40) 'अनन्तं बत मे वित्तम्' (म.भा.शां.17-223) इत्यादिषु उक्तम् अलौकिकम् धनम् इह विवक्षितम्। एक एव मन्त्रः प्रकरणादिभिः विशेषितः तत्तदनुगुणमर्थं विवक्षतीति सम्यङ्न्यायविदः। **अस्मान्** - त्वदनन्यभावान् अनन्यगतींश्च । **विश्वानि देव वयुनानि विद्वान्** - **देव**- अस्मदपेक्षितप्रदानानुरूपविचित्रक्रीडायुक्त । 'माया वयुनं ज्ञानम्' (निघण्टुः3-9) इति नैघण्टुकाः । अतो ज्ञानमुखेन उपायविशेषा इह वयुनशब्देन विक्षिताः । सर्वान् तत्तदधीकारानुगुणान् चतुर्विधपुरुषार्थोपायान् यथावत् विद्वान् त्वमविदुषोऽस्मान् नेतुमर्हसीति भावः ।

**युयोध्यस्मज्जुहुराणम्** - बन्धनात्मकतया अचिन्त्यप्रकारकौटिल्यवत्तया वा बाधमानमित्यर्थः । **एनः** - अकृत्यकरणकृत्याकरणादिरूपं त्वदनुभवादिप्रतिबन्धकम् **अस्मत्** - अस्मत्तो **युयोधि** - पृथक्कुरु, विनाशय इत्यर्थः ।

**अभीष्टसाधिकायाः प्रपत्तेर्विधानम्**

**भूयिष्ठां ते नमउक्तिं विधेम** - 'अनन्यगतिः' इत्यादिगुणैरावृत्तितश्च भूयसीं नमउक्तिं ते विदध्महे । व्यत्ययो हि बहुलमनुशिष्टः । नमउक्तेरनुवृत्तिं या नाथं प्रति नाथते । 'नम इत्येव वादिनः' (म.भा.शां.337-340) इति हि मुक्तलक्षणा अपि पुरुषाः मोक्षधर्मे प्रतिपादिताः । मानसकायिकयोः नमसोरभावेपि नमश्शब्दमात्रेण प्रसत्तुमर्हसि इति उक्तिशब्दाभिप्रायः । एवं परतत्वतद्विभूतियोगतदुपासनतद्विशेषान् संगृह्य संहितेयं समपूर्यत ।।

व्यक्ताव्यक्ते वाजिना संहितान्ते व्याख्यामित्थं वाजिवक्त्रप्रसादात् ।

वैश्वामित्रो विश्वमित्रं व्यतानीद्विद्वच्छात्रप्रीतये वेंकटेशः ।।

[1]अभेदं भोक्तॄणामथ च भविनामेव परतां तथा भेदाभेदं जिनसुगतनीतिं च जगति ।
असम्पाद्यां मुक्तिं भवभयमलीकं च पठतामसावीशेत्यादिर्न कथमनुवाकः प्रतिभटः।।

---

1. 'अभेद भोक्तृणा ' इति - उपनिषदिय शकर-भास्कर-यादयप्रकाश-रूपत्रियिधाद्वैतिनामपि साकल्येन यिरुद्धा- इति श्लोकेनानेन तत्तन्मतखण्डने, दिक्प्रदर्शन श्रीदेशिकैः क्रियते । तत्र जीयब्रह्मणोः ऐक्यप्रतिपादन त्रिषु समानम्। शाकरेषु अयान्तरभेदोऽपि एकजीययादिनः नानाजीययादिनश्चेति । श्लोके 'भोक्तृणा अभेद' इति जीयैक्ययादकथनम् । 'भयिनामेय परता ' इति - सर्यजीयाना परब्रह्मणा ऐक्यकथनमुखेन नानाजीययादिना शाकरैकदेशिना, भास्कर-यादयप्रकाशयोश्च सग्रहः । जगति-चिदचिदात्मके जैनाभिमतपरस्पर भेदाभेद

## ईशावास्यप्रकाशिका

पुनरपि अग्निशब्दवाच्यं भगवन्तं प्रति इष्टप्राप्तिम् अनिष्टनिवृत्तिं च प्रार्थयते - अग्ने नय इति ।

बृहदारण्यके च सप्तमाध्याये 'यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुम्' (बृ.उ.7-10-1) इत्यादिना अर्चिरादिकं पन्थानम् उपदिश्य पश्चात् अध्यायावसाने 'हिरण्मयेन पात्रेण' (बृ.उ.7-15-1) इत्याद्या एते चत्वारो मन्त्राः क्रमेण पठिताः ।

### परमात्मनि अनिष्ठनिवृत्तिपूर्वकेष्टप्राप्तिप्रार्थना

अग्ने - अग्निशरीरक, 'यस्याग्निश्शरीरम्' (बृ.उ.5-7-9) इति अन्तर्यामिब्राह्मणम् । यद्वा 'साक्षादप्यविरोधं जैमिनिः' (ब्र.सू.1-2-29) इति न्यायेन, अग्रं नयतीति अग्निः ; अग्रनयनादिगुणयुक्त नय - प्रवर्तयेत्यर्थः। सुपथा - शोभनमार्गेण-

---

ब्रह्मप्रतियोगिकतयापि निरूपयन्तौ भास्करयादवौ, सौगतैर्बौद्धैरिष्टं विज्ञानात्मवादं परिगृह्णन् शांकराद्वैती च द्वितीयपादे मुखान्तरेण परामृष्टाः। तथा अविद्यानिवृत्तेरेव साध्यत्वात् , तत्सिद्धौ स्वस्वरूपावाप्तेः अयत्नसिद्धतया मुक्तेः असम्पाद्यता भवबन्धस्य सौगतेष्टां अलीकतां (मिथ्यात्वं) च गृणन्तः शांकराः तृतीयपादे विवक्षिताः । एवं चेतन-अचेतन-ईश्वररूपतत्त्वत्रयविषये विभिन्नवादान् आतस्थुषामेषां 'ईशावास्यमिदं सर्वं---' इत्यादिना प्रवृत्तोऽयं शुक्लयजुर्वेदिना उपनिषद्भागः प्रतिभटः । विरुद्धः । तन्मतसाधको नात्र कश्चिदपि मन्त्रः । प्रत्युत प्रतिमन्त्रं तन्मतविरोधोऽपि दृश्यत इति भावः ।

संग्रहेण एतन्मन्त्रेषु तत्तद्विरोधोक्तिः - यथा -

'येऽविद्यामुपासते - य उ विद्यायां रताः' 'येऽसम्भूतिमुपासते य उ सम्भूत्यां रताः' 'ये केचात्महनो जनाः' इत्यादिमन्त्रखण्डैः निरयगामिना मुमुक्षुणा च भेदव्यपदेशादेव जीवभेदसिद्धिः । एतेन स्वप्नदृष्टृपुरुषस्यैव सत्यतां तद्दृष्टस्वाप्निकसर्वपुरुषमिथ्यात्वं च निदर्शयन्तः एकजीववादिनः परास्ताः । तथा सति एकेनैव हि स्वभ्रमनिरसनाय यतितव्यमिति बहुषु जनेषु मुमुक्षोक्त्ययोगात् । तथा - 'ईशावास्यं' 'राये अस्मान्नय' 'ते नम उक्तिं विधेम' इत्यादिभिः उपासकातिरिक्तनियामकपरमपुरुषप्रार्थनाया एव मोक्षोपायत्वविधानात् ब्रह्मैक्यज्ञानस्य क्वापि मन्त्रे अविधानाच्च ब्रह्मणो जीवेषु भेदसिद्धिः । एवं चिदचिन्मिश्रिते जगति सर्ववस्तुषु 'स्यादस्ती'त्यादि सप्तभंगीनयात् अनेकान्ततां ब्रुवतां जैनानां भेदाभेदवादं गृह्णतोः भास्कर-यादवयोः अस्ति ईषद्भेदः - तथाहि - जीवब्रह्मणोरभेदः उभयमतेऽपि स्वाभाविकः । तयोर्भेदस्तु भास्करमते औपाधिक इति, यादवमते सोऽपि स्वाभाविक एवेति च। तदपि प्रथममन्त्रसिद्धेन ईशेशितव्यभावस्य स्वाभाविकत्वेन 'तस्मिन्नपो मातरिश्वा' इत्यादिसिद्धेन आधाराधेयभावस्य स्वाभाविकत्वेन च अभेदसंभावनाविरहादेव प्रत्यस्तम् । तथा 'असौ सः, पुरुषोऽहमस्मी'ति सामानाधिकरण्ये उत्तमपुरुषेण च तयोर्भेदः नैयत्यं प्रसाधितम् । 'कविर्मनीषी--' इत्यादिना शुद्धात्मस्वरूपनिरूपणात् तस्मिन् ज्ञातृत्वस्यैव स्वाभाविकतासिद्धेः, शांकरीयाणां बौद्धसगन्धिविज्ञानात्मवादोऽपि व्युदस्तः । 'एनः युयोधि' 'विद्ययामृतमश्नुते' इत्यादिना प्रतिबन्धनिवृत्तिपूर्वकं अमृतत्वस्य (मुक्तिरूपस्य) साध्यत्वनिरूपणात् शांकरीयाणां मुक्तेः कण्ठगतविस्मृतकनकमालावाप्तितुल्यत्वेन अयत्नसाध्यत्वकथनं प्रतिक्षिप्तम् । एवं बन्धस्य मिथ्यात्ववादस्तु न क्वचिन्मन्त्रे लब्धपदः । प्रथममन्त्रे वास्यशब्दस्य छादनार्थकतामुक्त्वा सत्य-मिथ्यादिपदाध्याहारेण च सत्यब्रह्मज्ञानेन मिथ्याभूतजगच्छादनमित्यर्थस्य बलात्कर्षणं तु सर्वथा अस्वरसमिति स्पष्टम् । अतश्च सर्वापीयं उपनिषत् त्रिविधाद्वैतिनां प्रतिभटेति, अस्मत्कृतविवरणरीत्या ईश्वरस्य चिदचिद्वैशिष्ट्यं, तत्त्वत्रयस्य स्वभावभेदव्यवस्था, सांगभगवदुपासनस्यैव मुक्तिसाधनता इत्यादिकमिह दृढप्रतिपन्नमिति च सारम् ।

प्रतिषेधस्पर्शरहितेन याजनाध्यापनाद्युपायेन इति यावत् । **राये** - विद्यार्थ-शरीरसंरक्षणत्वदर्चनानुगुणाय धनायेत्यर्थः।

अथवा--

'अतस्करकरग्राह्यमराजकवशंवदम् ।

अदायादविभागार्हं धनमार्जय सुस्थिरम् ' (या.स्मृ.2-40)

'अनन्तं बत मे वित्तम्' (म.भा.शा.17-223) इत्यादिषूक्तम् अलौकिकधनम् इह विवक्षितम् । विद्याप्रकरणानुगुण्यात् । एक एव मन्त्रः प्रकरणादिभिः विशेषितः तत्तदनुगुणमर्थं बोधयतीति, सम्यङ्न्यायविद इत्याचार्याः । यद्वा **अग्ने नय** प्रापय इत्यर्थः। **सुपथा** - अर्चिरादिपथेन, बृहदारण्यकपाठेऽर्चिरादिपथस्य बुद्धिस्थत्वात् ;

'अर्चिरहस्सितपक्षानुदगयनाब्दौ च मारुतार्केन्दून् ।

अपि वैद्युतवरुणेन्द्रप्रजापतीनातिवाहिकानाहुः' (त.सा.102)

इत्यभियुक्तसंगृहीतेन मार्गेण इति भावः । अर्चिरादिमार्गविवक्षापि आचार्याभिप्रेतैव ।

**ब्रह्मणो धनत्वसमर्थनम्**

**राये** - इत्यत्र ब्रह्मणः प्राप्यत्वोपवर्णनात् ब्रह्मैव हि सुस्थिरम् अनन्तम् अलौकिकं च धनम् । अत एव तत्र तत्र एवमुच्यते 'धनं मदीयं तव पादपंकजम्' (स्तो.र.30) 'यो नित्यमच्युतपदाम्बुजयुग्मरुक्मव्यामोहतः' (वै.स्त.1) 'यदंजनाभं निरपायमस्ति मे धनंजयस्यन्दनभूषणं धनम् ' (वै.पं.4)

'न मे पित्रार्जितं द्रव्यं न मया किंचिदार्जितम् ।

अस्ति मे हस्तिशैलाग्रे वस्तु पैतामहं धनम्' ।। (वै.पं.6) इति ।

अत्र चैवं शांकरं व्याख्यानम् - 'सुपथा शोभनमार्गेण, सुपथेति विशेषणं दक्षिणमार्गनिवृत्त्यर्थं ; विषण्णोऽहं दक्षिणेन मार्गेण गतागतलक्षणेन ; अतो याचे त्वां पुनःपुनर्गमनागमनवर्जितेन शोभनेन पथा नयेति ' इति ।

**राये** - हिरण्यनिधिसरूपाय पुरुषाय ; त्वत्प्राप्तये इति भावः । **अस्मान्**-अनन्यप्रयोजनाननन्यगतींश्चेत्यर्थः । न केवलं माम्, अपित्वनुबन्धिजनानपीति बहुवचनस्याभिप्रायः । **देव** - अस्मदपेक्षितप्रदानानुगुणविचित्रजगत्सृष्टिस्थिति-संहारान्तःप्रवेशनियमनस्वाश्रितविमोचनादिरूपविलक्षणक्रीडायुक्त ।

'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।

तँ ह देवमात्मबुद्धिप्रसादं मुमुक्षुर्वै शरणमहं प्रपद्ये' ।। (श्वे.उ.6-18)

इति मन्त्रेऽपि देवशब्दस्यायमेवाभिप्रायः । वयुनशब्दो ज्ञानवाची, 'माया वयुनं ज्ञानम्' (निघण्टुः3-9) इति नैघण्टुकोक्तेः । अत्र तु लक्षणया ज्ञातव्योपायपरः । **विश्वानि वयुनानि** - सर्वानपि तत्तदधिकारानुगुणचतुर्विधपुरुषार्थोपायान्यथावद्विद्वान् त्वमविदुषोऽस्मान्नेतुमर्हसीति भावः। 'यो वै वेदांश्च प्रहिणोति तस्मै' (श्वे.उ.9-18) इति मन्त्रपदानामप्येतदेव हृदयम् ।

'मुमुक्षुर्वै शरणमहं प्रपद्ये' (श्वे.उ.9-18) इति मन्त्रगतमुमुक्षुपदं विवृण्वन्नाह - युयोध्यस्मज्जुहुराणमेः इति ।'हृ कौटिल्ये' (पा.धा.211) । **जुहुराणम्** - कुटिलं बन्धनात्मकमित्यर्थः । यद्वा - अचिन्त्यप्रकारकौटिल्यतया बाधमानम् इति भावः । अनेन विशेषणेन अतितीव्रः शोकवेगो द्योत्यते । एनः - अकृत्यकरणकृत्याकरणादिरूपं त्वदुपासनोत्पत्तिप्रतिबन्धकम् इत्यर्थः। त्वत्प्राप्तिप्रतिबन्धकम् इति वा । **एनः**- इत्येकवचनं जात्यभिप्रायकम् । वस्तुतस्तु 'कियदिदं निवर्त्यमेनः ? निवर्तकानुरूपं हि न भवति ;नहि सर्वशक्तेस्तव इदमनुरूपं लक्ष्यम् ; नापि नमउक्तेः ; भूयसी हि सा इति एकवचनस्याभिप्रायः। अस्मत् - अस्मत्तः, युयोधि - पृथक्कुरु, विनाशयेति भावः ।

यद्वा - पृथक्कुरु, एतावदेव याचे त्वां, जुहुराणम् एनः अस्मत्तः प्रथमं वियोजय इति, तत्पश्चात् यथामनोरथं विनाशयसि चेद्विनाशय, पुरुषान्तरे संक्रामय, नास्ति तत्रास्माकं निर्बन्ध इति भावः ।

### इष्टसाधनतया शरणागतिविधानम्

**भूयिष्ठाम्** - अनन्यगतित्वादिगुणैरावृत्तितश्च भूयसीं, नमउक्तिं, ते- अवाप्तसमस्तकामतया निरुपाधिकसर्वस्वामितया च नमउक्त्यन्यनिरपेक्षाय ते, **विधेम** - विदध्महे, व्यत्ययो बहुलमनुशिष्टः । नम उक्तेरनुवृत्तिं या नाथं प्रति नाथते । 'नम इत्येव वादिनः' (म.भा.शां.337-40) इति हि मुक्तानामपि लक्षणं मोक्षधर्मे श्रुतम् । मानस-कायिकयोर्नमसोरभावेऽपि नमश्शब्दमात्रेण त्वं प्रसन्नो भवितुमर्हसीत्युक्तिशब्दाभिप्रायः।

हे अग्ने देव विश्वानि वयुनानि विद्वान् त्वं जुहुराणमेनोऽस्मत्तो युयोधि, सुपथाऽस्मान् राये नय, वयं ते भूयिष्ठां नमउक्तिं विधेम इत्यन्वयः ।

नित्याजलिपुटा हृष्टा नमउक्तिं विधेम इत्यर्थः। नम इत्येववादिनो भवामेति भावः।

अष्टादशमन्त्रप्रतिपाद्यसारांशः

एवमस्मिन्ननुवाके आदितो मन्त्राष्टकस्य चेतनाचेतनरूपमपरतत्त्वद्वयं कर्मयोगज्ञानयोगरूपं व्यवहितोपायद्वयं च प्रधानप्रतिपाद्यम्; उपरितनाष्टकस्य तु परतत्वपरमपुरुषविषयकं भक्तियोगरूपं साक्षात्साधनम्; अवशिष्टमन्त्रद्वयस्य सर्वफलसाधनं प्रपदनं प्रधानप्रतिपाद्यम्।

गीतायाः षट्कत्रयानुरोधेन मन्त्राणां विभागः

एवं च श्रीभगवद्गीताध्यायेषु प्रथमषट्कं प्रथमाष्टकस्योपबृम्हणम्, द्वितीयषट्कं द्वितीयाष्टकस्य, तृतीयषट्कमवशिष्टमन्त्रद्विकस्योपबृम्हणम्। तृतीयषट्कं हि प्रथममध्यमषट्काभ्याम् उक्ततत्वोपायपुरुषार्थविशदीकरणपूर्वकं शरणागतिविधिप्रधानम्। तत्र चरमश्लोकस्य पूर्वार्धं 'वायुरनिलममृतम्' (ई.उ.17) इति मन्त्रोक्तानुष्ठानविधायकम्। उत्तरार्धन्तु 'युयोध्यस्मज्जुहुराणमेनः' (ई.उ.18) इति प्रार्थयमानानां प्रार्थनापूरणसंकल्पपूर्वकं शोकप्रतिक्षेपकमिति चरमश्लोकोऽप्यस्य मन्त्रद्विकस्योपबृम्हणमेवेति सिद्धम्।

एवं परतत्वतद्विभूतियोगतदुपासनतत्प्रपदनतत्फलविशेषान् संगृह्य संहितेयं समपूर्यत।

वेदान्तगुरुपादाब्जध्याननिर्मलचेतसा।
वाजिवेदान्तसारार्थः श्रीवत्साकेन दर्शितः॥
यदिह रहस्यं विवृतं यद्वा न्यूनं वचोऽधिकं यच्च।
कृपया तदिदं सर्वं देवः क्षमतां तथा महान्तोऽपि॥

## श्रीरंगाचार्यभाष्यम्

### अवतारिका

'अग्ने नय' इत्ययं मन्त्रः काण्वैः अष्टादशमन्त्रतया पठ्यते; माध्यन्दिनैस्तु षोडशमन्त्रतया। अथ यदि स्वाभीष्टोपकरणविग्रहपरिग्रहादरं न जहासि; तर्हि

भोगैश्वर्यलक्षणं पुरुषार्थमेव आश्रयस्व, तत्रापि अस्मत्परिचर्योपयोगिविग्रहपरिग्रहस्य तेन अस्मत्परिचर्याकरणस्य ततस्त्वदीयशेषत्वस्वरूपाभ्रंशस्य च सम्भवात् इत्याशंकापरिहाराय प्रवृत्तः अयं मन्त्रः ।

*अस्य मन्त्रस्य पदविवरणम्* हे अग्ने - अग्निशरीरक । स्वरूप-सत्तास्वभावप्रयोजकापृथक्सिद्धिसम्बन्धेन अग्निविशिष्टभगवन् ; इति यावत् । शरीरशरीरिभावस्य दर्शितसम्बन्धविशेष एव पर्यवसानात् प्रागुक्तरीत्या शरीर-वाचकानां शब्दानां शरीरपरत्वसम्भवाच्च अत्र अग्निशब्दः अग्निशरीरकभगवत्परः । अग्निरपि हि भगवतश्शरीरभूत एव 'योऽग्नौ तिष्ठन्नग्नेरन्तरो यमग्निर्न वेद यस्याग्निश्शरीरं योऽग्निमन्तरो यमयति एष त आत्मान्तर्याम्यमृतः' (बृ.उ.5-7-9) इत्यन्तर्यामिब्राह्मणात् ।

अपुनरावृत्तिलक्षणमोक्षप्रार्थना

अत्र अग्निशरीरकभगवतस्सम्बोधनम्, अर्चिरादिमार्गे अग्नेः प्रथमातिवाहिकत्वेन तच्चोदनेन तद्द्वारा तेन मार्गेण स्वनयनविज्ञापनार्थम् । अस्मान् - स्वसम्बन्धिनामपि ग्रहणाशयेन बहुवचनम् । सुपथा - शोभनश्चासौ पन्थाश्च - सुपन्थाः तेन अपुनरावृत्तिलक्षणेन अर्चिरादिमार्गेण । शोभनत्वम् अत्र अपुनरावृत्तिलक्षणत्वमेव । तेन पुनरावृत्तिलक्षणधूमादिमार्गव्यावृत्तिः । 'न पूजनात्' (पा.सू.5-4-69) इत्यनुशासनेन अत्र समासान्तकार्यनिवृत्तिः । राये - परमप्राप्यभूताय परमपुरुषलक्षणाय धनाय । भगवत्प्राप्तिलक्षणपरमपुरुषार्थरूपमुक्तैश्वर्याय इति यावत् । स्वरूपयाथात्म्यविदां परमपुरुष एव हि परमं धनम् - 'धनं मदीयं तव पादपंकजम्' (स्तो.र.30) 'यो नित्यमच्युतपदाम्बुजयुग्मरुक्मव्यामोहतस्तदितराणि तृणाय मेने' (वै.स्त.1) इत्यादिभिः तस्यैव तद्धनत्वावगमात् । अपि च - अर्चिरादिमार्गेण प्रापणीयैश्वर्यस्य भगवत्प्राप्तिलक्षणपरमैश्वर्यात् अन्यत्वं हि न सम्भवति ; भोगैश्वर्यस्य धूमादि-मार्गेणैव प्रापणीयत्वात् कैवल्यस्य ऐश्वर्यरूपतायाः एव असम्भवाच्च । परिशेषात् अर्चिरादिमार्गप्रापणीयं धनं भगवत्प्राप्तिलक्षणं परमपुरुषार्थरूपं मुक्तैश्वर्यमेव पर्यवस्यति । 'राये अस्मान्' इत्यसन्धिश्छान्दसः । नय - देशविशेषे गमय । भोगैश्वर्यलक्षणे कैवल्यलक्षणे वा पुरुषार्थे पर्यवसानं मा कृथाः इति यावत् ।

'सुपथा' इति अर्चिरादिमार्गग्रहणेन प्राकृतविषयानुभवलक्षणभोगैश्वर्यव्यावृत्तिः धनपर्यायरैशब्देन कैवल्यव्यावृत्तिः । धनशब्दस्य भोक्तृस्वरूपातिरिक्तभोग्य-भोगोपकरणविषयपरत्वात्, कैवल्ये स्वात्मस्वरूपस्यैव परमप्राप्यत्वाच्च ।

हे **देव** - लीलाविभूतौ क्रीडालक्षणलीलानुभवरसिक ! तादृशरसानुभवकौतुकेन त्वया प्रणीतमायास्त्वयैव निवर्तनीयाः । त्वदन्येन निवर्तयितुम् अशक्यत्वेन तन्निवर्तनाय त्वामेव प्रार्थये -

'दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' ।। (भ.गी.7-14)

इति त्वयैव हि उक्तम् इति भावः । **विश्वानि वयुनानि** - सर्वविधान्युपासनलक्षणानि विज्ञानानि 'माया वयुनं विज्ञानं' इति हि नैघण्टुकाः । **विद्वान्** जानन् त्वमेव । सर्वाधिकारिगतान् सर्वानप्युपासनभेदान् जानन् त्वमेवेति यावत् ।

एतद्विशेषणाभिधानं स्वोपासनोद्देश्याशास्यापि भगवता ज्ञाततया तद्विरोधि-निबर्हणद्वारा तत्प्रापणार्थम् । 'अस्मान्' इत्येतत् इहाऽपि अनुषज्यते । अस्मान् **जुहुराणं** - प्रसह्य हरत् । भवत्प्राप्तिलक्षणपरमपुरुषार्थात् अन्यत्र भोगैश्वर्यादिक्षुद्र-पुरुषार्थे चापलजननेन प्रसह्याऽऽकर्षदित्यर्थः । **एनः** गुणमयत्वदीयमायामयं पापम् । **अस्मत्** - अस्मत्सकाशात् । **युयोधि** - वियोजय, 'यु-मिश्रणामिश्रणयोः' (पा.धा.1033) इति अनुशासनोक्तामिश्रणस्य विभागरूपत्वात् ।

भोगैश्वर्यादिक्षुद्रपुरुषार्थप्रापकं अस्मदभिमतविरोधिभूतं गुणमयत्वदीयमायामयं पापं दूरीकृत्य भवत्प्राप्तिलक्षणं परमपुरुषार्थं त्वमेव प्रापयेति भावः । कुतः एष निर्बन्धः क्रियते भोगैश्वर्यादिक्षुद्रपुरुषार्थप्राप्तावपि मच्छेषवृत्त्यनुष्ठानं हि सम्भवति । अत एव च -

'दिवि वा भुवि वा ममास्तु वासो नरके वा नरकान्तक प्रकामम् ।
अवधीरितशारदारविन्दौ चरणौ ते मरणेऽपि चिन्तयामि ' ।। (मु.मा.6)

इत्याद्युक्तरीत्या महात्मभिरपि भोगैश्वर्यालये स्थितिमनिरुन्धानैरेव मत्परिचर्याप्रार्थनं क्रियमाणं दृश्यते इत्यत्राह -

**भूयिष्ठाम् इत्यादि**। **भूयिष्ठाम्** - भूयसीं कालापरिच्छिन्नां यावदात्मभाविनीम् इत्यर्थः । ते - तुभ्यम्, नमउक्तिम् नमश्शब्दानुसन्धानम् ; तदुपलक्षितां सर्वावस्थोचिताशेषशेषवृत्तिरूपां परिचर्यामिति यावत् ।

'ये च मुक्ता भवन्तीह नरा भरतसत्तम ।

तेषां लक्षणमेतद्धि यच्छ्वेतद्वीपवासिनाम्' (म.भा.शां.326-14)

इत्यभिधानपूर्वकम्, 'कृतांजलिपुटा हृष्टा नम इत्येव वादिनः' (म.भा.शां.337-40) इत्युक्त्या नमश्शब्दानुसन्धानपूर्वकयावदात्मभाविसर्वविधपरिचर्यैव हि मुक्तैश्वर्यरूपाऽभिहिता ।

**विधेम** - विदध्याम । 'विध विधाने' (पा.धा.1326) इति तौदादिकाद्विधतेः प्रार्थनायां लिङ् । यावदात्मभाविसर्वावस्थोचिताशेषशेषवृत्तिलक्षणकैंकर्यरूपं परमपुरुषार्थमेव यतो वयं प्रार्थयामहे - ततः तद्विरोधिसत्त्वरजस्तमोगुणद्रव्यमयत्वदीयमायान्वयं निश्शेषं निवर्तय ।

सति तु दर्शितगुणमयमायान्वये, सत्त्वोद्रेककाले कदाचित्त्वदीयपरिचर्यान्वयसम्भवेऽपि रजस्तमोभ्यां स्वोद्रेककाले तन्निरोधेन तद्विच्छेदस्य दुर्वारत्वात् भूयसा कालेन शनैश्शनैरधोगतिप्राप्तेरपि सम्भावितत्वाच्च निश्शेषतन्निवर्तनपूर्वकंभवत्परिचर्यालक्षणपरमपुरुषार्थमेव प्रापय । केषांचिदत्रैव भवत्परिचर्याप्रार्थनमपि अन्यादृशपरिचर्यायाः सहसा दुर्लभत्वाभिप्रायेण संप्रतीदृश्यपि परिचर्या लब्धा चेद्वरम् इत्याशयेनैवेति भावः।

यद्वा - यदि मायान्वयं न निवर्तयसि तदा तवापि दुर्भरं कार्यं करिष्याम इत्याशयेन उच्यते - भूयिष्ठां इत्यादि । भूयिष्ठाम् - भूयसीं, भूरिभाररूपतया तवापि दुर्भरा ते नमउक्तिमेव, विधेम - तवापरिहार्यमहाकष्टरूपां नमइत्युक्तिमेव करिष्याम इति यावत् । 'अंजलिः परमा मुद्रा क्षिप्रं देवप्रसादिनी' इत्येवं भरद्वाजसंहितोक्तलक्षणं हि भवदीयं शीलम् ; तदुपरि नम इत्यस्याप्यभिधानं तव दुर्भरो भारः किल भविष्यति ।

'शंखचक्रगदापाणे द्वारकानिलयाच्युत ।

गोविन्द पुण्डरीकाक्ष रक्ष मां शरणागताम् ' ।।

'हा कृष्ण द्वारकावास क्वासि यादवनन्दन ।
इमामवस्थां सम्प्राप्तामनाथां किमुपेक्षसे' ।। (म.भा.सभा.)

इत्यनन्यशरणत्वाकारलक्षणनमश्शब्दार्थानुसन्धानपूर्वकद्रौपदीकृतरक्षणप्रार्थना -

'गोविन्देति यदाक्रन्दत्कृष्णा मां दूरवासिनम् ।
ऋणं प्रवृद्धमिव मे हृदयान्नापसर्पति' ।।

'नातिस्वस्थमना ययौ' (म.भा.उ.58-22) इत्यादिभिस्तवापि दुर्भरभाररूपा बभूव इति हि विज्ञायते । अतः त्वदीयस्वभावपर्यालोचनयापि नमउक्त्यनुसन्धानेन त्वत्क्लेशनात्प्रागेव द्रुतमस्मदभिमतं समर्थय इति भावः ।

यद्यप्यस्य मन्त्रस्य तत्र तत्राग्निकर्मसु तदुपस्थाने विनियोगदर्शनात्तदनुगुण एवार्थो वर्णनीयः ; तथापि परविद्याप्रकरणानुगुण्येनात्रायमेवार्थो न्याय्यः, एकस्यैव मन्त्रस्य 'सैन्धवमानय' इति वाक्यस्येव नानार्थकतायाः स्थलभेदेनार्थभेदेन विनियोगभेदस्य च सम्भवेन विरोधाभावादित्यवधेयम् ।

**युयोधि-जुहुराणम् इति पदयोः व्याकरणांशनिरूपणम्**

'यु-मिश्रणामिश्रणयोः' इति यौतिरयमदादिगणघटको धातुः । तस्मादपि - 'बहुलम् छन्दसि' (पा.सू.2-4-76) इत्यनुशासनेन - छन्दसि विषये बहुलं शपः श्लुर्भवति, यत्रोक्तं तत्र न भवति, अन्यत्रापि च भवति इत्यर्थकेन लोटि सिपि शपः श्लुर्भवति, ततः 'श्लौ' (पा.सू.6-1-10) इत्यनुशासनेन धातोर्द्विर्वचने । 'सेर्ह्यपिच्च' (पा.सू. 3-4-870) इत्यनुशासनेन सेर्ह्यादेशे 'वा छन्दसि' (पा.सू.3-4-88) इत्यनुशासनेन तदपित्वस्य वैकल्पिकत्वेन ङित्वाप्राप्तौ 'अङितश्च' (पा.सू.6-4-103) इत्यनुशासनेन हेर्ध्यादेशे तस्य ङित्वाभावेन - 'सार्वधातुकार्धधातुकयोः' (पा.सू.7-3-84) इत्यनुशासनेन गुणे च सति युयोधीति रूपं भवतीति बोध्यम् ।

'हृ प्रसह्यहरणे' (पा.धा.1097) इति जुहोत्यादिगणघटकस्य धातोः परस्मैपदिनोऽपि 'व्यत्ययो बहुलम्' (पा.सू.3-1-85) इत्यनुशासनेन छान्दसपदव्यत्ययेन आत्मनेपद-लडादेशतकारे अस्मिन् सूत्रे 'बहुलम्' इति विभज्य 'छन्दसि विषये सर्वे विधयो

भवन्ति' इति भाष्ये व्याख्यानेन 'बहुलं छन्दसि' (पा.सू.7-1-103) इत्यनुशासनेन बहुलग्रहणबलेन च ऋदन्तधात्वंगं प्रति तत्सूत्रविहित उकारादेशस्य ऋदन्तधात्वंगस्यापि स्वीकारे ऋकारस्य रपरोकारादेशे धातोर्द्विर्वचनाभ्यासवर्णलोपविकारेषु लडादेश-तकारस्य शानचि च कृतेषु जुहुराणमिति रूपं भवति।

यद्वा - 'हुर्छा कौटिल्ये' (पा.धा.211) इति भौवादिकधातोः परस्मैपदिनोऽपि प्रागुक्तानुशासनबलेन छान्दसपदव्यत्ययेनाऽऽत्मनेपदलडादेशतकारे 'बहुलम् छन्दसि' (पा.सू.2-4-76) इत्यनुशासनेन प्रागुदाहृतेन शपः श्लौ जाते ततो धातोर्द्विर्वचने 'हलादिश्शेषः'(पा.सू.7-4-60) इत्यनुशासनेन अभ्यासरेफच्छकारयोः लोपे 'कुहोश्चुः' (पा.सू.7-7-62) इत्यनुशासनेन अभ्यासहकारस्य जकारे 'राल्लोपः' (पा.सू.6-4-21) इत्यनुशासनेन छकारलोपे लडादेशतकारस्य शानचि च कृते जुहुराणमितिरूपं भवति । धात्वर्थकौटिल्यं च वंचकत्वम् । तथा च अस्मान् जुहुराणं वंचयत् परमप्राप्यभगवत्स्वरूपं तिरोधाय क्षुद्रप्राप्यान्तरभोग्यताबुद्धिजननेन तत्र प्रवर्तयदित्यर्थो बोध्यः।

यद्वा 'हुच्र्छेस्सनो लुक्छलोपश्च' (उणादि 248) इत्युणादिद्वितीयपादसूत्रेण हुच्र्छधातोः कर्तरि वर्तमानेऽर्थे आनच्प्रत्ययो भवति। सन्प्रत्ययस्य लुक्छलोपश्च - इत्यर्थकेन हुच्र्छधातोरानचि कृते कृतसन्प्रत्ययतदधीनद्विर्वचनस्य तस्य धातोः सनश्छस्य च लोपे जुहुराणम् इति रूपं भवति । तदा जुहुराणं सदा वंचयितुम् उद्यतमित्यर्थोऽवसेयः । सर्वथाप्यस्मदपकारकरणैकोद्यतमिति पर्यवसन्नोऽर्थः, धात्वर्थकुटिलत्वस्य भाववक्रीकरणरूपक्रौर्ये पर्यवसानात्। 'जुहुराणश्चन्द्रमाः' इति तु-आकारवक्रीकरणाभिप्रायेण प्रयोग इति बोध्यम् । इह कौटिल्यमपसरणमिति मैत्रेयपक्षे धातोरकर्मकत्वमभिमतम् । वंचकत्वम् कौटिल्यमिति पक्षे सकर्मकत्वमिति भेदोऽवसेयः । अपसरणमनृजुगमनं वक्रगमनमिति पर्यवसन्नम्, अन्यथापसरणस्य कौटिल्यशब्दबोध्यत्वासम्भवात् । 'तदा जुहुराणश्चन्द्रमाः' इत्यत्र विक्षेपवशात् वक्रगन्ता चन्द्रमा इत्यर्थोऽवसेयः । 'जुहुराणमेनः' इत्यत्र तु जुहुराणम्

अनादिकालादृक्रमेवगच्छत् अपकारं कुर्वदेव गच्छत्, नतु तं विना तूष्णीमृजुगच्छदित्यर्थः । इदानीं त्वस्मानित्यस्य नानुषंग आवश्यक इति ।

उपनिषत्तात्पर्यार्थसंग्रहः

अयमत्रैतदुपनिषदर्थतात्पर्यसंग्रहः - प्रथममन्त्रे सर्वेश्वरस्य नियन्तृत्वशेषित्वे जगतो नियाम्यत्वशेषत्वे च तत्तदसाधारणाकारौ ज्ञापयित्वा तद्बलेन मुमुक्षोः स्वसम्बन्धिसर्ववस्तुषु कर्तृत्वममताफलविषयत्रिविधत्यागलक्षणज्ञानविशेषेण संस्करणपूर्वकं तेषु भगवद्भोगान्तर्गततयैव स्वभोगविधानमुखेन वक्ष्यमाणपर-विद्यांगभूतकर्मयोगापेक्षितो ज्ञानविशेषलक्षणसंस्कारविशेषो दर्शितः । स च ज्ञान-विशेषः 'भगवानेव स्वनियाम्यस्वरूपस्थितिप्रवृत्तिस्वशेषतैकरसेनानेनात्मना स्वकीयैश्च देहेन्द्रियान्तःकरणैः स्वकीयैरेव कर्मभिस्स्वकीयद्रव्यमयैरेव च भोगैः स्वात्मानं स्वयमेव प्रीतं कारयति' इत्येवमादिरूपः ।

द्वितीयमन्त्रे च वक्ष्यमाणपरविद्यांगतया यावज्जीवं यथाधिकारं कर्मयोगः अप्यनुष्ठेयतया दर्शितः । कर्मयोगस्य अर्वाचीनफलद्वारा बन्धकत्वभ्रमपरिहाराय दर्शितत्यागविशेषलक्षणसंस्कारबलेन अर्वाचीनफलसम्बन्धलक्षणतल्लेपासम्भवोऽपि ज्ञापितः ।

तृतीयमन्त्रे च प्रथमद्वितीयमन्त्रपर्यवसन्नार्थभूतशेषित्वनियन्तृत्वलक्षणपर-स्वरूपयाथात्म्यशेषत्वनियाम्यत्वलक्षणस्वस्वरूपयाथात्म्यैतदुभयज्ञानपूर्वकपरविद्याग-कर्मयोगानुष्ठानविरहिणाम् आत्मघ्नत्वेन निन्दापूर्वकं परविद्यावैधुर्येण क्रमेण महानर्थप्राप्तेः अवर्जनीयत्वाभिधानमुखेन दर्शितलक्षणकर्मयोगनिष्ठाया अतिशीघ्रमेवावश्यसम्पादनीयता दर्शिता ।

चतुर्थादिभिरष्टमान्तैः पंचभिर्मन्त्रैः अनेकात्मसु सत्सु तत्रैकस्य परं कथं नियन्तृत्वशेषित्वे? कथं वाऽन्येषां सर्वेषां चेतनाचेतनानामविशेषेण नियाम्यत्व-शेषत्वे? इत्याशंकापरिहारार्थमत्र विवक्षितपरवद्यायामनुसन्धानार्थं च परमात्मनोऽघटितघटनासामर्थ्याखिलभूतान्तरात्मत्वादिकल्याणगुणाश्रयत्वं तथा-विधाकारानुसन्धानफलप्रदर्शनमुखेन तदनुसन्धानावश्यकता च प्रत्यपादि ।

नवमप्रभृतिभिरेकादशपर्यन्तैस्त्रिभिर्मन्त्रैः मुमुक्षोः कर्मविद्ययोरेकैकमात्रानुष्ठानेऽनर्थपर्यवसानावर्जनीयताज्ञापनमुखेन कर्मसहचरिताया एव विद्याया अनुष्ठेयता प्रतिपादिता।

द्वादशादिभिश्चतुर्दशपर्यन्तैस्त्रिभिर्मन्त्रैः सामान्यतश्शरीरप्राप्तिगर्भितपुरुषार्थोद्देशेन वा सामान्यतोऽशरीरत्वप्राप्तिगर्भितपुरुषार्थोद्देशेन वा यथोक्तलक्षणविद्यानुष्ठाने प्रथमपक्षे नश्वरप्राकृतभोगैश्वर्यप्राप्तिपर्यवसानेनानिष्टप्राप्तेः, द्वितीयपक्षे यावदात्मभाविस्वरूपविरुद्धकैवल्यलक्षणमोक्षप्राप्तिपर्यवसानेन अनिष्टप्राप्तेश्च अवर्जनीयता, ततः एकविधशरीरनिर्मूलनिवृत्यपरविधशरीरप्राप्त्युभयगर्भितपुरुषार्थोद्देशेन यथोक्तलक्षणविद्यानुष्ठान एव स्वरूपानुगुणपरमपुरुषार्थलक्षणमोक्षप्राप्तिश्च प्रतिपादिता।

ततः पंचदशादयोऽष्टादशपर्यन्ताश्चत्वारो मन्त्राः यथोक्तलक्षणविद्याकरणतयाऽनुसन्धेयास्स्वरूपानुगुणपरमपुरुषार्थलक्षणमोक्षप्रार्थनागर्भा अव्यभिचारेण तथाविधमोक्षप्राप्तिप्रयोजका आवश्यकोपास्याकारानुसन्धनगर्भा अन्तरादित्यवर्तिपरमपुरुषविषयपरविद्यापराः प्रवृत्ताः इति।

तथा च अस्यामुपनिषदि कर्मयोगांगिकयैवानुष्ठितया परविद्यया मोक्षप्राप्तेः प्रतिपादनेन 'कर्मयोगनिरपेक्षयैव परविद्यया मोक्षप्राप्तिः प्रत्युत कर्मयोगस्य विरोधित्वमेव' इति वदन्तः कुदृष्टयः परास्ताः इति वेदितव्यम्।

### शांकरमतानुवादः

यत्पुनरत्राह शंकरः - "अस्यामुपनिषदि 'विद्ययाऽमृतमश्नुते' इत्येकादशमन्त्रे 'सम्भूत्याऽमृतमश्नुते' इति चतुर्दशमन्त्रे च 'अमृतमश्नुते' इत्युक्तिर्नामृतशब्दमुख्यार्थमोक्षविषया, अपि तु देवतात्मभावलक्षणार्वाचीनपुरुषार्थविषयैव। पारलौकिकैश्वर्यरूपस्यास्याप्यैहिकैश्वर्यापेक्षयोत्कृष्टत्वेन तदपेक्षया मोक्षरूपत्वेन निर्देशार्हतयोपचारतोऽमृतशब्दबोध्यता सम्भवत्येव।

एवमत्र विद्याशब्दो न मुख्यपरविद्यारूपपरमात्मविद्यापरः। अपित्वर्वाचीनदेवता-

ज्ञानरूपोपासनपरएव,अविद्यासाहचर्येणानुष्ठेयतयाऽभिधीयमानविद्यापरत्वावगमात्, मुख्यपरविद्याया अविद्यासाहचर्येणानुष्ठेयत्वासम्भवाच्च । अत एव च ईदृशविद्यासाध्यपुरुषार्थपरतयाऽवगम्यमानस्यामृतशब्दस्यापि साक्षान्मोक्षपरत्वं न कथंचिदपि वक्तुं शक्यमित्यर्वाचीनपुरुषार्थपरत्वमाश्रितम् ।

न च - 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह । अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते' । (ई.उ.11) इति श्रुत्यैवामृतोपायत्वेन विद्यायाः मृत्यु-तरणोपायत्वेनाविद्यायाश्च, प्रतिपाद्यमानत्वेन तयोरविरोधस्यैव स्फुटं प्रतीयमानतया तर्केण कथं तयोर्विरोधस्सुवच इति वाच्यम्, कठवल्ल्युपनिषदि द्वितीयवल्ल्यां 'दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता' (क.उ.2-4) इति श्रुत्यैव विद्याविद्ययोः परस्परविरुद्धतायाः प्रस्फुटं श्रूयमाणत्वात् । द्वयोश्श्रुत्योरविरोधस्य न्यायेनैव समर्थनीयतया न्यायसंचारे कृते मुख्यपरविद्याया अविद्यायाश्च स्वरूपतः फलतश्च विरोधस्य दुरपह्नवत्वेनात्र विद्याशब्दोऽर्वाचीनविद्यापरः, अमृत-शब्दश्चार्वाचीनफलपर इत्येव स्वीकर्तुं शक्यम्, तयोरेवाविरोधसम्भवात् । विद्याविद्ययोर्हि तेजस्तिमिरयोरिव स्वरूपत एव विरोधः । अतः प्रकाशवति तिमिरस्येव विद्यावत्यविद्याया उदयस्यैव नावकाश इति न तयोस्साहचर्यसम्भवः । अविद्यया हि प्रवृत्तिधर्मेण विद्याफलमोक्षविरोध्यर्वाचीनस्वर्गादिफलं संचिनोति पुरुष इति फलतोऽपि विद्याविद्ययोर्विरोधो दुर्वारः । एवमत्र श्रूयमाणविद्याशब्दस्य मुख्यपरविद्यापरत्वे तन्निष्ठस्यात्रैव ब्रह्मप्राप्तिसम्भवेन तदर्थं क्वचिद्-गमनस्यैवानावश्यकत्वेनोत्तरत्र श्रूयमाणाया अर्चिरादिमार्गेण देशान्तरनयनयाचनाया अनुपपत्तेरपि यथोक्तरीत्याऽर्वाचीनदेवतोपासनरूपविद्यापरत्वमेव स्वीकार्यम्" इति ।

### विद्याशब्दस्य परविद्यापरत्वसमर्थनम्

तदेतत्सर्वं, दर्शितप्रकरणस्थविद्याविद्यादिशब्दार्थस्वरूपौपनिषदप्रकरण-सन्दर्भासन्दर्भादिसम्यगपरामर्शमूलमविवेचितमरमणीयमेवेति विवेकिना विदुषामनु-पादेयमेव । तथा हि - अस्यामुपनिषदि चतुर्थ-पंचम-षष्ठ-सप्तमाष्टममन्त्रेषु मुख्या

परविद्यैवोपदिश्यत इति, तृतीयमन्त्रे मुख्यपरविद्यारहिता अविद्वांस एव निन्द्यन्त इति च निर्विवादं त्वयैवाभ्युपगतम् । इत्थं प्रकरणप्रस्तुतां मुख्यां परविद्यां नवमदशमैकादशमन्त्रेषु श्रूयमाणविद्याशब्दो नाभिधत्ते, किं तु तृतीयमन्त्रनिन्दिताविद्वन्निष्ठारूपां सम्प्रति प्रधाननिरूपणीयत्वेनाप्रस्तुतामपरविद्यामेव अभिधत्ते, मुख्यपरविद्यापरतया तद्रहितनिन्दापरतया च प्रागुपदर्शितमन्त्रव्यतिरिक्तग्रन्थशेषः कृत्स्नोऽप्यपरविद्यानिष्ठपर एवेति कथनं ह्यविवेकविलसितमेवेत्यतिमुग्धजनानामपि सुगमम् मुख्यपरविद्योपदेशापरविद्यानिष्ठाविद्वन्निन्दयोः क्रियमाणयोरपरविद्याया उपादेयतायाः तत्प्रकरण एव कथनस्य औचित्यलेशाभावात्, पुरस्तादुपरिष्टाच्च परविद्यायां प्रस्तूयमानायां, क्रियमाणायां च तद्रहितनिन्दायां मध्ये द्वितीयमन्त्रस्य अविद्वद्विषयत्वकल्पनाया अत्यन्तमेवासंगतत्वाच्च । किं च यमधिकारिणमुद्दिश्य प्रथमत उपदेशप्रवृत्तेयमुपनिषत्, तमेवोद्दिश्य ग्रन्थशेषस्यापि तदपेक्षितार्थप्रदर्शनपरताया एवावश्यकतया मध्येऽधिकार्यन्तरप्रस्तावस्यैवानवकाशेन मध्ये मध्ये क्वचित्क्वचिदविद्वन्निष्ठोपदेशपरत्वकल्पनं हि न कथंचिदपि संजाघटीति ।

### अविद्याशब्दार्थविमर्शः

अथ अत्र अविद्याशब्दार्थः क इति तावद्विचारयामः । न तावदज्ञानम् ; 'अविद्यया मृत्युं तीर्त्वा' (ई.उ.11) इति मृत्युतरणोपायत्वेन श्रूयमाणाया अविद्याया मृत्युप्राप्तिहेतुभूताज्ञानरूपत्वासम्भवात् । किं तु विद्येतरद्वर्णाश्रमविहितं कर्मैव । मृत्युशब्दश्चात्र ज्ञानोत्पत्तिप्रतिबन्धकप्राचीनपुण्यपापलक्षणकर्मवाची । तन्निवृत्तिहेतुत्वं च वर्णाश्रमविहितकर्मयोगस्य सम्भवति, 'धर्मेण पापमपनुदति' (तै.ना.6-50) इति श्रुतेः,

> 'कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः ।
> कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ।।' (म.भा.शां.262 (अ))

इति स्मृतेः, 'यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्' (भ.गी.18-5) इति भगवद्वचनाच्च ।

विद्याविद्ययोर्विरोधाभावः

तथा च अत्र अविद्याशब्दार्थस्य वर्णाश्रमविहितकर्मजातस्य विद्योत्पत्तिविरोधिपुण्यपापलक्षणप्राचीनकर्मनिबर्हणमुखेन विद्योत्पत्तिहेतुताया एवावगमेन कथमत्र विद्याविद्ययोः विरोधकथावकाशः ।

अत्र अविद्याशब्दार्थभूतं वर्णाश्रमविहितं कर्मजातं फलकर्तृत्वममताविषयत्रिविधत्यागपूर्वकम् अनुष्ठितमेव विवक्षितं, तादृशस्यैव तस्य विरोधिनिबर्हणद्वारा विद्योत्पत्तिहेतुत्वात् । अत एव हि उक्तं भगवता -

'त्यागो हि पुरुषव्याघ्र त्रिविधस्सम्प्रकीर्तितः ।
यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ।
एतान्यपि तु कर्माणि संगं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितम्मतमुत्तमम् ।।' (भ.गी.18-4,5,6) इति
'स्वे स्वे कर्मण्यभिरतस्संसिद्धिं लभते नरः ।
स्वकर्मनिरतस्सिद्धिं यथा विन्दति तच्छृणु ।।
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ।।' (भ.गी.18-45,46) इति च ।

अत्र 'संगं त्यक्त्वा फलानि च' इत्यनेन 'स्वकर्मणा तमभ्यर्च्य' इत्यनेन च अर्वाचीनफलादिविषयत्यागपूर्वकं भगवदाराधनरूपतयाऽनुष्ठितस्यैव स्वस्ववर्णाश्रमविहितकर्मजातस्य विरोधिपापनिबर्हणमुखेन विद्योत्पत्तिहेतुत्वमवगम्यते स्पष्टम् । इत्थं त्यागवशेन अर्वाचीनफलान्तरप्रसंगस्यैव निरुद्धतया फलतोऽपि नात्र विवक्षिताविद्याया विद्यया सह विरोधप्रसंगावकाशः । तदिदमेवाभिसन्धायोक्तमस्यामप्युपनिषदि - 'कुर्वन्नेवेह कर्माणि' (ई.उ.2) इत्यादिद्वितीयमन्त्रे । अत्र अविद्याशब्दितवर्णाश्रमविहितधर्मानेव कर्मशब्देन निर्दिष्टान् प्रथममन्त्रोक्तत्यागपुरस्सरं विद्यांगतयानुतिष्ठतः फलतो न विद्यया सह विरोधप्रसंगः ; त्यागबलेन अर्वाचीनविरोधिफलसम्बन्धलक्षणकर्मलेपासम्भवादिति हि अभिप्रेतम् ।

विद्याविद्ययोरविरोधेन कठवल्लीश्रुत्युपपत्तिः

न चैवं सति - कठवल्ल्युपनिषदि द्वितीयवल्ल्या 'दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता' (क.उ.2-4) इति विद्याविद्ययोर्विरोधः कथमुच्यत इति वाच्यम् ; मोक्षाख्यफलभोगार्थानुसन्धानरूपविद्यातदितरपशुपुत्रस्वर्गाद्यैहिकामुष्मिकार्वाचीनफल-भोगार्थानुसन्धानरूपाविद्ययोरेव तत्र विद्याविद्याशब्दविवक्षितत्वेनानुपपत्त्यभावात्, तयोरत्यन्तविरोधस्य सर्वसम्प्रतिपन्नत्वाच्च । विद्याविद्याशब्दितयोस्तयोरेव तत्र अत्यन्तविरोधोऽभिधीयत इति च तत्र पूर्वोत्तरभागयोः शब्दत एव सुस्पष्टम् । अतो न शब्दैक्यमात्रेण तत्रात्र च विद्याविद्याशब्दयोरेकार्थकत्वम् आश्रित्य ज्ञानकर्मणोर्विरोधस्सुवचः ।

अविद्याशब्दस्य कर्मपरत्वसमर्थनम्

अस्तु वा तत्राप्यविद्याशब्दः कर्मपरः । तथापि पशुपुत्रस्वर्गाद्यैहिकामुष्मिक-फलभोगहेतुकाम्यकर्मविषय एव तत्रत्याविद्याशब्द इति तु दुरपह्नवं, दर्शितार्वाचीन-फलकामनाया एव तत्प्रकरणे निन्द्यमानत्वस्य प्रस्फुटत्वात् । दर्शितार्वाचीन-फलकामिनः काम्यकर्मनिष्ठा एव च सर्वतो निन्द्यन्ते । यथोक्तं भगवता -

'यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ।।
कामात्मानस्स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ।।
भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ।।
व्यवसायात्मिका बुद्धिस्समाधौ न विधीयते ।।' (भ.गी.2-42,43,44) इति ।
'त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान् ।।
ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ।।' (भ.गी.9-20,21)

इति च । अत्र अर्वाचीनफलकामनायास्तदर्थं क्रियमाणकर्मणा चैव फलतो विद्याविरोधोऽभिधीयत इति स्पष्टम् ।

न च सर्वेषामेव कर्मणां यत्किंचिदर्वाचीनफलहेतुतायाश्शास्त्रेषु समन्ततो दर्शनात्तद्धेतुतया शास्त्रचोदितानां कर्मणां तदभिसन्धिमन्तरेणानुष्ठितानामपि तत्फलसंयोगोऽवर्जनीय एव । अतः कर्मणां विद्याविरोधोऽपि दुष्परिहर एवेति कात्स्न्र्येन कर्मणां त्याग एव विद्यानिष्ठानामावश्यक इत्येव दर्शितशास्त्राणां तात्पर्यमिति वाच्यम् ; गीतासु अष्टादशाध्याये -

'त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।
यज्ञदानतपःकर्म न त्याज्यमिति चापरे ।।
निश्चयं श्रुणु मे तत्र त्यागे भरतसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधस्सम्प्रकीर्तितः ।।
यज्ञो दानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ।।
एतान्यपि तु कर्माणि संगं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितम्मतमुत्तमम् ।।
नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ।।' (भ.गी.18-3,4,5,6,7) इति ।
'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनां प्रेत्य न तु सन्न्यासिनां क्वचित् ।।' (भ.गी.18-12) इति ।
'स्वे स्वे कर्मण्यभिरतस्संसिद्धिं लभते नरः
स्वकर्मनिरतस्सिद्धिं यथा विन्दति तच्छृणु ।
यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ।।' (भ.गी.18-45,46) इति ।
'सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ।।' (भ.गी.18-56)

इति च वदता भगवता वासुदेवेन -

'वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्' (भ.गी.15-15) इति स्वस्वरूपयाथात्म्यमपि स्वयमेवाभिदधता कर्मणां कात्स्न्र्येन त्याज्यत्वात्याज्यत्व-

विषयवादिविप्रतिपत्तिं प्रदर्श्य त्रिविधत्यागपूर्वकं कर्माणि कर्तव्यानीत्येव निश्चितं मम मतमिति स्वयं सिद्धान्तं कृत्वा तेषां विद्याविरोधिपापनिवृत्तिपूर्वकं विद्योत्पादनमुखेन परमसिद्धिप्रयोजकतायाः त्यागफलेन मोक्षविरोध्यर्वाचीनफलान्तराप्रयोजकतायाश्च स्पष्टमेव प्रतिपादनेन शास्त्राणां ब्रह्मविद्यानिष्ठस्य कार्त्स्न्येन कर्मत्याग एव तात्पर्यकल्पनस्याविवेकमूलताया अतिस्फुटत्वात्।

### विद्याशब्दस्य परविद्यापरत्वनिगमनम्

इत्थं च अत्र अविद्याशब्दविवक्षितकर्मणः प्रत्युत परविद्यात्यन्तोपकारकतया तद्विरोधगन्धानुपलम्भेन विद्याशब्दः परविद्यापर एव भवितुमर्हतीति सिद्धम्। न च मुख्यपरविद्यानिष्ठस्यात्रैव ब्रह्मप्राप्तिश्रवणेन क्वचिद्गमनानावश्यकतयोत्तरत्र अर्चिरादिमार्गेण क्वचिद्देशविशेषे नयनप्रार्थनादर्शनेनात्रत्यविद्याशब्दो न मुख्यपरविद्यापरो भवितुमर्हतीति वाच्यम् निश्शेषाविद्यानिवृत्तिमन्तरेण मुक्तेरसम्भावितातायाः तदर्थं सर्वेषामेव परविद्यानिष्ठानाम् अर्चिरादिमार्गेण देशविशेषगमनावश्यकतायाश्च सूत्रकाराशयानुरोधेनैव श्रीभाष्यकारैश्श्रीभाष्यादौ निर्धारितत्वात् [1]आसृत्युपक्रमाधिकरणे विदुष उत्क्रान्त्यभावकथायाः अत्रैव निश्शेषाविद्यानिवृत्तिगर्भब्रह्मप्राप्तिकथायाश्च दूरोत्सारितत्वाच्चात्रत्यविद्याशब्दस्य मुख्यपरविद्यापरत्वे क्षतिलेशायोगात्।

### परविद्या विचारः

अथ का सा मुख्या परविद्या ? या कर्मानुष्ठानं न सहते तेजस्तिमिरमिवेति भवन्तोऽभिमन्यन्ते इति पृच्छामः। ब्रह्माद्वैतमिति द्वैताभावविशिष्टब्रह्मविषयकविज्ञानमेव मुख्या परविद्या, सा च अद्वैतविषयकत्वादेव द्वैतानुसन्धानगर्भं कर्मानुष्ठानं न सहत इति चेत्। तदेवासम्बद्धम्, क्वचित्प्रसिद्धस्यैवार्थस्य क्वचिदभावप्रतीतेस्सर्वलोकसाक्षिकतया ब्रह्मेतरस्य वस्तुनः क्वचित् प्रतिपत्तिस्वीकारे ब्रह्मणि

1. ब्रह्मसूत्रेषु चतुर्थाध्यायद्वितीयपादे स्थितमिदमधिकरणं सप्तभिस्सूत्रैः प्रवृत्तम्। अवसानकाले देहादुत्क्रमणं आत्मनः श्रूयमाणं किं कर्मफलभोगार्थं तत्तल्लोकं जिगमिषोः बुभुक्षोरेव, उत मुमुक्षोरपि, इति विशये, न मुमुक्षोरिति प्राप्ते पूर्वपक्षं निरसितुं इदमधिकरणं अवतीर्णम्। अतश्च मुमुक्षोरपि देहादुत्क्रान्तस्यैव तमसः परस्तात् दिव्यलोके अर्चिरादिना गतस्यैव मोक्षलाभ इति परविद्यैवेयं तद्धेतुरिति च सिद्धम्।

द्वैतप्रतीतेरपरिहार्यत्वेन तदभावप्रतीतेरयोगात् तदस्वीकारे च क्वचिदप्यप्रतिपन्नस्य द्वैतस्य ब्रह्मण्यभावप्रतीतेस्सुतरामेवासम्भवाच्च । न हि खलु शशस्य श्रृगं क्वाप्यप्रसिद्धमिति ज्ञानन्ननुन्मत्तः कश्चिदपि पुरुषः 'इह शशश्रृगं नास्ति' इति प्रत्येति, व्यवहरति वा । तस्मात्, ब्रह्माद्वैतमिति ज्ञानं नानुन्मत्तस्य कस्यचिदनाहार्यं क्वचित्कदाचित्सम्भवितुमर्हति । न तद्विज्ञानं परविद्यारूपं वा भवितुमर्हति ।

### निर्विशेषब्रह्मस्वरूपज्ञानस्य परविद्यारूपत्वखण्डनम्

अथ तत्त्वमस्यादिवाक्यार्थज्ञानरूपं निर्विशेषब्रह्मस्वरूपमात्रविषयकं निर्विकल्पकविज्ञानमेव मुख्यपरविद्यारूपम्, तच्च कर्मज्ञानानुष्ठानादिकं न सहत इति चेत् । तदप्यसम्बद्धम् - तत्त्वमस्यादिसमानाधिकरणवाक्याद्विशेष्यविशेषणवाचकपदद्वयप्रतिपन्नयोर्विभिन्नप्रवृत्तनिमित्तविशिष्टयोरर्थयोरैक्यबोधनस्यैव सम्भवेनेदृशनिर्विकल्पकबोधस्य लोकव्युत्पत्तिविरोधेन कदाप्यसम्भवात्तदसम्भवस्य सोपपत्तिकं श्रीभाष्यादिषु निर्धारितत्वात्, तदुदयस्वीकारेऽपि वा यत्किंचिदेकवस्तुस्वरूपमात्रविषयकनिर्विकल्पकज्ञानस्य वस्त्वन्तरविषयकज्ञानादिविरोधित्वासम्भवेन तस्य कर्मादिज्ञानतदनुष्ठानादिविरोधित्वासम्भवाच्च । उपगच्छन्ति हि प्रत्युत गोत्वादिविषयकनिर्विकल्पकज्ञानं गवादिविशिष्टज्ञानहेतुं तान्त्रिकाः । तस्मात्परविद्यायाः कर्मानुष्ठानासहिष्णुत्वबलेनात्रत्यविद्याशब्दस्य अर्वाचीनदेवताविज्ञानपरत्ववर्णनम् उपनिषत्तत्त्वार्थापरिज्ञानमूलकोलाहल एवेति सिद्धम् ।

उपनिषत्स्वरूपपर्यालोचने तु प्रथमतः परविद्योपदेशमेव उपक्रम्य तदंगतयैव द्वितीयमन्त्रे - 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' (ई.उ.2) इत्यादिना यावज्जीवं कर्तव्यं विधाय ततो विद्याकर्मणोः एकैकमात्रानुष्ठाने च अनिष्टावाप्तिमप्यभिधाय तत एव हेतोः उभयोरेवाऽऽप्रयाणं सहानुष्ठेयत्वम् 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह' (ई.उ.11) इत्यनेनाभिधीयत इति स्पष्टमेव विज्ञायते । अनेकमन्त्रेषु ब्रह्मणोऽनेकेषां कल्याणगुणानामसकृद्वर्णनेन विद्यापि तादृशकल्याणगुणविशिष्टब्रह्मासकृदनुसन्धानरूपा यावत्पुरुषार्थप्राप्त्यनुदिनमनुवर्तनीयैव चाभिमताऽवगम्यते, न तु कादाचित्कवाक्यार्थज्ञानमात्ररूपा इत्यपि स्पष्टम् ।

विद्याविद्ययोरविरोधप्रतिपादनेन उपसंहारः

तदिदं सर्वमभिसन्धायैव हि 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' (ई.उ.2) इति 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह' (ई.उ.11) इति च इयम् उपनिषदुद्घोषयति । तस्मादंगागिभावेनाविद्याशब्दितं वर्णाश्रमादिधर्मलक्षणं विद्योदयोपचयहेतुभूतं कर्म । अनेककल्याणगुणविशिष्टब्रह्मासकृदनुसन्धान-लक्षणविद्याचेत्युभयं यावदायुषं यथाधिकारमहरहरनुष्ठेयमित्येवोपनिषदभिमतमिति सिद्धम् । अत एव च सूत्रकारेण भगवता बादरायणेनापि 'आवृत्तिरसकृदुपदेशात्' (ब्र.सू.4-1-1) 'आप्रयाणात्तत्रापि हि दृष्टम्' (ब्र.सू.4-1-12) इति सूत्राभ्यां विद्या-स्वरूपस्यासकृदनुसन्धानरूपत्वमाप्रयाणात् अहरहः अनुवर्तनीयत्वं च अभिहितम् । 'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्' (ब्र.सू.4-1-16), 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (ब्र.सू.3-4-26), 'सहकारित्वेन च' (ब्र.सू.3-4-33) इति सूत्रैः वर्णाश्रमादिधर्मलक्षणकर्मणां विद्योदयहेतुत्वमहरहरभ्यासाधेयातिशयाया विद्याया अनुग्रहार्थमाप्रयाणादनुष्ठेयत्वरूपं तत्सहकारित्वं च प्रस्फुटमेव दर्शितम् । तस्मादेतद्विरुद्धवादो वादिना यथावस्थितशास्त्रार्थानवबोधमूलकोलाहल एवेति सिद्धमित्यलं बहुना ।

ईशावास्येत्युपनिषदियं वाजिनां संहितान्त-
स्सांगां वर्णाश्रमनिगदितैः कर्मभिर्ब्रह्मविद्याम् ।
आतन्वन्तादनुदिनविनिष्पादनीयाम्मुमुक्षोः
कैवल्येच्छामपि विजहतः प्राह कैंकर्यदां च ।।

व्याख्यानव्यक्तसारामुपनिषदमिमां स्वैरमास्वादयन्तोऽ-
मन्दानन्दा भवेयुस्सकलसुमनसो वर्जयित्वा कुदृष्टीन् ।
सारासारानभिज्ञानिव करटगणान्निम्बवृत्तीन्विहाय
ज्ञातास्वादा वसन्तागमफलभरितामाम्रवन्यां पिकौघाः ।।

भिन्नत्वं पारमार्थ्यं द्वयमपि जगतो नेष्यते यैः परस्मा-
त्तेषां [1]कण्ठेगडुस्सन् क्रकचति हृदये चापि वेदान्त एषः ।

1. पुरुषस्य कण्ठबिलरोधकः बाधाकरो मांसपिण्डविशेषः कण्ठेगडुः । जीवनहेतोः अन्नपानाद्याहारसंग्रहणस्य यथा अयं प्रतिरोधकः, तथा उपनिषदियं मिथ्यावादस्य पोषणाय प्रयतमानानां सर्वथा निरोधक इति भावः । न केवलं तावत्, अपि तु क्रकचवत् खण्डकश्चेति ।

यो ब्रह्म प्राह चेशं तदितरदखिलं चापि तस्येशितव्यं
प्रब्रूते भोग्यभोगोपकरणविधया शेषभावैकशीलम् ।।
आध्यात्मिक्या सरण्या मम हृदयरथं स्वामियन्त्रश्वरूपाः
श्रीशः श्रीभाष्यकारो भुवनगुरुवरो रम्यजामातृयोगी ।
सज्जास्संचारयन्तो व्यदधत दृढसंघट्टितप्राच्यलेखां
निर्बाधां पद्धतिं तां विहरणरसिका निर्विशंकं श्रयन्ताम् ।।
ब्रह्मायुरुत्तरार्धे श्रीश्वेतवराहकल्प आद्येऽस्मिन् ।
वैवस्वताख्यसप्तममन्वन्तरगे चतुर्युगे चलति ।।
अष्टाविंशे च कलौ वसुगगनव्योमबाणसंख्यायाः ।
परिपूरणे पराभववर्षेऽर्के मिथुनभाजि नवमदिने ।।
श्रीमद्वेंकटशैलश्रीमदनन्तार्यसिंहपीठस्थः ।
ईशावास्योपनिषद्भाष्यं श्रीरंगसूरिरातनुत ।।

## आनन्दभाष्यम्

एवं प्रकृतिविविक्तप्रत्यगात्मानं परमात्मानं च अनुसन्धाय चरममन्त्रेण एनो निवृत्तिपूर्वकभगवत्प्राप्तये गतिविशेषेण नयनप्रार्थनां शरणागतः विधत्ते- अग्ने नय इति ।

### परमात्मप्राप्तिसाधनार्चिरादिगतिप्रार्थना

अग्ने - अग्रे नयतीति अग्निः ; तत्सम्बुद्धिः - अग्रनयनादिगुणगणोपेतभक्तानाम् ऊर्ध्वगतिप्रापकेत्यर्थः । अस्मान् - त्वच्छरणं प्रपन्नान् इतरगतिविहीनान् सुपथा-शोभनेन पथा अर्चिरादिमार्गेण नय - प्रापय स्वधाम देशविशेषरूपम् । अर्चिरादिः मार्गः भगवदुपासनावतां कृते प्रसिद्धः । किमर्थमित्याशंक्यामाह - राये - राः धनं तच्च भगवत्प्रपन्नानां भगवानेव । तेषां भगवदतिरिक्तधनेषु वैतृष्ण्यात् । तस्मै परमपुरुषरूपधनाय तत्प्राप्त्यर्थमित्यर्थः ।

ननु तदर्थं मामेव कुतः प्रार्थयसे इत्यत्राह - हे देव - द्योतमान मम बुद्धौ प्रकाशमानेत्यर्थः । त्वं विश्वानि - सर्वाणि वयुनानि - उपायान् विद्वान्-जानन्नसि,

सकलपुरुषार्थ यथावद्ज्ञानवत्तया त्वमेव त्वत्प्रापकमार्गेण नेतुं समर्थोऽसि, अतस्त्वामेव प्रार्थये इति भावः।

नन्वहमपि पापात्मानमनेन पथा नैव नयामि इत्यत्राह - **युयोध्यस्मज्जुहुराणमेनः।** **जुहुराणम्** - कुटिलं त्वत्प्राप्तिप्रतिबन्धकम् **एनः**-कर्तव्याकरणाकर्तव्यकरणजन्यपापं फलाभिसन्धिपूर्वकविहितकरणजन्यपुण्यरूपं च पुण्यस्यापि फलाकांक्षया कर्तृकर्मजन्यस्य भगवत्प्राप्तिप्रतिबन्धकत्वेन पापशब्देन, मुमुक्षुभिः ग्रहणात्। **अस्मत्**-मत्तः **युयोधि** - वियोजय दूरीकुरु इत्यर्थः। 'सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' (शाट्यायनिकम्) इति श्रुत्यनुसारेण पुरुषान्तरे प्रापय। मदेनः यथेच्छं विनाशय वा। अस्मत्सकाशात् तु पृथक्कुरु एव इति भावः।

**स्वेष्टसाधनाय प्रपत्तिविधानम्**

एवमपि किमर्थं करोमि इत्यत्राह - **भूयिष्ठां ते नम उक्तिं विधेम। भूयिष्ठाम्**-पौनः पुन्येन अतिशयेन बह्वीं **नम उक्तिम्** - नमोवाकं नमःपदोच्चारणं **ते** - तुभ्यं **विधेम** - कुर्महे, त्वं हि अस्माकं निरुपाधिकः स्वामी प्राप्तसमस्तकामश्च, अहं तु त्वदेकशरणोऽनन्यगतिश्च, अतः निरपेक्षाय तुभ्यं नमस्कारातिरिक्तं किमपि दातुमसमर्थः इत्यकिंचनस्य मम नमस्कारमात्रेण त्वत्प्राप्तिप्रतिबन्धककिल्बिषापहरणं विधत्स्व इत्यर्थः। नमस्कारातिरिक्तं किमपि त्वत्प्रीतिजनकं मत्साध्यं नास्तीति वारम्वारं तव नमस्कारानेवाचराम इति भावः।

अत्र चरममन्त्रद्वयेन सकलफलनिदानभूता शरणागतिः प्रतिपादिता भवति॥

॥ इति श्रीमद्भगवद्रामानन्दाचार्यकृतानन्दभाष्यभूषिता
ईशावास्योपनिषत् समाप्ता॥

## सुबोधिनी

प्रकृतिविविक्तात्मानुस्मरणपूर्वकं भगवदनुस्मरणमुक्तम्। अथ गतिचिन्तनमुच्यते प्रार्थनामुखेन - **अग्न इति।**

भगवत्प्राप्तिसाधनार्चिरादिगमनप्रार्थना

**अग्ने** - ऊर्ध्वगतिप्रापक, अग्रं नयतीत्यग्निः, आश्रितान् ऊर्ध्वं नयति हि भगवान्। **सुपथा** - शोभनेन मार्गेण, अर्चिरादिमार्गेण । **राये** - मुक्तैश्वर्याय । **अस्मान् नय**- त्वमसि समाश्रितानामुद्धर्ता, तव हार्दस्यानुग्रहेण शताधिकया नाड्या निर्गत्यार्चिरादिना ब्रह्मलोकमभिसम्भवानीति भावः । तदर्थं मम प्रारब्धव्यतिरिक्तं संचितमखिलं प्रामादिकं च उत्तरम् **एनः अस्मत्** - अस्मत्सकाशात् । **युयोधि** - विश्लेषय । पुण्यमपि मुमुक्ष्वपेक्षयैनःशब्देन निर्दिश्यते । तच्चैनो **जहुराणम्** - कुटिलम्, दुर्मोचमिति यावत् । तत्कथमहं मोचयितुं शक्त इति मा वोचः । **हे देव ! त्वं विश्वानि वयुनानि विद्वान्** - सर्वज्ञोऽसीति यावत् । पापपुण्ययोः शत्रुमित्रेष्ववकाशदानेन मत्तो वियोजयः त्वं हि सर्वं जानासि इति भावः । एतेन 'सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' (शाट्यायनिकम्) इत्येतदनुस्मृतं भवति ।

ननु सर्वज्ञेनापि मया नान्यदीयमन्यत्र योज्यते निर्निमित्तम् तदस्ति वा किंचिदुपायानुष्ठानं त्वयीत्यत्राह - **भूयिष्ठां ते नमउक्तिं विधेम** । अद्य तु वयं मुमूर्षवः शिथिलकरणाः । यावदासीन्नः करणशक्तिस्तावत्त्वनुष्ठितं यथाविहितमुपासनम् । तदेव स्मारितश्चासि कृतं स्मरेति । अधुनापि वाग्व्यापारसाध्यं **नमउक्तिम्** - नमःशब्दोच्चारणं **विधेम** - विदध्महे । एतावत्यद्य नः शक्तिरिति भावः । विदध्महे इत्यर्थे विधेम इति व्यत्ययोऽयं छान्दसः ।

आत्महविषः परमात्मनि समर्पणरूपप्रपत्तिः

यद्वा - मन्त्रद्वयमिदम् उपासनाशक्तस्य शरणागतिं प्रदर्शयति, शरणागतिर्ह्यात्मसमर्पणम् । ओमिति निर्देशाद्व्यज्यते, 'ब्रह्मणे त्वा महस ओम्' (तै.ना.148) इति प्रणवेन ह्यात्महविःसमर्पणं श्रूयते ; समर्प्यमाणहविषः संस्कारो यथा प्रोक्षणादिकं तथाऽत्रात्महविषः संस्कारः प्रकृतिविविक्ततया तथाऽवस्थितवेषेण ज्ञानं, सोऽयं संस्कारः प्रथमं क्रियते - 'वायुरनिलममृतमथेदं भस्मान्तं शरीरम्' इति । एवं संस्कृतमात्मानम् ओमिति ब्रह्माग्नौ प्रक्षिप्य प्रार्थनीयं प्रार्थयते - कृतो स्मर इति । शक्तास्तु केचित्स्वयं धीराः योगधारणया त्वां धारयन्तो मनस्यव्यग्रे

नियतकालमविच्छिन्नमनुदिनमनुस्मरन्ति स्मरन्ति च अन्तकालेऽपि, अहं पुनः असमर्थस्तथा स्मर्तुम्, त्वमेव समये स्मर। सर्वमुक्तिप्रसंगपरिहाराय व्याजमात्रं वा यद्यपेक्षसे तर्हि कृतं स्मर - यत्किंचिदानुकूल्यसंकल्पादिकमधुना कृतं तदेव स्मर।

अथ च अयमनन्यसामान्यो मादृशाकिंचनजनसमुचितः 'त्वमेवोपायभूतो मे भव' इति प्रार्थनामतिरूपोपायानुष्ठानप्रकारो जागर्ति, तदहं प्रार्थये भवन्तम्। अग्ने नय सुपथा रायेऽस्मान् - वयं मार्गमपि न जानीमः ; नाप्युपायान्तरं, त्वामेकमेव जानीमः, तत्त्वमेवोपायो भूत्वा यो मार्गः शोभनस्तेन नय। अहमज्ञः किं हितं जानीयाम्, त्वमसि विश्वानि देव वयुनानि विद्वान् - त्वमसि देवः, यः सृष्टिस्थितिसंहरणैः क्रीडसि, तस्य ते जुहुराणमेनो मदीयमिति कियन्मात्रम्। मत्तः सकाशाद्वियोजय तत्। वियोज्य क्व नेयमिति तु नाहं जानामि। नाशय वाऽन्यं प्रापय वा। ततस्त्वं 'किं फलमभिलषितम्' इति पृच्छसि, नास्माकं किंचित्फलमाकांक्षितमन्यत्, यतो वयं स्वतो दासास्तव, तत् तदानीमपि दास्यानुरूपा तुभ्यं नम उक्तिमेव विधेम हि - दासवृत्तिमेव प्रार्थयामहे इति भावः। विशेषस्तु सम्प्रदायगम्यः।

उपनिषदर्थसंग्रहः

ईशाभिव्याप्यमेतज्जगदखिलमिह त्यक्तसंगो मुमुक्षु-
र्भुंजीत स्वानुरूपं, न धनमभिलषेत्कर्म कुर्यादसंगः।
योऽनात्मज्ञः स सक्तो निपतति निरये, तन्मुमुक्षोरसंगं
यत्प्रोक्तं चित्तशुद्ध्यै प्रभवति, ननु तत्कर्म बन्धाय न स्यात्॥
विज्ञेयो निश्चलत्वप्रभृतिगुणगणैर्व्याप्यतोऽस्माद्विधर्मा
विश्वव्यापी स ईशः श्रितजनसुगमो दुर्लभश्चेतरेषाम्।
तस्मिन्सर्वाणि भूतान्यपि च तमखिलेष्वेषु पश्यन्जुगुप्सां
कुर्यान्नक्वापि शोकादिकमपि न ततः स्यादिहैकात्म्यदृष्ट्या॥
एवम्भूतात्मदृष्टिः प्रविशति परितश्चेतसा ब्रह्म शुद्धं
याथातथ्येन सोऽर्थान्कलयति मनसा शास्त्रदृष्टाश्चिराय।

सत्यप्यंगांगिभावे श्रयति य इह धीकर्मणोरेकमेकं
सोऽनर्थस्यास्पदं स्याच्छ्र्यति तदुभयं यस्तु तस्यामृतं स्यात् ।।
एषा दैवी हि माया सपदि गुणमयी दुर्निवारा तदेनां
देवं तं तु प्रपद्य प्रशममुपनयेद्दिव्यरूपं तदीयम् ।
दुष्प्रेक्ष्ये तेजसाऽपि प्रभवति कृपया वीक्षितुं तस्य कश्चित्
तस्मिन्न्यस्यात्मभारं व्रजति किमपि शं तत्पथा शोभनेन ।।

सारार्थसंग्रहः

येन व्याप्तं समस्तं जगदिदमपि, यत्प्रीणनं कर्म सर्वं,
योऽनन्ताश्चर्यशक्तिः शुभगुणनिलयो, यत्र सर्वात्मदृष्ट्या ।
शोकादेर्नावकाशः, प्रविशति परमं धाम यस्य प्रपत्त्या,
स्वामी नारायणोऽयं स जयति गदितो वाजिनां संहितान्ते ।।

।। इति श्रीमद्भगवत्सहजानन्दचरणकमलपरिचर्यापरायण परमहंसवर्य योगिराज श्रीगोपालानन्दस्वामिविरचितमीशावास्योपनिषद्भाष्यं समाप्तम् ।।

श्रीरस्तु

पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ।।
ओं शान्तिः शान्तिः शान्तिः

** ** **

॥ श्रीः ॥

# अनुबन्धाः

# 1. मन्त्रार्धाना वर्णानुक्रमणिका

# 2. प्रमाणानामकारादि सूचनी

* * * * *

# 3. ईशोपनिषदर्थसंग्रहकारिकाः

अस्ति देवोऽखिलावासस्स भोज्योऽन्यस्य किं धनैः ।
तदर्थं कर्म कुर्वन्न लिप्येतेति द्विकोदितम् ।। 1 ।।
अथैतद्विस्तरस्तत्र कृता निन्दाऽऽत्मघातिनाम् ।
बहिरन्तःस्थितः सर्वस्यात्माऽऽश्चर्योऽतिदूरगः ।। 2 ।।
ज्ञानशक्त्यादिमान् शुद्धमात्मानं परितः स्थितः ।
इति सर्वजगत्स्रष्टा वेद्यः प्रोक्तोऽष्टमान्ततः ।। 3 ।।
कर्मणा यस्तरेन्मृत्युं सोऽमृतं विद्ययाऽऽप्नुयात् ।
शुभादिशालिनः पापविनाशे ब्रह्मसंगमः ।। 4 ।।
एवं तत्वहितादिज्ञेष्वन्ते मन्त्रचतुष्टयम् ।
क्रमात् यत्रार्थ्यते ब्रह्मदृष्टिच्छादनवारणम् ।। 5 ।।
दिव्यकल्याणरूपस्य सोऽहमस्मीति पश्यता ।
दर्शनं पुरुषस्याथ चिदचिद्ब्रह्मवेदिनि ।। 6 ।।
स्वस्मिन्ननुग्रहाधानं नयनं च पथा सता ।
स्वधनब्रह्मणे यत्र नमस्कारैस्सुखे स्थितिः ।। 7 ।।
इत्थं शुक्लयजुर्वेदसंहितान्त्याऽनुवाकतः ।
ईशेत्याद्यैस्तत्वहितपुमर्थाः साधुवेदिताः ।। 8 ।।

(श्री उ.वे. उत्तमूर् वीरराघवाचार्यस्वामिभिरनुगृहीतमिदम्)

* * * * *

# 4. इतरग्रन्थेषु ईशोपनिषद्विचारः

**1. श्रुतप्रकाशिका - भावप्रकाशिका (समन्वयाधिकरणम्)**

**स पर्यगाात्** - सः आत्मा, 'यस्तु सर्वाणि भूतानि' इत्यादौ प्रकृत आत्मा **पर्यगात्** - परितः समन्तादगात्, सर्वगत इत्यर्थः । शुक्रमित्यादयः शब्दाः पुल्लिंगत्वेन परिणेयाः स इत्युपक्रमानुसारात् । **अकायः** - लिंगशरीररहितः । **अव्रणः** - अक्षतः । **अस्नाविरः** - सिरारहितः। अव्रणास्नाविराभ्यां स्थूलदेहराहित्यमुक्तम्। **शुक्रम्** इति बाह्याशुद्धिविरह उक्तः। **शुद्ध** इति आन्तररागाद्यभावः। अपापविद्धः धर्माधर्मादिरहित' इति शंकरादिभिर्व्याख्यातम् - तथापि तदविरुद्धत्वादिमपि ग्राह्यमेव ।

**2. विषयवाक्यदीपिका (समन्वयाधिकरणम्)**

**पर्यगात्** - परितो व्याप्तवान् । **शुक्रम्** इत्यादौ लिंगव्यत्ययश्छान्दसः । **शुक्रम्** - तेजिष्ठः। **अकायम्** - कर्मफलभोगार्थशरीररहितः । **अव्रणम्** - कायाभावादेव व्रणरहितः। अत एव **अस्नाविरम्** - स्नायुशून्यः । **शुद्धम्** - अविद्यारागद्वेषादिशून्यः, अपापविद्धश्च । **कविः**- क्रान्तदर्शी । **मनीषी** - मनीषा स्रष्टव्यालोचनरूपज्ञानम् । **परिभूः** - सर्वदेशव्यापनशीलः । **स्वयंभूः** - उत्पादकशून्यः । एवंभूतः परमात्मा । **याथातथ्यतः** - यथातथं यथापूर्वम् । सत्यत्वेनेति वाऽर्थः । **शाश्वतीभ्यस्समाभ्यः** - चिरकालस्थायितया स्वाप्नपदार्थविसदृशान् पदार्थान् **व्यदधात्** - अकार्षीदित्यर्थः ।

(एवं शारीरकशास्त्रार्थदीपिकायां समन्वयाधिकरणेऽपि उक्तम्)

**3. श्रुतप्रकाशिका (पुरुषार्थाधिकरणम्, 3-4-14)**

**ईशा वास्यम्** इति ईट्शब्दः तृतीयान्तः-ईशा । तेन वास्यम् । यद्वा ईशेन आवास्यम् ; ईश्वरपरतन्त्रमित्यर्थः ।

**4. श्रुतप्रकाशिका (पुरुषार्थाधिकरणम्, 3-4-14)**

**नरे** - न रमत इति नरः निस्संगः । तस्मिन् इतोऽन्यथा नास्ति - नरे न कर्म लिप्यते इतीतोऽन्यथा नास्ति । इदमेव तत्त्वम् ; न तु स्तुतिमात्रमित्यर्थः ।

**5. श्रुतप्रकाशिका (समन्वयाधिकरणम्, 1-1-4)**

**स पर्यगात्** इति । **शुक्रम्** - अविद्यारहितम्, वासनारहितं वा । **शुद्धम् अपापविद्धम्**- कर्मफलरहितं कर्मरहितं च । **पर्यगात्** - गत्यर्थाः बुद्ध्यर्थाः ; अमन्यतेत्यर्थः ।

**6.शारीरकशास्त्रार्थदीपिका (पुरुषार्थाधिकरणम्)**

('नियमात्' इति सूत्रे) 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इति श्रुत्या कृत्स्नस्य पुरुषायुषः कर्मस्वेव विनियोगेन कर्मशेषत्वात् कर्मण एव प्राधान्यम्। अन्येषां तु तच्छेषत्वमिति विद्यायाः कर्मशेषत्वसिद्धिः।

एवं प्राप्ते सिद्धान्तः

('अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्' इति सूत्रे) विद्ययैव पुरुषार्थः। कर्मकर्तृजीवापेक्षया अनन्तकल्याणगुणाकरत्वेन विलक्षणस्य परब्रह्मण उपास्यत्वोपदेशात्। 'अपहतपाप्मा विजरो विमृत्युर्विशोकः' इत्यादिवेदनोपदेशवाक्येषु अविद्यादिहेयसम्बन्ध-योग्यजीवापेक्षया विलक्षणस्य परब्रह्मण उपास्यत्वदर्शनात्, तादृशपरब्रह्मविषयिण्या विद्ययैव निरतिशयपुरुषार्थसिद्धिरिति।

('तुल्यं तु दर्शनम्') इत्यत्र ब्रह्मविदां कर्मानुष्ठानवदननुष्ठानस्यापि 'किमर्था वयं यक्ष्यामहे' इत्यादिषु दर्शनात् कर्मणो विद्यापेक्षयाऽङ्गित्वे अंगिलोपस्यान्याय्यत्वेन कदाचिदप्यननुष्ठानस्यान्याय्यत्वात् कर्मणां विद्यांगत्वेमेव न्याय्यम्। न च एकस्मिन्नधि-कारिणि कर्मणां त्यागानुष्ठाने कथं सम्भवत इति वाच्यम्। फलाभिसन्धिराहित्य-साहित्याभ्यामनुष्ठानाननुष्ठानोपपत्तेरिति।

('असार्वत्रिकी' इति सूत्रे) 'यदेव विद्यया करोति' इति सामान्यतः यच्छब्देनानूदितस्य विद्यया क्रियमाणत्वे प्रापकप्रमाणाकांक्षायां प्रकरणात्सन्निहितस्योद्गीथस्यैव उपस्थितत्वेन तादृशोद्गीथविद्यामात्रविषयत्वमेव तादृशश्रुतेः न्याय्यमिति।

('विभागश्शतवत्' इति सूत्रे) 'तं विद्याकर्मणी समन्वारभेते' इत्यत्र विभिन्नफलयोः विद्याकर्मणोः एकाधिकारिणं प्रति साहित्यस्य 'क्षेत्ररत्नविक्रयिणं शतद्वयमन्वेति' इत्यत्र क्षेत्रार्थं शतं रत्नार्थं शतमितिवत् उपपन्नत्वात् न अंगागिसाहित्यमिति भावः।

('नाविशेषात्' इति सूत्रे) 'कुर्वन्नेवेह कर्माणि' इति आत्मविदः यावज्जीवं कर्मानुष्ठानविधानात् विद्या स्वतन्त्रफलसाधनभूतकर्मांगमिति न युक्तम्; पूर्वोक्तश्रुतेः विद्यांगकर्म-विषयत्वेनाप्युपपत्तेः। 'कर्मणैव हि संसिद्धिम्' इति वाक्यस्य अंगिभूतोपासनस्य यावज्जीवमनु-वर्तमानत्वेन अंगभूतकर्मणामपि यावज्जीवमनुष्ठानस्यावश्यकत्वेन विरोधाभावात्।

('स्तुतयेऽनुमतिर्वा') इति सूत्रे 'कुर्वन्नेवेह कर्माणि' इति वाक्यस्य 'ईशावास्यमिदं सर्वम्' इति विद्याप्रकरणात् विद्यामाहात्म्यात् सर्वदा कर्म कुर्वन्नपि कर्मजन्यफलाश्लेष इति विद्यास्तुत्यर्थं सर्वदा कर्मानुष्ठानानुमतिपरत्वात् न विद्या कर्मांगम् (इत्युक्तम्)।

**7. न्यायसिद्धाञ्जने जीवपरिच्छेदे -**

एषैवार्चिरादिगतिः कर्मणामन्यसंक्रान्तिश्च -

'सम्भूतिं च विनाशं च यस्तद्वेदोभयं सह ।
विनाशेन मृत्युं तीर्त्वा सम्भूत्याऽमृतमश्नुते ' ।।

इति सम्भूतिविनाशशब्दाभ्यामुच्यते। कर्मणा विनाशेन हि संसारतरणम्। अर्चिरादिसम्भूत्या च ब्रह्मप्राप्तिः । 'सम्भूतिमुपासते ' इत्यत्रोपासनं चिन्तनमात्रमेव । सम्भूतिशब्दश्च प्राप्तौ बहुशः प्रयुक्तः, 'तेऽर्चिषमभिसम्भवन्ति, एतमितः प्रेत्याभिसम्भवितास्मि, ब्रह्मलोकमभिसम्भवानि' इत्यादिषु । नारायणार्यैस्तु सम्भूतिविनाशशब्दौ फलद्वारा लक्षणया विद्याकर्मविषयावुक्तौ 'विदुषो विद्यासाध्यस्यापवर्गस्य सम्यगभिवृद्धिरूपत्वात् ' इत्यादिना। एवंच 'विद्यां चाविद्यां च यस्तद्वेदोभयं सह ' इत्यादिश्रुत्यैकार्थ्यं स्यात् । (न्या.सि.162)

अस्यार्चिरादिगतेश्चिन्तनीयत्वे 'सम्भूतिं च' इत्यादिश्रुतिं प्रमाणयन् सम्भूतिविनाशशब्दयोः प्रपंचतद्विनाशावस्थब्रह्मपरत्ववादियादववादिमतं निरस्यति - एषैवेति । एषैवार्चिरादिगतिः कर्मणामन्यसंक्रान्तिश्चोच्यते इत्यन्वयः । नन्वर्चिरादिगतेः सम्भूतिशब्दार्थत्वे कथं तस्याः 'सम्भूतिमुपासते' इति वाक्यप्रतिपाद्यमुपास्यत्वमित्याशंक्याह - सम्भूतिमुपासते इत्यत्रेति । सम्यगभिवृद्धिरूपत्वादिति - ततश्च सम्भूतिशब्दस्य मोक्षवाचित्वसम्भवेन तद्द्वारा विद्यालक्षकत्वमुपपद्यते इति भावः । (न्या.सि.टी.)

**8. श्रुतप्रकाशिका -**

'विद्यां चाविद्यां च' इति श्रुतेः शंकर-यादवप्रकाशाभिमतयोजनाव्युदासार्थं तां व्याचिख्यासुरुपादत्ते - तथा चेति । अनेन कर्मणोऽपेक्षितत्वे सन्नरहितश्रुत्यन्तरं च दर्शितं भवति। तथा च श्रुत्यन्तरम्। यदन्यथा भवद्भिर्व्याख्यातम्, तच्चास्मदुक्तार्थानुगुणमिति तथा शब्दं अन्तरशब्दं च प्रयुञ्जानस्य भावः । सन्नरहिततया यज्ञादिवाक्यवैलक्षण्यं चान्तरशब्दाभिप्रेतम्। अस्मिन् वाक्ये न कर्मवाचिशब्दः श्रूयते इत्यत्राह - अत्रेति। अत्र श्रुतिवाक्ये। न तु, 'अनात्मन्यात्मबुद्धिर्या' इत्यादिषु। अविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्मास्तु । ततः किमुक्तं भवतीत्याशंकायां पदान्तराण्यपि विवृण्वन् वाक्यार्थमाह - अविद्ययेति। अविद्यया-कर्मणा विद्यया - ज्ञानेन इत्यत्र च कर्मज्ञानशब्दाभ्याम् ,

'कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः ।
कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ।।'

इति स्मृतिः स्वोपजीव्यार्था स्मारिता भवति। कर्माणि कषायपक्तिः - कषायपक्तिनिमित्तानि। कषायशब्दः पापपरः 'धर्मेण पापमपनुदति' इत्यनेनैकार्थ्यात्। कषायशब्दस्य रागादिपरत्वेऽपि तत्पक्तिहेतुत्वं पापनिर्हरणद्वारा। ज्ञानं परमा गतिः - परमगत्युपायः। उभयत्र कारणे कार्योपचारः। कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते - प्रसरतीत्यर्थः। अत्र उपायविरोधिनिरासकत्वं कर्मणः स्पष्टम्। न हि, विविदिषा प्रवर्तते, मोक्षः प्रवर्तते इति वोक्तम्, अपि तु ज्ञानं प्रवर्तते इत्येवोक्तम्। अस्य वाक्यस्यार्थमुपजीव्याह - मृत्यु - ज्ञानोत्पत्तिविरोधीति। न तु ब्रह्मप्राप्तिविरोधि, न च विविदिषाविरोधीत्यर्थः। उपेयविरोधिकर्मणोः ज्ञाननिवर्त्यत्वं श्रुतिस्मृतिशतसिद्धम्। यथा 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्थाः', एवमेवं विदि पापं कर्म न श्लिष्यते,' क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' 'निचाय्य तं मृत्युमुखात् प्रमुच्यते', 'ज्ञात्वा देवं मुच्यते सर्वपापैः', 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' इति। एवमुपेयविरोधिनो ज्ञाननिवर्त्यत्वश्रवणेन परिशेषात्, 'नान्यः पन्था' इत्युपेयविरोधिनिरासे उपायान्तरनिषेधस्वारस्यात्, समसमुच्चयपक्षे कर्मणोप्युपायतया वेदनव्यतिरिक्तकृत्स्नगोचरअन्यशब्दस्य संकोचप्रसंगात्, यज्ञेन विविदिषन्तीति कर्मण उपायहेतुत्वस्य कण्ठोक्त्या, 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' इति स्मृत्यानुगुण्याच्च सामान्येन मृत्युशब्देन प्रतिपन्नमपि निरसनीयमुपायविरोधिकर्मरूपे विशेषे पर्यवस्यति। तथा विविदिषासाधनत्वस्य प्रागुक्तान्योन्याश्रयणादिनिरस्तत्वेन परिशेषात् विविदिषन्तीत्यत्र च प्रकृतिप्रत्ययार्थयोर्वेदनतदिच्छयोरविशेषेण यज्ञादीनां साधनत्वे प्रतीतेऽपि, 'ततो ज्ञानं प्रवर्तते' इति स्मृत्याद्यानुगुण्यात्, इष्यमाणप्रकृत्यर्थप्राधान्यस्य नीतिविद्भिः निर्णीतत्त्वाच्च प्रकृत्यर्थभूतवेदनसाधनत्वं सिद्धम्। तस्मादुपायविरोधिकर्मैवात्र मृत्युशब्दवाच्यमविद्यानिवर्त्यम् इत्यभिप्रायः। उपासनरूपं न्यासरूपं च उपेयविरोधिनिरासकं ज्ञानम् उत्तरपूर्वाघयोरुभयोरपि निरासकं स्यादिति तद्व्यावृत्त्यर्थं प्राचीनमित्युक्तम्। उपायविरोधिनिरासकं कर्म प्राचीनमेव पापं शमयति, न तु उत्तराघमित्यर्थः। तीर्त्वा इति पदं व्याचष्टे अपोह्येति। न तु 'एतं सेतुं तीर्त्वा' इतियत् प्राप्तिवचन इत्यर्थः। अविद्यया तीर्त्वेति पदद्वयव्याख्यानेन शंकरमतयोजनाव्यावृत्तिः। अज्ञानेन संसारं प्राप्य स्थित इति हि तद्योजना। तन्मते अविद्यायाः ज्ञातव्यत्वं च हेयत्वेन। अविद्याशब्दो विविदिषाविरोधिनिवर्तककर्मवाचीति या शंकराभिमतयोजनास्यात्।अविद्याशब्दउपेयविरोधिनिवर्तककर्मवाचीतियादवप्रकाशाभिमतयोजना। ज्ञानोत्पत्तिविरोधीति मृत्युशब्दव्याख्यानेन तदुभयव्युदासः। अयमविद्याशब्दः संसारहेतुभूतज्ञानपरः किं न स्यात्, कथं च तस्य कर्मयाचित्यमित्यत्राह - मृत्युतरणेति।

तरतेरुत्तरणवाचित्वं स्वरससिद्धम् ; प्राप्तिवाचित्वे तु स्वारस्यभंग इत्यभिप्रेतम् । अविद्याशब्दस्य कर्मवाचित्वं दर्शयति - विद्येतरदिति । तदन्यार्थे नञिति भावः । विहितं कर्मैवेत्येवकारेणाज्ञानमविहितं कर्म च व्यावर्त्यते । अत्र 'विद्यां चाविद्यां च ' इति चशब्दावनुक्तसमुच्चयपरौ । विद्यानुबन्धि कर्मानुबन्धि च यदनुक्तम्, तत् समुच्चेतव्यम् । यद्वा, 'धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ' इत्यत्र च शब्दवदत्रापि उक्तार्थविरोधि-समुच्चयपरौ च शब्दौ स्याताम्, विद्याविरोधि कर्मविरोधि च चशब्दाभ्यां हानार्थं ज्ञातव्यतया समुच्चिते भवतः, विद्या -ब्रह्मविद्या, तद्विरोधि-तदितरविषयज्ञान-तद्विषयरागद्वेषादिकम् । अविद्या - विद्यांगं कर्म ; तद्विरोधि संसरणहेतुभूतं फलाभिसन्ध्यादिसहितं कर्म, पापं च । तदुभयं हानार्थं ज्ञातव्यमिति चशब्दयोरभिप्रायः । यद्वा प्रतिपदद्योतकौ च शब्दौ स्याताम् । यथा 'धर्मे चार्थे च कामे च ' इति प्रतिपदं यत् अभिधेयम्, तस्य समुच्चयद्योतकत्वं प्रतिपदद्योतकत्वम् ; तदत्रापि स्यात् । अस्मिन् वाक्ये अविद्यातरणशब्दयोरुक्तार्थ-परत्वस्थापनायोपबृंहणवचनं च दर्शयति - यथोक्तम् इति ।। (श्रु.प्र.I-65-66)

9. बृहदारण्यकगताः ईशोपनिषन्मन्त्राः-

(अ) अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय एव ते तमो य उ विद्यायां रताः ।।(बृ.उ.6-4-10, ई.उ.9)

ब्रह्मवित्पुण्यकृत् इत्युक्तं कर्मांगकज्ञानस्य ब्रह्मप्राप्तिहेतुत्वं स्पष्टयति - अन्धं तमः— विद्यायां रताः । ये अविद्यामुपासते - अत्र अविद्याशब्दः कर्मवाची । 'अविद्या कर्मसंज्ञान्या' इति, 'तर्तुं मृत्युमविद्यया' इति च वचनात् - ये केवलं स्वर्गादिफलोद्देशेन कर्मानुतिष्ठन्ति, न तु ब्रह्मज्ञानार्थितया, ते अन्धं तमः प्रविशन्ति - दुस्तरं संसारलक्षणमन्धकारं प्रतिपद्यन्त इत्यर्थः। य उ विद्यायां रताः - उशब्दोऽवधारणे - नित्यनैमित्तिकं कर्म परित्यज्य विद्यायामेव यतन्ते ये, तेऽपि ; मोहात् तस्य परित्यागस्तामसः परिकीर्तितः ' इत्युक्तरीत्या तामसत्यागवशात्, भूय इव तमः - इवः शब्द एवार्थः । प्रविशन्ति इत्यनुषंगः - पूर्वस्मादधिकं संसारमेव प्रविशन्तीत्यर्थः। उक्ततामसत्यागप्रयुक्तमनोमालिन्येन ज्ञानानिष्पत्त्या फललेशमप्यलब्ध्वा पतिता भवन्तीत्यर्थः। नानेन वचनेन ज्ञानकर्मणोः समुच्चय इति मन्तव्यम् ; ज्ञान-व्यतिरिक्तोपायनिषेधकवचनैः ज्ञानस्य मोक्षोपायत्वप्रतिपादकवचनैः, कर्मणां ज्ञानांगत्वप्रति-पादकवचनैश्च, 'नान्यः पन्था अयनाय विद्यते,' 'ब्रह्मविदाप्नोति परम्', 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन' इत्यादिभिः भूयोभिः विरोधप्रसंगात् ।

(आ) अनन्दा नाम ते लोका अन्धेन तमसाऽऽवृताः ।।
तांस्ते प्रेत्याभिगच्छन्त्यविद्वांसोऽबुधो जनाः ।।

( बृ.उ.6-4-11, ई.उ.3)

अन्धतमसप्रवेशे किं भवतीत्यत्राह - **अनन्दा नाम----जनाः** । अनन्दाः-सुखलेशशून्याः अन्धतमसावृताः केचन लोकाः सन्ति । तान् लोकान् मृत्वा गच्छन्ति ते । के ? ये **अविद्वांसः**- ब्रह्मज्ञानहीनाः ; **अबुधः** - ये प्रत्यगात्मविद्याशून्याः। पंचाग्निविद्याशून्या इति यावत् । पूर्वं तयोरेव प्रस्तुतत्वादिति द्रष्टव्यम् । बुध इति बुध्यतेः क्विबन्तस्य प्रथमाबहुवचनान्तस्य रूपम् ।।

(इ) यदैतमनुपश्यत्यात्मानं देवमंजसा ।
ईशानं भूतभव्यस्य न ततो विजुगुप्सते ।।

( बृ.उ.6-4-15, ई.उ.6)

तज्ज्ञानस्य महाफलत्वमेवाह **यदैतम् - न ततो विजुगुप्सते** । यदा एतं भूतभव्यादेरीशितारं देवं - द्योतमानं सर्वभूतानाम् आत्मानम् - अन्तर्यामिणं अंजसा - द्राक् अनुपश्यति सम्यक् पश्यति, ततः - तदा सर्वस्याप्येकात्मकत्वज्ञानात् न विजुगुप्सते - सर्ववस्तुषु निन्दा न प्रवर्तत इत्यर्थः।

(ई) हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत् त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ।।

(बृ.उ.7-15-1, ई.उ.15)

अर्चिराद्यातिवाहिकानुप्रविष्टादित्यप्रार्थनामन्त्रः । **हिरण्मयेन - मुखम्** । **सत्यस्य** ब्रह्मणो **मुखम्** - द्वारम् - ब्रह्मगमनमार्ग इति यावत् - **हिरण्मयेन पात्रेण** तेजिष्ठेन तेजो मण्डलेन अपिहितम् आवृतम् । तत् द्वारं त्वं पूषन् !अपावृणु - अनावृतं कुरु । किमर्थमित्यत्राह - **सत्यधर्माय दृष्टये** । सत्यं ब्रह्म **धर्मः** आश्रयः - साधनं यस्य तस्मै ब्रह्मैकनिष्ठाय ब्रह्मदर्शनार्थिने मह्यं **दृष्टये** ब्रह्मदर्शनायेत्यर्थः ।

(उ) पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह तेजः ।
यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि ।।

(बृ.उ.7-15-1, ई.उ.16)

**पूषन्नेकर्षे यम सूर्य प्राजापत्य** । हे पूषन् ! एकश्चासौ ऋषिश्च **एकर्षिः** । ऋषिः द्रष्टा । सवितुर्जगदेकचक्षुष्ट्वादिति भावः । यम यमयितः । **सूर्य** - सुष्ठु ईरयति रश्मीनिति **सूर्यः**।

प्राजापत्य प्रजापतेः पुत्र ! व्यूह रश्मीन् समूह तेजः - तावकान् रश्मीन् व्यूह अपगमय । तेजः समूह संक्षिप । किमर्थमित्यत्राह - यत्ते रूपं कल्याणतमं तत्ते पश्यामि । तेजसा संक्षेपाभावे तव रूपं दुर्दर्शमिति भावः । योऽसावसौ पुरुषस्सोहमस्मि - आत्मा यादृग्रूपः, तादृग्रूपोऽहमस्मि । तादृग्रूपतया वेद्मि । आत्मतत्त्वविदस्मीत्यर्थः ।

(ऊ) वायुरनिलममृतमथेदं भस्मान्तं शरीरम् ।
ओं कृतो स्मर कृतं स्मर कृतो स्मर कृतं स्मर ।।
(बृ.उ.7-15-1, ई.उ.17)

वायुरनिलममृतमथेदं भस्मान्तं शरीरम् । अर्चिरादिना गतस्य मे प्राणवायुर्वायौ लीयताम् । मृतंचेदं शरीरं भस्मान्तं च भवतु । ततश्च देहेन्द्रियादिष्वात्माभिमानी नाहमस्मि । तद्विलक्षणात्मज्ञानवानित्यर्थः । ओं कृतो स्मर कृतं स्मर । ओम् इति प्रणवप्रतिपाद्यत्वादादित्यस्य सम्बोधनम् । कृतोः - 'अधीगर्थदयेशां कर्मणी'ति कर्मणि षष्ठी - कृतुम् उपास्तिमनुष्ठितां स्मर । तदंगतया कृतम् कर्मापि स्मर । अहं देहविलक्षणात्मज्ञानी कर्मांगकब्रह्मविद्यानिष्ठश्च । अतः त्वत्स्वरूपं प्रदर्शय, मुक्तिमार्गं च प्रयच्छेत्यर्थः ।

(ऋ) अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ।।
(बृ.उ.7-15-1, ई.उ.18)

अर्चिरादिप्रथमपर्वाग्निप्रार्थनामन्त्रः । अग्ने नय - विद्वान् । हे अग्ने ! सुपथा शोभनेनार्चिरादिमार्गेण राये - ऐश्वर्याय स्वाराज्याय - मोक्षायेति यावत् - अस्मान् नय-प्रापय । हे देव द्योतमान ! विश्वानि वयुनानि सर्वाणि ज्ञानानि विद्वान् भवसि । अतो मदीयमप्यात्मज्ञानं त्वं जानासीत्यर्थः । युयोध्यस्मज्जुहुराणमेनः । युयोधि - अपनय । अस्मत् अस्मत्तः । जुहुराणम् - कुटिलम् । 'हुर्च्छा कौटिल्ये' इत्यस्मात् कानचि रूपम् । एनः - पापं युयोधीत्यन्वयः । भूयिष्ठां भूयसीं नम उक्तिं ते करवामेत्यर्थः ।

10. वेदान्तविजयमंगलदीपिकायां परविद्यावेद्यत्वभंगप्रकरणे ईशावास्यविचारः

'ईशावास्यमिदं सर्वम्' इति सर्वान्तःप्रवेष्टृत्वेन उपक्रान्तस्य ईशशब्दोक्तरुद्रस्योपसंहारे पूषन्नेकर्षे इति एकर्षिशब्देनाभिधानात् रुद्र एवैकर्षिः न नारायण इति चेत् ,

अत्र ब्रूमः - 'ईशावास्यमिदं सर्वम्' इत्यस्य ईशेन रुद्रेण आवास्यमिति नार्थः ; तथा-सति तृतीयासमासार्थकरणत्वे लक्षणाप्रसंगात् विभक्तिलोपकल्पनाप्रसंगाच्च । किन्तु ईष्टे इति ईट् तेन ईशा सर्वनियन्त्रा पुरुषोत्तमेनावास्यं व्याप्यमित्यर्थः । तथाचोपक्रमे रुद्रस्य

प्रसंगाभावात् उपसंहारस्थ एकर्षिशब्दो न रुद्रपरः, किन्तु नारायणपर एव । अत एव शंकरेणापि ईशावास्यमित्येतदेवमेव व्याख्यातम् । एवंच

'तदेजति तन्नैजति तद्दूरे तद्वन्तिके ।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः' ।।

इत्याद्युत्तरवाक्यगततच्छब्दैः प्राधान्येनेनोक्तसर्वनियन्तृपरामर्शोपि स्वरसः । अन्यथा समासान्तर्गतेशशब्देनाप्राधान्येनोक्तरुद्रपरामर्शानाजस्यात् ।।

किं च अन्यत्र भगवत्परतया निर्णीतैकर्षिशब्दानुरोधेन अनिर्णीतस्येशावास्यमित्येतस्य भगवत्परत्वमेव युक्तम् । अत्रापि पूषन् शब्दसामानाधिकरण्यादयमेकर्षिशब्दो भगवत्पर एव ; पूषन् शब्दस्यादित्यान्तर्यामिपरत्वात् । तदन्तर्यामित्वं च भगवत एवेत्यन्तरादित्य-विद्यावेद्यत्वनिरूपणे समर्थयिष्यमाणत्वात् ।

एवमेक ऋषि - (एकमेकर्षि) श्रद्धयन्त इत्येकर्षिशब्दादपि भगवत्परत्वसिद्धिः । भागवते सचेतसेति एतदनुवादवाक्ये एकर्षिशब्दोक्तार्थं (भगवच्छब्देनानूद्य) भगवच्छब्देन चेतसः तत्सम्बन्धित्वाभिधानात् भागवतशब्दस्य भगवत्परतया शंकरादिभिर्व्याख्यातत्वात् भगवच्छब्दस्थानाभिषिक्तैकर्षिशब्दस्य भगवत्परत्वौचित्याच्च । किं च, ' य इमा विश्वा भुवनानि जुहव (सर्प) दृषिर्होता निषसादापिता नः ' इत्यनुवाके ऋषिर्होतेति ऋषित्वस्य, तत्रैव 'यो देवाना नामधा देव एक' इत्येकत्वस्य च नारायण एवाभिधानात्, अत्रत्यैकर्षिशब्दोऽपि नारायण पर एव ।

11. वेदान्तविजयमंगलदीपिकायां देवतान्तरस्यान्तरादित्यविद्यावेद्यत्वभंगप्रकरणे ईशावास्यविचारः

गायत्री चान्तर्वर्तित्वे भगवतः प्रमाणम् । तस्या आदित्यमण्डलान्तर्वर्तिभगवत्परतया मैत्रायणीयोपनिषदि व्याख्यातत्वात् । एवं हि तत्र 'हिरण्मयेन पात्रेण' इति मन्त्रेण आदित्यान्तर्वर्तिविष्णुदर्शनप्रतिबन्धकनिवृत्तिप्रार्थनानन्तरं श्रूयते 'यदादित्यस्य मध्येऽक्षिण्यग्नौ चैतद्ब्रह्मैतदमृतमेतद्भर्गमेतत्सत्यधर्मं' इति 'यदादित्यस्य मध्ये उदित्वा मयूखे भगवत एतत्सवितुर्वरेण्यं सत्यधर्म एतत्' इति । अनया श्रुत्या गायत्रीप्रतिपाद्यं वरेण्यं भर्गो विष्ण्वाख्य आदित्यमण्डलान्तर्वर्तीति प्रतिपादितम् ।

योगयाज्ञवल्क्यवचनेनापि आदित्यमण्डलान्तर्वर्तिनो नारायणत्वं स्पष्टमवगम्यते- तथाहि -

ईश्वरं पुरुषाख्यं तु सत्यधर्माणमच्युतम् ।
भर्गाख्यं विष्णुसंज्ञं तु ज्ञात्वाऽमृतमुपाश्नुते ।। इति ।

सनकस्मृतावपि आदित्यमण्डलान्तर्वर्ती नारायण एव गायत्रीप्रतिपाद्य इति प्रतिपादितम् ।
*रुद्रसूक्ते* - यः शुक्र इव सूर्ये यो हिरण्यमिव रोचते । श्रेष्ठो देवानां वसुरिति आदित्य-मण्डलान्तर्वर्तित्वं रुद्रस्यावगम्यते इति चेन्न ; शुक्र एव सूर्यमण्डलान्तर्वर्तिनः शुक्रशब्दाभि-हिताद्भगवतो भेदस्यैव रुद्रे प्रतीतेः । शुक्रशब्दवाच्यश्च भगवानेव ।
*महाभारते मोक्षधर्मे* -
'वैकुण्ठः परमो विष्णुः शुक्रोऽनन्तः सनातनः'। इति विष्णौ शुक्रशब्दप्रयोगाच्च ।
*तैत्तिरीयोपनिषदि* च भगवत एव आदित्यान्तर्वर्तित्वमवगम्यते 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' इति । अस्याश्च भगवत्परत्वम्, पूर्वस्मिन् नारायणानुवाके तस्य प्रकृतत्वात् ।

किं च आनन्दवल्ल्यां 'स यश्चायं पुरुषे यश्चासावादित्ये स एकः' इति यच्छब्दद्वयेन प्रसिद्धवन्निर्दिष्टयोः पुरुषान्तर्वर्ति आदित्यान्तर्वर्तिनोरभेदः श्रूयते । तत्प्रसिद्धिश्च नारायणानुवाक-तदुत्तरानुवाकयोः । तयोश्च पुरुषान्तर्वर्ति नारायणपरत्वं स्पष्टमेव । अतः तस्यैवादित्यान्तर्वर्त्यभेदाभिधानं युक्तमिति स यश्चायं पुरुष इत्यादि वाक्यस्य नारायणपरत्वं सिद्धम् ।
*दत्तात्रेय स्मृतौ च दक्षिणाविधौ*-

योऽसौ विष्ण्वाख्य आदित्ये पुरुषोऽन्तर्व्यवस्थितः ।
सोऽहं नारायणो देवः पुरुषो लोकपावनः ।।

इत्यभिधानाच्च आदित्यान्तर्वर्ती नारायण एव ।
*महाभारते मोक्षधर्मे* -
'विद्यासहायवन्तं मामादित्यस्थं सनातनम्' । इति भगवद्वचनादपि तस्यादित्य-मण्डलान्तर्वर्तित्वसिद्धिः । अत्र विद्याशब्दो लक्ष्मीपरः ।

'मा विद्या च हरेः प्रोक्ता तस्या ईशो यतो भवान् ।
तस्मान्माधवनामासि धवः स्वामीति शब्दतः' । इति कैलासयात्रायां शिवोक्तेः ।

12. पाराशर्यविजये -
'यस्तु सर्वाणि भूतानि' इत्यत्र, 'यस्मिन् - यदा, तत्र - तदा, एकत्वमनुपश्यतः - सर्वव्यापके एकत्वं पश्यतः, सर्वव्यापकं वस्त्वन्तरं नास्तीति पश्यत' इत्यर्थः ।
'इदं ब्रह्मेदं क्षत्रम्' इत्यत्र ब्रह्मक्षत्रादिवत्सर्वदेवतानां भगवद्विभूतित्वान्नान्यत्र तत्तुल्यत्वशङ्कावकाश इति भावः । 'यत्र हि द्वैतमिव भवति' इत्यत्र यत्र - यदा, द्वैतं भवति-द्वैतबुद्धिर्भवति , तत् - तदा, इतरः - स्वतन्त्रः, इतरेण - स्वतन्त्रकरणेन, इतरम् - स्वतन्त्रम्, जिघ्रति । 'केन' इत्युत्तरत्र वक्ष्यमाणत्वात् इतरेणेत्यध्याहार्यम् । स्वतन्त्रोऽहं स्वतन्त्रकरणेन

स्वतन्त्रं वस्तु जिघ्रामीति बुद्धिर्भवतीति तात्पर्यम् । एवमुत्तरत्रापि योज्यम् । यत्र - यदा, अस्य - ज्ञातुः, सर्वमात्मैवाभूत् - परतन्त्रत्वेन ज्ञातमभूदिति । इदं वाक्यमितरमिथ्यात्वपरमिति पक्षे, यदा द्वैतबुद्धिर्भवति तदा इतर इतरं जिघ्रति यदा सर्वमात्मैवेत्यद्वैतबुद्धिर्भवति तदा सर्वस्य निवृत्तेः केन कं जिघ्रेत्, करणाभावात् ज्ञेयाभावाच्चेति नार्थः, सर्वमात्मैव अभूदित्यस्याभेदपरत्वेऽचिदंशे बाधात्, बाधार्थपरत्वे चिदंशे बाधात् । यद्वा - यदा द्वैतबुद्धिर्भवति, तदा इतरोहमितरेणेतरं जिघ्रामीति बुद्धिर्भवति यदात्वद्वैतबुद्धिर्भवति, तदा इतरोहमितरेण इतरं जिघ्रामीति बुद्धिर्न भवतीत्यपि नार्थः, 'यत्रत्वस्य सर्वम्' इति दोषतादवस्थ्यात् ; अद्वैतज्ञानिनोऽपि मिथ्यात्वेन ब्रह्मणोऽन्यमेव गन्धं तथाभूतेनैव घ्राणेनैव जिघ्रामीति ज्ञानाच्च । 'यत्र त्वस्य सर्वमात्मैवाभूत्' इत्युक्तसार्वात्म्यबुद्धिः केन भवतीत्यत्राह - 'येनेदम्' इति । ततोऽन्येन केन विजानीयात् तेनैव विजानीयादिति भावः । 'पश्यति' इत्यादिना प्रकृतं जीवस्य ज्ञानमपि तेनैवेत्याह - 'विज्ञातारम्' इति । भगवत्प्रसादादृते स्वस्वरूपमपि केन विजानीयादित्यर्थः । पूर्वत्र स यथा सैन्धवखिल्य' इति मोक्षे भेदप्रतिपादनादिदं वाक्यं यथोक्तार्थपरमेव ।

तथा -

'हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
स त्वं पूषन्नपावृणु सत्यधर्माय विष्णवे ' ।।

'योसावादित्ये पुरुषः सोसावहम्' इति 'एष वै सत्यधर्मं' इति । अत्र 'विष्णवं' इति 'क्रियार्थोपपदस्य कर्मणि स्थानिनः' इति चतुर्थी । एधेभ्यो व्रजतीतिवत् । विष्णुं द्रष्टुमित्यर्थः । घटायोन्मीलितचक्षुरितिवत् 'योसावादित्ये पुरुषस्सोहमस्मीति' तदनन्तरसम्भूत-दर्शनाभिलापः । बृहदारण्यके तु 'सत्यधर्माय दृष्टये' इति पाठादयमेवार्थः । तत्र च सत्यधर्मशब्देन भगवानभिधीयते, सत्यधर्मशब्दस्य भागवत्परतायाः प्रागभिधानात् । सत्य-धर्मायेति चतुर्थी 'षष्ठ्यर्थे चतुर्थी वक्तव्यं' इति अहल्यायै जारेतिवत् । इयं च उपनिषद्योगयाज्ञवल्क्येनाप्यनुगता -

"ईश्वरं पुरुषाख्यन्तु सत्यधर्माणमच्युतम् ।
भर्गाख्यं विष्णुसंज्ञन्तु ज्ञात्वामृतत्वमश्नुते ।।
हृद्व्योम्नि तपति ह्येष बाह्ये सूर्यस्य चान्तरे ।
अग्नावधूमकेप्येष ज्योतिश्चित्रतरो ह्ययम् ।।" इति ।

सावित्रीव्याख्यानावसरे च -

" सवितुस्तद्वरेण्यन्तु सत्यधर्माणमीश्वरम् ।
हिरण्यवर्णं पुरुषं व्योम तद्विष्णसंज्ञितम् ।।

सूर्यमध्ये स्थितस्सोमस्तस्य मध्ये हुताशनः ।
तेजोमध्ये स्थितं सत्यं सत्यमध्ये स्थितोऽच्युतः ।।
सोऽन्नं प्राणा मनश्चैव ज्ञानमानन्द एव च ।
निमेषादिः क्षणः कालः तस्मादुत्पद्यते यतः ।।
कालकर्ता ततो ज्ञेयः कालाख्यो विष्णुरव्ययः ।
एषा विश्वभृतो नाम तनुर्विष्णोस्सनातनी ।।
अन्नरूपेण विज्ञेया ययेदं धार्यते जगत् " ।

इति । अत्र शब्दतोऽर्थतश्च प्रत्यभिज्ञानात् स्पष्टं मैत्रावरुणश्रुत्युपबृंहणत्वम् । यमस्मृतावपि 'रविमध्ये स्थितं' इति श्लोकं पठित्वा, अनन्तरम् -

'एष देवस्तु मर्त्यानां पटैरिव पिधीयते ।
अज्ञानपटसंवीतैरिन्द्रियैर्विषयेप्सुभिः ।
एष वै पुरुषो विष्णुः व्यक्ताव्यक्तस्सनातनः'।।

इति पठितम् । शंखस्मृतावपि 'रविमध्ये स्थितं' इति श्लोकः पठितः । दत्तात्रेयस्मृतौ च दीक्षाविधौ -

'योऽसौ विष्ण्वाख्य आदित्ये पुरुषोऽन्तर्हृदि स्थितः ।
सोऽहं नारायणो देवः पुरुषो लोकभावनः' ।। इति ।

'योऽसावादित्ये पुरुषास्सोसावहम्' इति मैत्रायणीयवाक्यं 'योसावसौ पुरुषस्सोहमस्मि' इति बृहदारण्यकेशायास्याम्नातवाक्यं च उपबृंहितम् ।।

13. **श्रीभाष्योदाहृत ईशोपनिषद्विचारः**

तथा च श्रुत्यन्तरम्,

'विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।
अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ' ।। इति ।

अत्राविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्म । अविद्यया - कर्मणा, मृत्युं - ज्ञानोत्पत्तिविरोधि प्राचीनं कर्म तीर्त्वा - अपोह्य, विद्यया - ज्ञानेन, अमृतं - ब्रह्म अश्नुते - प्राप्नोतीत्यर्थः । मृत्युतरणोपायतया प्रतीता अविद्या विद्येतरत् विहितं कर्मैव । यथोक्तम् -

'इयाज सोऽपि सुबहून् यज्ञान् ज्ञानव्यपाश्रयः ।
ब्रह्मविद्यामधिष्ठाय तर्तुं मृत्युमविद्यया' ।। इति । (श्री.भा.1.66-67)

('नाविशेषात्' ब्र.सू.3-4-13, इति सूत्रे) यच्चोक्तम्, 'कुर्वन्नेवेह कर्माणि' इत्यात्मविदं ज्ञानाद्व्यावृत्य यावज्जीवं कर्मानुष्ठाने नियमयतीति - तन्नोपपद्यते ; अविशेषात् । न ह्ययं नियमः फलसाधनभूतस्वतन्त्रकर्मविषय इति विशेषहेतुरस्ति, विद्यागभूतकर्म-विषयतयाऽप्युपपत्तेः । 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति च, विदुषस्त्वाप्रयाणादुपासनस्यानुवर्तमानत्वात् ।

एवमर्थस्वाभाव्येन चोद्यं परिहृत्य 'कुर्वन्नेवेह कर्माणि' इत्यस्यार्थमाह - ('स्तुतयेऽनुमतिर्वा' ब्र.सू.3-4-14) वाशब्दोऽवधारणार्थः, 'ईशा वास्यमिदं सर्वम्' इति विद्याप्रकरणाद्विद्यास्तुतये सर्वदा कर्मानुष्ठानानुमतिरियम् । विद्यामाहात्म्यात् सर्वदा कर्म कुर्वन्नपि न लिप्यते कर्मभिरिति हि विद्या स्तुता भवति । वाक्यशेषश्चैवमेव दर्शयति - 'एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे' इति । अतो न कर्मांगं विद्या ।

* * * * *

# 5. भाष्यकर्तृणां चारित्रम्

1. भारद्वाजरामानुजार्यः - अयमान्ध्रदेशे विजयवाडाप्रान्तवर्तिमंगलगिरिनामकक्षेत्रे वसन् श्रीवैष्णवसम्प्रदायप्रवर्तक आसीत् । नियोगिब्राह्मणाः एतद्वंशीयाः वैष्णवेष्टिसंस्कारेण भगवद्रामानुजीयसम्प्रदायान्तःपातिनः संवृत्ताः इति प्रसिद्धिः । पूर्वं तुर्लपाटि इति वंशनाम्ना प्रसिद्धानां एतदीयानां अनन्तरं श्रीरामानुजसिद्धान्तानुवृत्तिवशात् 'श्रीभाष्यम्' इति वंशनाम-प्राप्तिरिति ज्ञायते । एवं एषः श्रीभाष्यं रामानुजार्य इति च प्रसिद्ध्यति । जगन्नाथार्यस्य पुत्रोऽयं स्ववंशीयादेव श्रीभाष्यं नृसिंहार्यात् विद्यामध्यगीष्ट । स्वकुलगुरोः श्रीवत्सगोत्रोद्भवात् नल्लान्-चक्रवर्तिश्रीनिवासाचार्यवर्यात् पंचसंस्कारानविन्दत । दशोपनिषदामपि प्राचीनविशिष्टाद्वैत-भाष्यानुसारेण प्रतिपदार्थदीपिकाख्या संग्रहटीका विरचितवानसौ औपनिषदार्थजिघृक्षूणां बालानां मार्गप्रदर्शको भवतीति अभिनन्द्यमिदम् । एतत्कर्तृकाः इतरग्रन्थाः स्वेनैव ईशावास्यटीकादौ निर्दिष्टा इति नेह विस्तरः । प्रायः सर्वे ते ग्रन्थाः मुद्रिताः। परमवैदिकसिद्धान्तरत्नाकराख्यः ग्रन्थस्तु श्रीवैष्णवसम्प्रदायाचारादिप्रबोधकः प्रामाणिकः प्रथते । अस्य जीवनकालस्तु (क्रिस्त) 1790 प्रभृति 1880 पर्यन्तमिति ज्ञायते ।

2. श्रीवेदान्तदेशिकः - विशिष्टाद्वैतसम्प्रदाये सर्वपूर्वोत्तराचार्येभ्यः अस्य निरतिशयं वैभवम् । वेंकटनाथार्यः वेंकटेशः इति जन्मनाम्ना कीर्तितोऽसौ परपक्षनिरासपूर्वकं सिद्धान्तस्थापकबहु-प्रबन्धनिर्माणालंकर्मीणत्वात् साक्षात् श्रीरंगनाथेनैव दत्तवेदान्ताचार्यबिरुदः इति प्रसिद्धिः । तदारभ्य वेदान्तदेशिकः निगमान्तगुरुः इत्यादिनामभिरेष व्यपादिश्यत । उक्तं चैतत् स्वयमेव अधिकरणसारावलेः आदौ "विश्वस्मिन् नामरूपाण्यनुविहितवता तेन देवेन दत्तां वेदान्ताचार्यसंज्ञां अवहितबहुवित्सार्थमन्वर्थयामि" इति । तथा संकल्पसूर्योदयनाटके प्रस्तावनायां "विंशत्यब्दे विश्रुतनानाविधविद्यः - त्रिंशद्वारं श्रावितशारीरकभाष्यः" इति स्वयमेव कीर्तनात् विंशतिवर्षमिते वयस्येव सर्वविद्यावैशारद्यं प्रापुषोऽमुष्य आचार्यतल्लजस्य जीवितकाले त्रिंशद्वारं श्रीभाष्यप्रवचनं च शिष्येभ्यः कृतमिति महतीयं असाधारणी प्रतिष्ठा । कवितार्किकसिंह इति सर्वतन्त्रस्वतन्त्र इति च समानकालिकैः विद्वद्वरैः सादरं बिरुदप्रदानेन एष समभाव्यत ।

काञ्च्याः समीपे तूप्पिल्नाम्नि अग्रहारे लब्धजन्मनोऽस्य जीवनकालः (क्रिस्त) 1268 प्रभृति 1369 पर्यन्त इति चारित्रकाः । वैश्वामित्रवंशे लब्धजनुषोऽस्य पितामहः पुण्डरीकाक्षयज्वा, पितरौ च अनन्तार्यतोतारम्बानामकौ । श्रुतप्रकाशिकाकर्तुः श्रीसुदर्शनभट्टारकस्य सब्रह्मचारितया

व्यपदिष्टात् वात्स्यवरदाचार्यशिष्येषु अग्रगण्यात् श्रीमदात्रेयरामानुजार्यात् स्वमातुलादेव सर्वविद्याधिगमः । अस्य शिष्याः आद्यब्रह्मतन्त्रमुनीन्द्रप्रभृतयः परश्शतम् । विद्यारण्यमुनि-अक्षोभ्यमुनिप्रभृतयोऽस्य समसामयिकाः भिन्नमतस्थाः प्रसिद्धविद्वांसः । काञ्च्यामेव स्वप्रथमवयसि सिद्धान्तप्रवर्तकतया स्थितोऽयं श्रीरंगक्षेत्रश्रियोऽभिवृद्धिमपेक्ष्य तत्रत्यैः परमभागवतैराहूतः तत्र गत्वा लम्भितोद्दामभूमा संस्कृत- द्राविडवेदान्तप्रवचनैकपरायणः वादाहवेषु परान् प्रत्याचक्षाणश्च आदेहपातमुवासेति निश्चप्रचम् ।

श्रीभाष्यकारैः भगवद्रामानुजार्यैः निर्विशेषाद्वैतमतोपरि प्रतिपादितानां दूषणानां विस्तरणार्थं वादग्रन्थरूपेण प्रवर्तिता शतदूषणी कृतिः आचार्यप्रतिभायाः पताका भवति । विशिष्टाद्वैत-सिद्धान्तसर्वस्वमिति सम्भावनीयो ग्रन्थः तत्त्वमुक्ताकलापाख्यः स्रग्धरावृत्तमयश्लोक-पंचशती-समुद्भासितः स्वेनैव सर्वार्थसिद्धिनामकव्याख्यया परिष्कृतः श्रीवैष्णवैः विद्वद्भिः कण्ठे धार्यं अमूल्यमाभरणम्। एकस्यामेव रात्रौ श्रीरंगनाथपादुकामुद्दिश्य निर्मितं विविधालंकारवैचित्रीबन्धुरं पादुकासहस्राभिधस्तोत्रं भावुकानां सुधास्वादवत् अमन्दानन्दसन्धायकम्। एवमस्य द्रविडभाषामया गाथाप्रबन्धा अपि बहवः उभयभाषयोः समं प्रौढिमानमाविष्कुर्वन्ति ।

एवं अद्भुतप्रचण्डपाण्डित्यशालिनोऽपि गुरोरस्य कैश्चिदसूयान्धैः अवहेलितस्य

"कर्मावलंबकाः केचित् केचित् ज्ञानावलंबकाः ।
वयं तु हरिदासानां पादरक्षावलंबकाः ।।"

इति श्लोकेन तान् सद्यः प्रत्युत्तरयतः स्वविनयप्रदर्शनकाष्ठा हि परमविस्मयनीया । एतदीयं यादवाभ्युदयमहाकाव्यं श्रीमदप्पयदीक्षितेन आलंकारिकमूर्धन्येन व्याख्यातमित्यत एव तत्काव्यवैभवं सुगमम् । एवं काव्यनाटकविभागे स्तोत्रविभागे व्याख्याविभागे द्रविडसम्प्रदाय-विभागे च शताधिकान् प्रबन्धान् प्रणीतवतोऽस्य महागुरोः प्रसिद्धाः कतिपयग्रन्था इह नामतो निर्दिश्यन्ते ।

***काव्यविभागे*** - यादवाभ्युदयः, हंससन्देशः, सुभाषितनीवी, संकल्पसूर्योदयनाटकम् इत्याद्याः ।

***शास्त्रविभागे*** - शतदूषणी, तत्त्वमुक्ताकलापः सर्वार्थसिद्धिसहितः, न्यायपरिशुद्धिः, न्यायसिद्धाञ्जनम्, सेश्वरमीमांसा, अधिकरणसारावलिः, मीमांसापादुका इत्याद्याः।

***व्याख्यानविभागे*** -गीताभाष्यतात्पर्यचन्द्रिका, तत्त्वटीका, ईशावास्यभाष्यम्, स्तोत्ररत्नभाष्यम्, गद्यत्रयभाष्यम् इत्याद्याः ।

***स्तोत्रविभागे*** - पादुकासहस्रम्, दयाशतकम्, अच्युतशतकम्, यतिराजसप्ततिः, अभीतिस्तवः, हयग्रीवस्तोत्रम्, गरुडपंचाशत् , सव्याख्यन्यासविंशतिः इत्याद्याः ।

*द्रविडसम्प्रदायविभागे* - सम्प्रदायपरिशुद्धिः, अभयप्रदानसारः, परमतभंगः, मुनिवाहनभोगम्, अधिकारसंग्रहः, परमपदसोपानम्, अमृतास्वादिनी, विरोधपरिहारः इत्याद्याः ।

**3. श्रीवत्साकनारायणमुनिः -** श्रीमति अहोबलमठे तत्पीठस्थानी अलंकुर्वाणौ द्वौ आचार्यौ श्रीवत्साकनारायणमुनिशब्देन व्यपदिष्टौ विराजेते। तत्रैक आचार्यः (क्रिस्त) 17 शताब्द्यां अवर्तत । अपरस्तु 18 शताब्द्यां अवर्तत । द्वावपि श्रीवत्सगोत्रोद्भवौ । विविधग्रन्थनिर्माणचणौ च । नाम्नः आदौ श्रीवत्साकेति निर्देशात् श्रीवत्सचिह्नमिश्रगुरुवरवंशसम्भवत्वभ्रमेण कूरनारायणमुनित्वेन व्यपदिष्टौ इमौ इति सम्भाव्यते ।

श्रीसुदर्शनशतककर्ता कूरनारायणमुनिस्तु अन्य एव श्रीवेदान्तदेशिकगुरोरपि प्राचीनः । न तु सः ईशावास्यभाष्यकर्ता प्रकृतः । यतः 'श्रीदेशिकभाष्यमनुसृत्य बालानामपि सुबोधार्थं मयेयं ईशावास्यव्याख्या लिख्यते' इति एतद्भाष्यकर्त्रा आदौ व्यलेखि ।

अतः पूर्वोक्तयोः श्रीवत्साकमुन्योः अन्यतरेण एतद्भाष्यं प्राणायीति विमर्शकनिर्णयः । एवं एतद्भाष्यकर्त्रैव मुण्डकमाण्डूक्ययोरपि भाष्यं व्यरचि। मुद्रितपूर्वं प्रसिद्धं च तदपि । प्रसन्ना अस्य शैली मनोहरा सिद्धान्तग्रन्थिविमोचनक्षमा च पाठकानां विशिष्टाद्वैत-वेदान्तार्थनिरूपणपटीयसी ।

**4. पुरिशै श्रीरंगाचार्यः-** पुरिशै श्रीरंगाचार्यः तिरुपतिनगरवासी । महाविद्वानसौ क्रि.श. 1843 प्रभृति 1930 पर्यन्तमध्यकाले वर्तमानः अनन्दाण्पिळ्ळैगुरोर्वंशे अवतीर्णः । भारद्वाजगोत्रीयः । महामहोपाध्याय-कपिस्थलं-देशिकाचार्याद्याः अदसीयाः छात्राः । जयपुर-उदयपुरादिराज्यमहीपालाः एतत्सकाशात् अधिगत-श्रीवैष्णवदीक्षाः शिष्याः । महाविद्वान् पुरिशै श्रीनिवासाचार्यः वेदान्तवादावलीकर्ता अनन्दाळ्वान् स्वामी इत्याद्याः विद्यागुरवः । "कुर्वन्नेवेह कर्माणि जिजीविषेत्" इति रीत्या जीवितान्तम् अग्निहोत्रकर्मनिरत आसीदिति प्रसिद्धिः । व्याकरण-न्याय-वेदान्तेषु सुगम्भीरवैदुष्यशालिना अमुना 130 ग्रन्था रचिता इति वदन्ति । बहुषु विद्वत्सभासु वादप्रतिवादयोः मध्यस्थतया निर्णायकत्वेन वृत एषः । श्रीभाष्योपरि विरोधवरूथिनीनाम्ना परैः कृतस्य आक्षेपग्रन्थस्य खण्डनतया कुदृष्टिध्वान्तमार्तण्डनामा वादग्रन्थः तथा कार्याधिकरणवादः ईशावास्यभाष्यं क्रोडपत्राणि वादनक्षत्रमालिका इत्यादिग्रन्थाः केचिन्मुद्रिताः प्रसिद्धाः ।

**5. श्रीरामानन्दमुनिः** ग्रन्थेऽत्र मुद्रितस्य आनन्दभाष्यस्य सरससरलशैलीसम्पन्नस्य लेखकोऽयमाचार्यः प्रयागक्षेत्रे लब्धजन्मा काश्यामासीत् अध्यात्मतत्त्वप्रवचनं कुर्वाणः, इति

जायते । क्रिस्तशताब्देषु 1300-1500 मध्यकालोऽस्य स्थितिरिति सम्भाव्यते । श्रीरामचन्द्रस्य अपरावतार इति शिष्यैः सम्भावितवैभवोऽय गुरुवरः बोधायनश्रीवैष्णव-सम्प्रदायानुसारीति प्रसिद्धिः। विद्यागुरुः सन्न्यासाश्रमप्रदश्च अस्य श्रीराघवानन्दयतिवरः । एतत्सम्प्रदायनिष्ठाः श्रीराममेव परं दैवं मन्यमाना आराधयन्ति। वादीभपंचानन इति, वैराग्यवारिधिरिति च एषः विपुलां प्रशस्तिमविन्दत ।

प्रसिद्धाः गोस्वामितुलसीदासः मीराबाई इत्याद्याः बहवोऽस्य भक्ताग्रगण्याः शिष्याः। सर्वं भारतवर्षं अटाटयमानोऽसौ श्रीवैष्णवसम्प्रदायप्रचारं भूयसा व्यधित। ईशावास्यवदेव इतरासामपि उपनिषदां भाष्यं प्रणीतवानेषः ब्रह्मसूत्राणां भगवद्गीतायाश्च भाष्यमररचत् यदद्य तत्सम्प्रदायस्थैः परमप्रमाणतया अधीयते ।

6. श्रीगोपालानन्दयोगी - सुबोधिनीनाम्ना इह मुद्रितस्य एतदुपनिषद्भाष्यस्य रचयिता अयं मुनीन्द्रः क्रिस्तशताब्देषु 1781 प्रभृति 1852 पर्यन्तं मध्यकाले स्थितः । आजन्मनः योगशक्तिसम्पन्न इति तेन महिम्ना मूकमपि कंचित् बालं पारसीकं याचालं कृतवानिति च प्रसिद्धिः । शुक्लयजुर्वेदीय-माध्यन्दिनशाखायां ब्राह्मणकुले इडारदेशे टोरडाग्रामे लब्धजन्मा महाभागोऽयं लब्धसन्न्यासदीक्षः श्रीस्वामिनारायणसेवाहेवाकस्सन् वडतालक्षेत्रे समाधिमविन्दत । सकल-शास्त्रपारंगतप्रज्ञोऽयं योगाभ्यासेन भगवत्साक्षात्कारकारीति जनश्रुतिः ।

दशोपनिषदामपि सुललितमदसीयं भाष्यं समस्ति । गीताभाष्यं ब्रह्मसूत्रदीपिका अन्वितार्थ-प्रकाशिका (भागवतव्याख्या) भक्तिसिद्धिः - इत्यादयः बहवोऽस्य प्रबन्धाः पाण्डित्यप्रकर्षप्रख्यापकाः समुल्लसन्ति ।

* * * * *

# 6.न्यायसूचनी



* * * * *

# 7. संकेताक्षरसूचनी

| | |
|---|---|
| अग्निरहस्यम् | अग्नि.र. |
| अमरकोषः | अ.को. |
| अहिर्बुध्न्यसंहिता | अहिर्बु.सं. |
| आत्मसिद्धिः | आ.सि. |
| ईशावास्योपनिषत् | ई.उ. |
| ईशावास्योपनिषत् माध्यन्दिनपाठः | ई.उ.मा.पा. |
| ईशावास्योपनिषत् वेदान्ताचार्यभाष्यम् | ई.उ.वे.भा. |
| कठोपनिषत् | क.उ. |
| केनोपनिषत् | के.उ. |
| कौषीतक्युपनिषत् | कौ.उ. |
| चन्द्रालोकः | चन्द्रा. |
| छान्दोग्योपनिषत् | छा.उ. |
| तत्त्वसारः | त.सा. |
| तैत्तिरीयनारायणोपनिषत् | तै.ना. |
| तैत्तिरीयब्राह्मणम् | तै.ब्रा. |
| तैत्तिरीयसंहिता | तै.सं. |
| तैत्तिरीयारण्यकम् | तै.आर. |
| तैत्तिरीयोपनिषत् आनन्दवल्ली | तै.आ. |
| तैत्तिरीयोपनिषत् भृगुवल्ली | तै.भृ. |
| दक्षस्मृतिः | द.स्मृ. |
| नारदपरिव्राजकोपनिषत् | ना.प.उ. |
| नारायणोपनिषत् | ना.उ. |
| पाणिनीयगणसूत्रम् | पा.ग.सू. |
| पाणिनीयधातुः | पा.धा. |
| पाणिनीयसूत्रम् | पा.सू. |
| पातंजलयोगसूत्रम् | पा.यो.सू. |
| पुरुषसूक्तम् | पु.सू. |
| पूर्वमीमांसा | पू.मी. |
| प्रश्नोपनिषत् | प्र.उ. |
| बृहदारण्यकोपनिषत् | बृ.उ. |
| बृहदारण्यकोपनिषत् माध्यन्दिनपाठः | बृ.उ.मा.पा. |
| ब्रह्मसूत्रम् | ब्र.सू. |

| | |
|---|---|
| ब्रह्मसूत्राधिकरणम् | ब्र.सू.अधि. |
| भगवद्गीता | भ.गी. |
| भरद्वाजसंहिता | भर.संहि. |
| मनुस्मृतिः | म.स्मृ. |
| महाभारते अनुशासनपर्व | म.भा.अनु. |
| महाभारते उद्योगपर्व | म.भा.उद्यो. |
| महाभारते शान्तिपर्व | म.भा.शां. |
| महाभारते सभापर्व | म.भा.सभा. |
| महोपनिषत् | म.उ. |
| माघकाव्यम् | माघ. |
| मुकुन्दमाला | मु.मा. |
| मुण्डकोपनिषत् | मु.उ. |
| मैत्रायणीयसंहिता | मै.सं. |
| याज्ञवल्क्यस्मृतिः | या.स्मृ. |
| रामायणे युद्धकाण्डः | रा.यु. |
| रामायणे सुन्दरकाण्डः | रा.सु. |
| वररुचिवार्तिकम् | वा. |
| वराहचरमश्लोकः | वरा.च.श्लो. |
| वराहपुराणम् | वरा.पु. |
| वराहोपनिषत् | वरा.उ. |
| विष्णुधर्मः | वि.ध. |
| विष्णुपुराणम् | वि.पु. |
| विष्णुसहस्रनामस्तोत्रम् | वि.स. |
| विष्णुसहस्रनामस्तोत्र फलश्रुतिः | वि.स.फल. |
| वैकुण्ठस्तवः | वै.स्त. |
| वैराग्यपंचाशत् | वै.पं. |
| शतपथब्राह्मणम् | शत.ब्रा. |
| श्रीभाष्यम् | श्री.भा. |
| श्वेताश्वतरोपनिषत् | श्वे.उ. |
| सुबालोपनिषत् | सु.उ. |
| स्तोत्ररत्नम् | स्तो.र. |
| हरिवंशः विष्णुधर्मः | हरिवं.वि. |
| हारीतसंहिता | हा.सं. |

# 8. ग्रन्थसूचनी


## मूलग्रन्थाः

**दशोपनिषदः** यनमदलवेंकटाचार्येण सम्पादितम्, विवेककलानिधि प्रेस्, यनमदल - 1876, 1880 । आन्ध्रीलिपिः।

**अष्टोत्तरशतोपनिषदः** - आदिकलानिधि प्रेस्, मद्रास् - 1883 । आन्ध्रीलिपिः।

**द्वादशोपनिषदः** धर्माधिकारी चक्रवर्ति अय्यंगार्येण सम्पादितम्, विद्यातरंगिणी प्रेस्, मैसूर् - 1891 । आन्ध्रीलिपिः।

**अष्टोत्तरशतोपनिषदः** - श्रीरामचन्द्रशास्त्रिणा सम्पादितम्, मद्रास् - 1896 । ग्रन्थलिपिः ।

**अष्टोत्तरशतोपनिषदः** - सिद्धान्तिशिवशंकरशास्त्रिणा सम्पादितम्, बेंगलूरु - 1900 । आन्ध्रीलिपिः।

**दशोपनिषदः** - शात्तनूर् कल्याणसुन्दरशास्त्रिणा सम्पादितम् , वाजपेय कृष्णशास्त्री, मद्रास् - 1903 । आन्ध्रीलिपिः।

**अष्टोत्तरशतोपनिषदः** - सिद्धान्तिसुब्रह्मण्यशास्त्रिणा कृत ईशावास्यतात्पर्यसंग्रहः,महावाक्य-रत्नावली च स्तः, वाविल्लरामस्वामि अण्ड सन्स्, श्रीराम प्रेस्, मद्रास् - 1928 । आन्ध्रीलिपिः।

**अष्टाविंशत्युपनिषदः** वासुदेवलक्ष्मणशास्त्री पन्सीकर्, ईशोपनिषदारभ्य मुक्तिकोप-निषत्पर्यन्तम् । तुकाराम् जावूजी, निर्णयसागर प्रेस् , बम्बई - 1928 । देवनागरीलिपिः।

**ईशादिविंशदुत्तरशतोपनिषदः** - काव्यतीर्थनारायणरामाचार्यसम्पादितम् ईशादिमुक्तिकपर्यन्तं 120 उपनिषदः सन्ति । निर्णयसागर प्रेस् , बम्बई - 1948 । देवनागरीलिपिः ।

## भाष्यग्रन्थाः

**दशोपनिषद्व्याख्या - प्रतिपदार्थदीपिका** - भारद्वाजरामानुजाचार्यकृता, विवेककलानिधि प्रेस्, मद्रास् - 1875 । आन्ध्रीलिपिः।

**उपनिषत्षट्कम्** - धर्माधिकारी चक्रवर्ति अय्यंगार्येण सम्पादितम्, शंकरभाष्य, आनन्दगिरिटीका, वेदान्ताचार्यभाष्ययुक्तम् । विद्यातरंगिणी प्रेस् मैसूर् - 1893 । आन्ध्रीलिपिः ।

**ईशावास्योपनिषद्भाष्यम्** - आ.वि.नरसिंहाचार्यसम्पादितम् , वेदान्तदेशिकभाष्यं, कूरनारायण-भाष्यं तथा श्रीरंगाचार्यभाष्यं च । आर् वेंकटेश्वरसभा, आनन्दमुद्रणालयः, मद्रास् - 1914 । देवनागरीलिपिः।

**ईशावास्योपनिषद्भाष्यम्** - कूरनारायणविरचितम्, एस्.एस्.पाठक्महोदयेन सम्पादितम्, सम्पादककृत 'बालबोधिनीं' व्याख्यासहितम् , पूना - 1921 । देवनागरीलिपिः ।

**ईशाद्यष्टोपनिषद्भाष्यम्** - व.न. कृष्णमाचार्येण सम्पादितम्, ईशादिदशोपनिषन्मूलम्, ईशोपनिषदः वेदान्तदेशिकभाष्ययुक्तम्, वैदिकवर्धिनीसभा, उप्पिलि अप्पन् सन्निधिः - 1913 । ग्रन्थलिपिः ।

**ईशावास्योपनिषद्भाष्यम्** - वेदान्तदेशिकभाष्यम्, वीरराघवाचार्यकृत टिप्पणी च । तंजावूर् - 1933, 1970 । देवनागरीलिपिः ।

**ईशादिदशोपनिषद्भाष्यम्** - गोपालानन्दस्वामिकृतम् एम्बार् कृष्णमाचार्यसम्पादितम् समूलं विस्तृतप्रस्तावना तथा सुबोधिनी व्याख्या च । भट्टजयकृष्णबापूजी, निर्णयसागर प्रेस्, बम्बई - 1932 । देवनागरीलिपिः ।

**षडुपनिषद्भाष्यम्** यावल्लरामस्वामिशास्त्रिणा सम्पादितम्, ईशादिषडुपनिषन्मूलम्, ईशोपनिषदः वेदान्तदेशिकभाष्यम् च । मद्रास् - 1939 । आन्ध्रीलिपिः ।

**ईशकेनकठोपनिषदः** - उत्तमूर् वीरराघवाचार्यसम्पादितम्, ईशोपनिषदः वेदान्तदेशिकभाष्यम्, रंगरामानुजमुनिविरचितभाष्यसहिते केनकठोपनिषदौ । उभयवेदान्तग्रन्थमाला, मद्रास् - 1948 देवनागरीलिपिः।

**ईशावास्योपनिषद्भाष्यम्** - वेदान्तदेशिकविरचितम् प्रतिवादिभयंकरम् अण्णंगराचार्य-सम्पादितम्, सम्पत्कुमाराचार्य ति.अ. 38, सन्निधिवीथि, कांची, 1940 । देवनागरीलिपिः।

**ईशावास्योपनिषद्भाष्यम्** वेदान्तदेशिकविरचितम्, श्रीनिवासराघवाचार्यसम्पादितम् टि.टि.डि. प्रेस्, तिरुपति - 1948 । देवनागरीलिपिः ।

**ईशकेनकठप्रश्नमुण्डमाण्डूक्यतैत्तिरीयऐतरेयोपनिषदः** स्वामीवैष्णवाचार्यसम्पादितम्, रामानन्दविरचितमानन्दभाष्यसहितम्, रामानन्दवेदान्तप्रचारसमितिः, अहमदाबाद् 1967 । देवनागरीलिपिः।

**आचार्यभाष्यतात्पर्यम्** उत्तमूर् वीरराघवाचार्येण सम्पादितम्, वेदान्तदेशिकभाष्य तथा उपनिषदर्थसंग्रहश्च । श्रीनिवास प्रेस् , 1933 । देवनागरीलिपिः ।

**ईशादिपंचोपनिषदः** त्रिदण्डी श्रीमद्विष्वक्सेनाचार्यस्वामिसम्पादितम्, विशिष्टाद्वैतमतानुसारि प्रतिपदार्थोऽस्ति 'गूढार्थदीपिका' श्रीरामदेवाचार्यः, अच्युत मुद्रणालयः, काशी - 1952 । देवनागरीलिपिः ।

**ईशावास्योपनिषद्भाष्यम्** श्रीरंगाचार्यविरचितम्, पद्मावतीनिलय प्रेस्, श्रीपादनगर (तिरुपतिसमीपे) 1908 । आन्ध्रीलिपिः ।

**उपनिषदर्थसंग्रहः** उत्तमूर्वीरराघवाचार्यसम्पादितम् ईशावास्योपनिषदर्थसंग्राहकः अष्टश्लोकरूपः, आर् वेंकटाचारि, रामकृष्णमुद्रणालयः, मद्रास् -1977 । देवनागरीलिपिः ।

**ईशावास्योपनिषद्भाष्यम्** शंकराचार्यविरचितम्, वै. सुब्रह्मण्यशर्मणा सम्पादितम् अध्यात्मप्रकाशकार्यालयः, होळेनरसीपुर - 1931 । देवनागरीलिपिः ।

**ईशावास्योपनिषत्** - मूलं, शंकरभाष्यं, हिन्दीव्याख्यानं च । गीताप्रेस्, गोरखपुर - वि.सं. 2026 देवनागरीलिपिः ।

**ईशावास्योपनिषद्भाष्यम्** शंकराचार्यविरचितम् । मूलं टिप्पणी च स्तः । काव्यालय प्रकाशन, मैसूर् - 1972 । देवनागरीलिपिः ।

**ईशावास्योपनिषत् -** मूलं, शंकराचार्यभाष्यं, माध्यन्दिनपाठानुसारिमूलं, उपनिषत्सारः, अनुक्रमणिका च सन्ति, य. सुब्रह्मण्यशास्त्री, अध्यात्मप्रकाशालयः, बेंगलूर् - 1910 । देवनागरीलिपिः ।

**ईशावास्य इत्यादि उपनिषद्भाष्यटिप्पणी -** जयतीर्थभिक्षुविरचिता, मूलं, मध्वभाष्यम्, वादिराजजयतीर्थयोः टीके च सन्ति । श्रीमद्वादिराजीयग्रन्थप्रकाशनसमितिः, उडुपि - 1954 । देवनागरीलिपिः ।

**ईशावास्योपनिषत् -** महामहोपाध्याय आगाशे बोडस् राजारामशास्त्रिभ्यां सम्पादितम् । शंकरभाष्यं, आनन्दगिरिटीका, ब्रह्मानन्दसरस्वतीकृत 'ईशावास्यरहस्यं', शंकरानन्दकृत 'ईशावास्यदीपिका', रामचन्द्रपण्डितकृत 'ईशावास्यरहस्यविवृतिं' उव्वटाचार्यकृत 'ईशावास्यभाष्यं, आनन्दभट्टोपाध्यायकृत 'ईशावास्यभाष्यं' तथा अनन्ताचार्यकृत ईशावास्यभाष्यम् , पाठान्तरम्, टिप्पण्यश्च सन्ति । आनन्दाश्रम संस्कृतग्रन्थावलिः, पूना - 1934 । देवनागरीलिपिः ।

**दशोपनिषदः** उपनिषद्ब्रह्मयोगिकृतव्याख्यानमस्ति, अडैयार् लैब्ररि, थियसाफिकल् सोसैटि, मद्रास् - 1935 । देवनागरीलिपिः ।

## कर्णाटकभाषायाम् अनुवादितग्रन्थाः

**ईशावास्योपनिषत्** अनु.श्रीयतिराजसम्पत्कुमाररामानुजजीयर्, कन्नडभाषायां प्रतिपदार्थः अस्ति, यदुगिरियतिराजमठ, संस्कृतिप्रचारसभा, मेलुकोटे - 1956 ।

**ईशावास्योपनिषत्** अनु.स्वामि आदिदेवानान्दः, शंकरभाष्यानुसारि प्रतिपदार्थः तथा वेदान्तदेशिकभाष्यानुसारि विवरणम् । रामकृष्णाश्रम, मैसूर् - 1956 ।

**उपनिषत्** अनु.देवुडु नरसिंहशास्त्री, विस्तृतप्रस्तावनासहितदशोपनिषदां तात्पर्यमस्ति । कर्णाटकसंस्कृतिसाहित्यविभागः, बेंगलूरु - 1958 ।

**ईशावास्योपनिषत् -** अनु. एम्.ए.कृष्णस्वामि, एम्.ए.नारायणअय्यंगार्यकृत ईशोपनिषदः आंग्लानुवादस्य कन्नडानुवादः, नवभारतआश्रमट्रस्त, बेंगलूर् - 1970 ।

**याज्ञीयमन्त्रोपनिषत् (ईशावास्योपनिषत्)** अनु. बन्नजे गोविन्दाचार्य, मध्वभाष्यस्य कन्नड अनुवादः, श्रीमध्वमुनिसेवासंघ, उडुपि - 1917 ।

**ईशावास्योपनिषत् -** अनु. डि.वि. गुण्डप्प, विस्तृतावतरणिका, कन्नडछायापद्यानि, तथा द्वैताद्वैतविशिष्टाद्वैतमतानुसारि विवरणानि सन्ति । काव्यालयप्रकाशन, मैसूर् - 1970 ।

**उपनिषत्परिचय -** अनु. स्वामि सोमनाथानन्दः, प्रसारांग, मैसूर् विश्वविद्यालयः- 1968 ।

ईशावास्योपनिषत् (कन्नड अवतरणिका) अनु. अरैयर् श्रीरामशर्मा, कन्नडछायापद्यानि, प्रतिपदार्थः वेदान्तदेशिकभाष्य, कूरनारायणभाष्य, श्रीरंगाचार्यभाष्य, गोपालानन्दभाष्य, रामानन्द-भाष्याणां कन्नडानुवादः परिशिष्टम् च सन्ति । संस्कृतसंशोधनसंसत् , मेलुकोटे - 1983 ।

द्राविडी

ईशावास्योपनिषद्भाष्यविवरणम् - उत्तमूर् वीरराघवाचार्यविरचितम्, वेदान्तदेशिकभाष्यस्य तमिल्भाषान्तरम् , विशिष्टाद्वैतप्रचारिणीसभा, दि इण्डिया प्रिंटिंग् प्रेस्, मद्रास् - 1968 ।

उपनिषत्सारम् - उत्तमूर् वीरराघवाचार्यविरचितम्, ईशेत्यादि उपनिषदां सारः तमिल्भाषाया अस्ति । विशिष्टाद्वैतप्रचारिणीसभा, मद्रास् - 1970 ।

दशोपनिषत्तुक्कलिन् द्राविडप्रतिपदभाष्यम् - समूलं - द्राविडभाषायां प्रतिपदार्थसहितम् । मूलं च ग्रन्थलिप्यां द्राविडलिप्यां च स्तः,शंकररंगरामानुजभाष्यानुवादश्च स्तः ।

आंग्लभाषा

दि उपनिषत्स् म्याक्स्मुल्लर्, आंग्लानुवादः टिप्पण्यश्च, डोवर् पब्लिकेषन्स्, न्यूयार्क-1884 ।

ईशावास्योपनिषद्भाष्यम् - वेदान्तदेशिकविरचितम्, अनु. वरदाचारि.के.सि.तथा ताताचार्यः डि.टि., श्रीवेंकटेश्वर ओरियन्टल् इन्स्टिट्यूट्, तिरुपति, 1948 ।

ईशावास्योपनिषत् - डोनाल्ड-जि-ग्रूम्, आंग्लव्याख्यानमस्ति, सर्वसेवासंघप्रकाशन, भार्गवभूषण प्रेस्, वारणासि - 1964 ।

ईशोपनिषत् - अनु. प्रभुपाद, आंग्लभाषायां प्रतिपदार्थोऽस्ति, ऐ.एस्.के.सि.आन् प्रेस् जपान् - 1969 ।

ईशावास्योपनिषद् - अनु. सम्पत् अय्यंगार्यः, 6, चामराजपेट्, IV मेयिन्, बेंगलूर् - 18, 1970

रामानुज आन् दि उपनिषत्स् - एस्.एस्. राघवाचार्यः, भगवद्रामानुजाचार्याणां श्रीभाष्यादि-ग्रन्थोदाहृत उपनिषन्मन्त्राणामभिप्रायः आंग्लभाषायामस्ति । एम्. रंगाचार्य मेमोरियल् ट्रस्ट्, विद्या प्रेस् , मद्रास् - 1972 ।

गैड् टु दि उपनिषत्स् - एम्.पि.पण्डित्, ईशकेनोपनिषदोः क्लिष्टपदानां आंग्लभाषायाम् विवरणमस्ति । दीप्ति पब्लिकेषन्स्, ज्यूपिटर् प्रेस्, मद्रास् - 1972 ।

दि मेसेज् आफ् दि उपनिषत्स् - स्वामि रंगनाथानन्दः, भारतीय विद्याभवन, राणीभारती प्रेस्, मुम्बयि - 1971 ।

ईशावास्योपनिषत् एम् हिरियण्ण, मूलं, शंकराचार्यव्याख्यानं देवनागरीलिप्यां, शंकरव्याख्यानुसारि आंग्लानुवादश्च सन्ति । काव्यालयः, मैसूर् - 1972 ।

**ईश उपनिषत्** - अरबिन्दो, आंग्लानुवादः विमर्शश्च, अरबिन्दो आश्रम, पाण्डिचेरि - 1971 ।
**ईशावास्योपनिषत्** - अनु. स्वामि शर्वानन्द, अद्वैतमतानुसारि आंग्लभाषानुवादः अस्ति । रामकृष्णमठ, भारतीविजयं प्रेस् मद्रास् - 1974 ।
**दि टेन् प्रिन्सिपल् उपनिषत्स्** - पुरोहितस्वामी तथा डब्ल्यु.बि. ईट्स्, फेबर् अण्ड् फेबर् लिमिटेड्, लण्डन् - 1975 ।
**एयट् उपनिषत्स्** - स्वामीगम्भीरानन्दः, ईशाद्यष्टोपनिषदां मूलं देवनागरीलिप्यां, प्रतिपदार्थः विस्तृतव्याख्यानं च आंग्लभाषायां सन्ति, अद्वैताश्रमः, मायावरम् यूनियन् प्रेस्, कल्कत्ता - 1977
**उपनिषत्स् रिटोल्ड** - वि.हेच्. दाते, आंग्लभाषायां विवरणमस्ति, अलैड पब्लिकेषन्स् प्रवेट् लिमिटेड्, मुम्बयि - 1979 ।
**उपनिषत्स्** - के.पि. बहादूर्, हेरिटेज् पब्लिकेषन्स्, प्रिण्ट्वेल्स् प्रेस्, देहलि - 1979 ।
**ईशावास्योपनिषत्** - अनन्तरंगाचार्यः एन्.एस्. नवयुग पब्लिकेषन्स् 80, 18th क्रास्, I ब्लाक्, राजाजिनगर, बेंगलूर् - 10, 1984 ।

## हस्तलिखितप्रतयः तथा तालपत्राणि

### अडैयार् लैब्ररि, मद्रास्

ईशावास्योपनिषद्भाष्यम् - वेदान्तदेशिकः, ग्रन्थलिपिः, संख्या 29 J 16
**ईशावास्योपनिषद्भाष्यम्** - कूरनारायणः, ग्रन्थलिपिः, संख्या 33 F 6

### दि यूनिवर्सिटि म्यान्स्क्रिप्ट्स लैब्ररि, ट्रिवेण्ड्रम्

ईशावास्योपनिषद्भाष्यम् - वेदान्तदेशिकः, देवनागरिलिपिः, सम्पुटम् I संख्या 2297
ईशावास्यकारिका - गोभिलः, हस्तप्रतिः, देवनागरीलिपिः, सम्पुटम् I संख्या 2272
ईशावास्यरहस्यम् - ब्रह्मानन्दसरस्वति, हस्तप्रतिः, देवनागरीलिपिः, सम्पुटम् I संख्या 2273
ईशावास्योपनिषदर्थसंग्रहः - राघवेन्द्रयतिः, हस्तप्रतिः, देवनागरीलिपिः, सम्पुटम् I संख्या 2292
ईशावास्योपनिषद्भाष्यटिप्पणी - शिवानन्दयतिः, तालपत्रम्, मलयाळम्, सम्पुटम् I संख्या 2308
ईशावास्योपनिषद्भाष्यटीका - सत्यप्रज्ञभिक्षुः, तालपत्रम्, नन्दिनागरी, सम्पुटम् I संख्या 2310
ईशावास्योपनिषद्भाष्यटीकार्थः हस्तप्रतिः, देवनागरीलिपिः, सम्पुटम् I संख्या 2311

### गवर्न्मेन्ट ओरियन्टल् म्यान्स्क्रिप्ट्स लैब्ररि, मद्रास्

ईशावास्योपनिषद्भाष्यम् - वेदान्तदेशिकः, ग्रन्थलिपिः, संख्ये D-319, R-3192

## सेन्टरल् लैब्ररि, बरोडा

ईशावास्योपनिषद्भाष्यम् - कूरनारायणः, देवनागरिलिपिः, सङ्ख्या 3917

## सरस्यतिमहल् पुस्तकालयः, तंजायूर्

ईशावास्योपनिषद्दीपिका - शंकराचार्यः, तालपत्रम्, सम्पुटम् III, तेलुगुलिपिः, संख्या 1441

ईशावास्योपनिषद्दीपिका - शंकरानन्दः, तालपत्रम्, तेलुगुलिपिः, सम्पुटम् III 1442

ईशावास्योपनिषद्भाष्यटिप्पणम् - शिवानन्दयतीशः, हस्तप्रतिः, देवनागरी, सम्पुटम् III 1442

ईशावास्योपनिषद्भाष्यविवरणम् - जयतीर्थभिक्षुः, हस्तप्रतिः, देवनागरी, सम्पुटम्, III, 1576

## भण्डारकर् ओरियण्टल् रिसर्च इन्स्टिटयूट्, पूना

ईशावास्योपनिषद्भाष्यम् - भाष्यकारमहीधरः, हस्तप्रतिः, देवनागरी, संख्या 1775

ईशावास्योपनिषद्भाष्यटीका -शंकरभाष्यम्,आन्नदगिरिटीकासहिता, हस्तप्रतिः, देवनागरी,155

संहितोपनिषत्टीका - शंकरभाष्यम्, तालपत्रम्, देवनागरी, संख्या 15

वाजसनेयसंहिताटीका - उव्वटभाष्यम्, तालपत्रम्, देवनागरीलिपिः संख्या 25

ईशावास्योपनिषत् - मूलम्, तालपत्रम्, देवनागरीलिपिः

अस्यामुपनिषदि पाठभेदार्थं स्वीकृतग्रन्थानां संकेतः एवं दत्तः ।

| | ग्रन्थनाम | संकेतः |
|---|---|---|
| 1) | ईशाद्यष्टोपनिषद्भाष्यम् - य.न. कृष्णमाचार्यसम्पादितम्, वैदिकवर्धिनीसभा, उप्पिलि अप्पन् सन्निधिः - 1912 । ग्रन्थलिपिः । | क |
| 2) | ईशावास्योपनिषद्भाष्यम् वेदान्तदेशिकग्रन्थमाला, कांची - 1940 । देव - नागरीलिपिः। | ख |
| 3) | उपनिषत्षट्कम् - धर्माधिकारि चक्रवर्तिअय्यंगार्यसम्पादितम्, विद्यातरंगिणी प्रेस्, मैसूर् - 1893, तेलुगुलिपिः । | ग |

** ** ** ** **